श्रीबालकृष्णो विजयते।

श्रीभागवतपीयूषसमुद्रमथनक्षमो विजयते।

श्रीमद्वैश्वानरावतारशुद्धाद्वैतनिर्गुणभक्तिमार्गप्रवर्त्तकाचार्य-
चक्रचूडामणिजगद्गुरुश्रीवल्लभाचार्यचरणविरचिते

# तत्त्वार्थदीपनिबन्धे

## तृतीयं
## श्रीभागवतार्थप्रकरणम्।

दशदिगन्तविजयिगोस्वामिश्रीपीताम्बरात्मजश्रीपुरुषोत्तम-
चरणैः प्रणीतया योजनया समलङ्कृतम्
कठिनांशविवेचनेन प्रसाधितञ्च।



## (द्वितीयो भागः)

श्रीमद्गोस्वामिकुलभूषण-विद्यानिधि-श्री६श्रीव्रजरत्नलालजी-
महाराजचरणानां निर्देशेन प्रबन्धबलेन च

श्रीमदाचार्यचरणपादपद्मपरागगृहयालुना
चीमनलालशास्त्रिणा
'साहित्यभूषण' 'शुद्धाद्वैतरत्ने'त्यनेन
संशोध्य प्राकाश्यं नीतः।
(मोटामन्दिर-सुरत)

न्यो. १-४-०.

'श्रीगोविन्दजी डाह्याभाई' इत्यनेन स्वकीये 'अनाविलबन्धु'नाममुद्रणालये
'बुरानपुरीभागल' 'भाजीवालीपोळ'-सुरते मुद्रितम्। हरिशङ्करतनुजनुषा
चीमनलालशास्त्रिणा सुरतनगरे बृहन्मन्दिरस्थश्रीबालकृष्णशुद्धाद्वैत-
महासदसः कार्यालयात् प्रकाशितम्।



ग्रन्थप्राप्तिस्थलम्-श्रीबालकृष्ण-शुद्धाद्वैत-महासभा-

मन्त्रिणौ।

चीमनलालशास्त्री

ईश्वरलाल म. शाह

मोटामन्दिर सुरत (*SURAT*)




॥ श्रीबालकृष्णो विजयते ॥

# द्वितीयभागस्य निवेदनम् ।

श्रीमद्गोकुलनाथकृपयास्मिन्नेव हायनेऽन्नकूटोत्सवावसरे श्रीमद्भागवतार्थनिबन्धस्य प्रकाशावरणभङ्गालङ्कृताङ्गः पूर्वभागः श्रीमद्भागवततत्त्वारसबुभुत्सूनां करकमले आसीन्निवेदित इति विदितचरमेव मनीषिणां भवताम् । तस्यैवायमपरो भागः पञ्चमस्कन्धशेषादारभ्य द्वादशस्कन्धान्तः कारिकातद्योजनाभ्यां विभूषितस्तत्कठिनांशविवेचनेन प्रसाधितश्च साम्प्रतं भवतां पुरतो निवेद्यते । अतः खलु द्वादशस्कन्धपूर्त्याऽखण्डानन्दाकारद्वादशाङ्गपूर्णपुरुषोत्तम इव सर्वोद्धृतिकरणार्थं रासोत्सवे प्रादुर्भवति श्रीभागवततत्त्वार्थप्रदीपः सपरिकरः ।

प्रथमभागाविष्कृतौ बहवः प्रत्यूहा उदपद्यन्त । अस्मिन्नपरभागसंस्कृतौ श्रीवैश्वानरवाक्पतीनामनुकम्पावशात् सर्वत आनुकूल्यमाभवम् ।

श्रीमद्वल्लभवाङ्मयप्रचारोत्कमनोभिर्गो०श्री ६ श्रीव्रजरत्नलालजीमहाराजचरणैर्मदीयकार्यान्तरातिपातान् दूरीकृत्यैतदर्थमेव नियुक्तोऽहं येनानन्यवृत्तिसापेक्षसंशोधनमेकतानेन विधातुमपारयम् । मद्भक्षु प्राकट्ये इदं प्रधानं कारणम् । एवञ्च विद्याविलासिनो गोस्वामिचरणाः श्री ६ श्रीवल्लभलालजीमहाराजचरणाः पञ्चमशेषादारभ्य द्वादशस्कन्धान्तां कारिकातद्योजनायाः प्रतिकृतिं ( प्रेसकोपी ) कृपयाऽददु । झटिति प्राकट्ये ते भवन्तोपि हेतुः, कारिकापेक्षया योजनायाः प्रतिकृतिस्तु शुद्धतरासीदतो भवतामुपकारं वारं वारं स्मरामि । एवञ्च निबन्धकठिनांशविवेचनस्य प्रथमद्वितीयस्कन्धस्यविभागो भगवदीयतेलीवालामहाशयै प्रकाशित आसीदेव । तदग्रे प्रथमभागे तन्निवेशनार्थं गवेषितमपि तन्नाप्नवम् । परन्तु कल्पिते प्रथमभागे मोहमयीस्थमङ्गलदासजीभगवदीयः सोत्साहं समग्रमिदं विवेचनमालिख्य प्राहिणोत् । अतः सर्वथा धन्यवादार्हः स भावुको भागवतः । यत्परिश्रमेण कठिनांशक्लेशमन्तरेण अध्येष्यते जनः ।

शोधनादिकर्मणि "प. भ. ईश्वरलाल मगनलाल शाह" "प्रभुलालभाईमास्तर" इत्यभिधेयाः सुहृदो मम परिश्रमं लघूकुर्वन्ति स्म इति दिष्ट्या तेपि धन्याः। श्रीगोपीजनवल्लभ-चरणसेवननिरतेन चीमनलालभगवदीयेन मुद्रणव्ययप्रदानरूपां पितृप्रतिज्ञापूर्त्तिं सम्पाद्य महान् उत्साहोऽदर्शि। दैवसम्पत्तेरिदमेव लक्षणं यत्तस्या विनियोगोऽलौकिकभगवत्कार्ये एव स्यात्।

निवेदनेनैक आन्तरनिर्वेदो मां मुखरीकरोति, कोटिपरिमितवैष्णवसङ्ख्याकेस्मिन् सम्प्रदाये मुद्रितसंस्कृतग्रन्थानां व्यवस्थितप्रचारो न भवति। विना मूल्यं वितरणं तु प्रति पुस्तकं कुर्मः एव, तत्र बहूनि पुस्तकानि व्ययीभवन्ति। अवशिष्टानां बहुकालं रक्षणं कर्तुमपि न पारयते। क्वापि तद्दोषः कीटादिभिर्न विनश्येदितीतस्ततः सूक्ष्मेक्षिकया कोभीक्ष्णं पश्येत्।

श्रीमद्भागवतार्थनिबन्धस्याराादुपकारकाश्चतु.पञ्चग्रन्थाः प्रकाशनयोग्या वर्तन्ते। अध्यायार्थः, भक्तिचिन्तामणिः, श्रीलालुभट्टानां गो. श्रीकल्याणरायाणाञ्च लेखौ, प्रक्षिप्ताध्याय-समर्थनं निबन्धसार इति। भागवतप्रकरणविभागस्तु गो.श्री ६ श्रीव्रजरत्नलालजीमहाराज-चरणैर्मुद्रयित्वा प्राकाश्यं नीतः। निबन्धः खलु प्रकृत्या गभीरहार्दोऽस्ति, नहि टीकामन्तरेण प्रेक्षावन्तोप्यवगन्तु प्रभवन्तीति प्राक्तनमैतिह्यं मनसिकृत्य यावत्समासाद्यसाहित्यं प्रकटी-कर्तुमीहन्ते न्यायकोविदा गो.श्री.६ श्रीव्रजरत्नलालजीमहाराजचरणाः। श्रीकल्याणरायाणां श्रीमती टिप्पणी विस्तृता सती रसिकजनानन्दजनयित्री श्रीमदाचार्यवाचां विशयनिरसन-पूर्वकतद्धार्दबोधकर्त्री विराजते। सा सपदि स्वतन्त्रतयाविर्भावमर्हति।

प्रकरणाध्यायार्थसङ्कलना सारल्येनेदमित्थतयावगता भवेदतो नूतनप्रणाड्या भागवतार्थामृतार्णवस्य सोपानसरूपाणि कोष्टकानि निर्मायात्र निवेद्यते पुरतो भवतां प्रेक्षावताम्।

क्षमन्तु यच्छोधितमन्यथा मया स्वदृष्टिदोषादनभिज्ञभावात्।
कृपालवो भागवताः सदा मां फलं हि 'कृष्णेस्तु' निवेदितं तत्॥

रासोत्सवः
सं. १९९१

श्रीवल्लभपादपद्मपरागरञ्जितो
भवदीयः
चीमनलालशास्त्री

श्रीबालकृष्णो विजयते ।

परमभगवदीयश्रीबालकृष्णचरणसेवनपरायणः

# श्रीयुत शेठजी डाह्याभाई वेरागीवाला–सुरत.



जन्मदिवस सं १९१४ ज्येष्ठशुक्ला ४

गोलोकवासवासर सं १९८६ आश्विनशुक्ला ७ सोम,

येन भगवत्सेवापरायणेन सम्पूर्णमसाहित्यश्रीमद्भागवतार्थनिबन्धप्रकाशने

द्रव्यसाहाय्यदानं प्रतिज्ञातम् ।

मॉं अनाविल ब॰धु ' प्रिन्टिंग प्रेस सुरानपुरी मागल सुरत.

श्रीकृष्ण ।

# श्रीभागवतार्थामृतार्णवस्य

# सोपानानि

## प्रथमस्कन्धे-अधिकारिनिरूपणम्-श्रोता-वक्ता




### हीनाधिकारी-प्रकरणम्-१




### मध्यमाधिकारी-प्रकरणम्-२




### उत्तमाधिकारी-प्रकरणम्-३

पादौ-हस्तौ-सक्थौ-बाहू-स्तनौ-हृदय-शिर इति श्रीपुरुषोत्तमस्य द्वादशाङ्गानि, अङ्गी श्रीपुरुषोत्तमश्च

अध्यायाः—७X१९

## द्वितीयस्कन्धे-साधननिरूपणम्




प्रथमं साधनं—तत्त्वध्यानं-प्रकरणम्-१
स्थूलध्यानम्
अ०-१
सूक्ष्मध्यानम् (स्वरूपध्यानम्)
अ०-२


द्वितीयसाधनं – हृत्प्रासादः प्रकरणम्-२
अ० ३
श्रोतुः हृत्प्रासादः
अ० ४
वक्तुः हृत्प्रासादः


तृतीयसाधनं-मननम्-प्रकरणम्-३
उत्पत्तिः अ० ५-६-७
उपपत्तिः अ० ८-९-१०
अनित्ये जननम्
परिच्छिन्ने समागमः
नित्ये-अपरिच्छिन्ने प्राकट्यम्
आवेशः
अवतारः
आशंका
उत्तरम्
फलम्


तृतीयस्कन्धे-लौकिक-अलौकिकसर्गनिरूपणम्-अ० ३३
बन्धसृष्टिः
(अ० १×१९)
मुक्तसृष्टिः
(अ० २०×३३)


बन्धसृष्टिः
गुणातीतः
प्र० १
(अ १×६)
सगुणसृष्टिः
प्र० २
(अ. ७-८-९)
कालसृष्टिः तत्त्वसृष्टिः
प्र० ३
(अ. १०-११)
मुक्तजीवसृष्टि
प्र० ४
(अ. १२)
मुक्तजीवसृष्टिः(उपोद्घातः)
प्र० ५
(अ. १३×१९)

**मुक्तसृष्टिः**

- प्र० ६ — तत्त्वमुक्तिः — अ २०×२४
- प्र० ७ — कालमुक्तिः — अ २५
- प्र० ८ — गुणातीतमुक्तिः — अ २६-२७
- प्र० ९ — सगुणमुक्तिः — अ. २८
- प्र० १० — जीवमुक्तिः — अ २९-३३

**तृतीयस्कंधे मैत्रेयमतानुसारी प्रकरणविभागः**

- प्र० १ — अधिकारनिरूपणम्
- प्र० २ — सर्गनिरूपणम्
  - गुणातीतः, सगुणः, काल, तत्त्वम्, मुक्तः
  - उभयोः प्रकरणयोः अ० १×१२
- प्र० ३ — उपपत्तिः
  - मोक्षः — अ०१३
  - बन्धः — अ०१४×२०
- प्र० ४ — फलम्
  - भक्तिः
    - पुंमुक्तिः — अ०२१-२४
    - सफलामुक्तिः — अ०२५
  - सांख्यम्
  - योगः
  - (सांख्यम्, योगः) अ०२६-२७
    - योगः — अ०२८-२९
    - वैराग्यम्, सर्वनिर्धारः, मुक्तिः — अ ३०-३३

**चतुर्थस्कन्धे-विसर्गनिरूपणम्**

- धर्मप्रकरणम् (अ० १×७)
- अर्थप्र० (अ० ८×१२)
- कामप्र० (अ० १३×२३)
- मोक्षप्र० (अ० २४×३१)

**धर्मः**

- अग्निष्टोमः, उकथ्यः, षोडशी, अतिरात्रः, अप्तः, अर्याम, वाजपेयः — अ० १×७

**अर्थः**

- साधनतः — अ० ८
- साध्यतः — अ० ९
- मनूपदेशतः — अ० १०
- दोषनिवृत्तितः — अ० ११
- फलप्राप्तितः — अ० १२




मोक्षेवान्तरप्रकरणे द्वे




## पञ्चमस्कन्धे स्थानलीलानिरूपणम् ।

अध्यायसङ्ख्यायां स्थानस्य रूढार्थतः प्रथमपक्षः




अध्यायसंख्यायां यौगिकार्थतः द्वितीयः पक्षः









## षष्ठस्कन्धे-पुष्टिनिरूपणम्।




*रूपेण मोक्षदः प्रोक्तः रसेनानन्ददायकः। गन्धेन भक्तिदः प्रोक्तः स्पर्शेनाखिलतापनुत्॥
मनोहरस्तु नादेन योगेनात्मप्रवेशदः। कालमोक्षप्रदो श्रितः श्यामो सर्वसुखप्रदः॥
हीनभावाद् ..... केवलः सकलार्थदः। प्रीतो योगप्रदः प्रोक्तो भिन्नो मृत्युप्रदः स्मृतः॥
यथास्थितो ज्ञानदश्च स्नेहात्मदयो भवेद् ध्रुवम्॥

स्कन्धार्थविचारे पुष्टिः कालादिबाधकरूपा




## सप्तमस्कन्धे-ऊतिः-कर्मवासनानिरूपणम्



कर्म

- आध्यात्मिकम् अ० ५
  - अविद्याया पञ्चपर्वाणि अथवा पञ्चाधिष्टानादीनि
- आधिदैविकम् अ० ५
  - अविद्याया पञ्चपर्वाणि अथवा पञ्चाधिष्ठानादीनि
- आधिभौतिकम् अ० ५
  - अविद्याया पञ्चपर्वाणि अथवा पञ्चाधिष्ठानादीनि

## अष्टमस्कन्धे मन्वन्तर–सद्धर्मनिरूपणम्

- अ० ४ हरिसस्मरणम्
  - धर्म
  - अर्थ
  - काम
  - मोक्ष
- अ० १० दानम्
  - सत्वसत्वम्
  - सत्वरज
  - सत्वतम
  - रजसूसत्वम्
  - रजोरज
  - रजस्तम
  - तमसत्वम्
  - तमोरज
  - तमस्तम
  - निर्गुणम्
- अ० ९ स्वोक्तनिर्वाह
  - दानोक्तप्रथमतो नवप्रकारा
- अ० १ मत्स्यचरित्रम्

## नवमस्कन्धे ईशानुकथानिरूपणम्

कथा

- हरे
- तदनुवर्तिनाम्

ईशानुकथायां फलम्
अ० | २४

- दुःखनिवारणम्
  - सगुणतदनुवर्तिद्वारा अ ९
  - ज्ञानि–तदनुवर्तिद्वारा अ १
  - भगवच्चरित्रद्वारा
    - ज्ञानम् अ १
    - कर्म अ० १
    - भक्ति अ १
- सुखप्रापणम्
  - तदनुवर्तिद्वारा अ० १०
  - भगवत अ० १

ईशानुकथासु सूर्यवंशस्य द्वादशाध्याया चन्द्रवंशस्य द्वादशाध्याया । अथवा त्रयोदशैकादशाध्याया ज्ञेया. ।

# दशमस्कन्धे निरोधनिरूपणम्

- जन्मप्रकरणम् (१)
  - अ० १ व्यूहप्राकट्यम्-वासुदेवः विषय-हेतुता
  - अ० २ संकर्षण उद्यम
  - अ० ३ प्रद्युम्नः रूपान्तरस्वीकारः
  - अ० ४ अनिरुद्ध मायातो नाशम्
- तामसम् (२)
  - प्रमाणम् * अ० ७ (५×११)
  - प्रमेयम् * अ० ७ (१२×१८)
  - साधनम् * अ० ७ (१९×२५)
  - फलम् * अ० ७ (२६×३२)
- राजसम् (३)
  - प्रमाणम् *अ०७ (३३×३९)
  - प्रमेयम् *अ०७ (४०×४६)
  - साधनम् *अ०७ (४७×५३)
  - फलम् *अ०७ (५४×६०)
- सात्त्विकम् (४)
  - प्रमेयम् *अ०७ (६१×६७)
  - साधनम् *अ०७ (६८×७४)
  - फलम् *अ०७ (७५×८१)
- गुणप्रकरणम् (५)
  - ऐश्वर्यम् ८२
  - वीर्यम् ८३
  - यशः ८४
  - श्री ८५
  - ज्ञानम् ८६
  - वैराग्यम् ८७

* महाध्यायेषु ऐश्वर्यम् (१) वीर्यम् (२) यश: (३) श्री (४) ज्ञानम् (५) वैराग्यम् (६) धर्मो (७) इति सप्तसङ्ख्याक्रमो ज्ञेयः

(१) चतुर्भिश्च (२) चतुर्भिश्च (३) चतुर्भिश्च (४) त्रिभिस्तथा । (५) षड्भिर्विराजते योसौ पञ्चधा हृदये मम ।

## एकादशस्कन्धे मुक्तिनिरूपणम्

- मुक्तिः
  - जीवमुक्तिः
    - अविद्यानाशतः विद्याप्राप्तिश्च अधिकारी• जनकः (अध्यायाः १×५)
      - ब्रह्मभावमुक्तिः
        - ज्ञानतः
          - अ० १ — वैराग्यम्
          - अ० २ — सांख्यम्
          - अ० ३ — योगः
          - अ० ४ — तपः
          - अ० ५ — भक्तिः
    - तत्त्वातिक्रमणतः अधिकारी- उद्धवः अध्यायाः ६×२९
      - सायुज्यरूपामुक्तिः
        - भक्तितः
  - ब्रह्ममुक्तिः
    - अ० ३० / अ० ३१
      - ब्राह्मणः- अहन्ताममतारूपमनुष्यनाशस्य त्यागः । स च अहन्ताममतयोः नाशकः

## द्वादशस्कन्ध आश्रयलीलानिरूपणम्




### इति श्रीनिबन्धानुसारी प्रकरणाध्यायार्थविभागः

निबन्धटीकासरणिं विदित्वा पीयूषपानं रसिकाः प्रकुर्युः ।
सोपानपन्था विहितः प्रवेष्टुं लीलार्णवे भागवते निजेन ॥ १ ॥

श्रीकृष्णाय नमः।
श्रीगोपीजनवल्लभाय नमः।
श्रीमदाचार्यचरणकमलेभ्यो नमः।

श्रीभागवतप्रतिपदमणिवरभावांशुभूषितमूर्तिर्विजयते।

श्रीमद्वल्लभाचार्यचरणप्रकटिततत्त्वार्थदीपनिबन्धान्तर्गतं तृतीयं

# श्रीमद्भागवतार्थप्रकरणम्।

(श्रीगो० श्रीपुरुषोत्तमचरणप्रणीतयोजनाव्याख्यासमेतम्)
(निबन्धकठिनांशविवेचनसंयुतश्च)

## अथ पञ्चमस्कन्धनिबन्धस्य

एकविंशाध्यायः।

अतः प्रसङ्गिनं प्राह मानतो ह्यतिदेशतः।
अन्ते सुसन्धितं मध्ये शून्यमेवंविधं तु तत् ॥१३६॥

---

श्रीबालकृष्णो विजयते।

श्रीदशदिगन्तविजयिश्रीगो.श्री ६ श्रीपुरुषोत्तमचरणविरचिता
पञ्चमस्कन्धनिबन्धस्य योजना।

निजकृतिपरिपाकव्याकुलीभूतबुद्धिः
क इह खलु विभूनामाशयं वेत्तुमीष्टे।
तदपि करुणयाऽस्मन्नाथ नः खेदहारि-
स्वपदनखविधुं दृक्पानपात्रीकुरुष्व ॥ १ ॥
तत्किरणैर्निजसरणिं दर्शय हार्दं च कर्षय ध्वान्तम्।
योजय देव निबन्धं जाने येनार्थसम्बन्धम् ॥ २ ॥

दिवो मण्डलस्य मानं निरूपयन्ति—मानतो ह्यतिदेशत इति। मूले 'दिवो मण्डलमि'त्यनेन स्वर्लोक उच्यते, 'उरःस्थलं ज्योतिरनी-

स्वरादिलोकसंस्था तु पातालादेरिवेरिता।
राशिमध्यगता भूमिर्न्यूनाधिक्येन वर्त्तते ॥१३७॥
ज्योतिश्चक्रस्य तु गतिः सूर्येणेति निरूप्यते।
ब्रह्मकल्पे तथेत्येके मानसादेस्तु सम्भवात् ॥१३८॥

---

कमस्ये'ति 'दिवो मूर्द्धनी'त्यादिकथनात्। अन्तरिक्षन्तु नाभिसरोरूपं नभस्तलं स एव भुवर्लोकः, 'भुवर्लोकस्य नाभित' इति द्वितीये वाक्यात्। तद्धि मानतः पञ्चाशत्कोटियोजनसङ्ख्यातमेव। गद्ये 'यथा द्विदलयोर्निष्पावादीनामि'त्यतिदेशादित्यर्थः। स्वरूपमाहु–अन्त इत्यादि। 'ते अन्तरेणान्तरिक्षं तदुभयसन्धितमि'ति गद्ये कथनात्। गद्ये 'तदुभयसन्धितमि'ति तयोर्भूर्लोकस्वर्लोकयोर्द्यावापृथिव्योः सन्धितं सम्बद्धम्। तथा च तस्य भूर्लोकनिकटभागस्तत्स्थितानां भोग्यो द्युलोकनिकटतत्स्थानाम्, तद्वक्ष्यति चतुर्विंशे 'अधस्तात्सवितुरि'त्यादिभि। एवं सति पक्षिमचारयोग्यो भाग शतयोजनात्मको भूर्लोकवासिभोग्य उपरितनः सिद्धादिभवनमारभ्य द्युलोकस्थभोग्यः शेषः सप्तषष्टिसहस्रमितोऽन्तरिक्षनामा भुवर्लोकवासियक्षादिभोग्यस्तेन भूर्लोकाच्चन्द्रचारपर्यन्तो द्विलक्षयोजनात्मको भुवर्लोकः पञ्चाशत्कोटिविस्तीर्ण इति सिद्ध्यतीत्यर्थः ॥ १३६ ॥

नन्वत्र भूमण्डलायामसन्निवेशादिकं राज्ञः प्रश्नानुरोधेन विराड्व्यानार्थमुच्यते। अतः स्वर्लोकादिसंस्थानमप्यवश्यं वक्तव्यमेवेति तत्कुतो नोच्यत इत्याकाङ्क्षायामाहुः–स्वरादीत्यादि।

तुः शङ्कानिरासे, पातालादिविवरेष्वयुतयोजनान्तरस्यायामविस्तारस्य वक्ष्यमाणत्वात्। तेनैव सा कथिता। तथा च तेषां दूरनैकट्यविभागो निबिडभागो मार्गभागश्च तत एव ज्ञातुं शक्य इति विराड्व्यानस्य तावतैव सिद्धिरित्यतो नोच्यत इत्यर्थः। ननु 'स एष उदगयने'त्यादिग्रन्थस्य किं प्रयोजनं, राज्ञाऽपृष्टत्वात्। न च 'कालस्याऽनुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपी'तिद्वितीयस्कन्धे प्रश्नात्तदुत्तरत्वेनेदमितिवाच्यम्, 'स कालः परमाणुर्व' इत्यादिना तृतीयस्कन्ध एव तस्योत्तरितत्वादित्यत आहुः–राशीत्यादि। तुरप्यर्थे, अस्मिन्नध्याये निरूप्यमाणेन सूर्येण, एतदुभ्य निरूप्यत इत्यर्थः। मतान्तरेण तत्प्रयोजनमाहुः–ब्रह्मेत्यादि। तुः प्रयोजनशङ्कानिरासे। द्वितीयस्कन्धे ब्रह्मकल्पो राजसन्देहनिरासायोक्त इति मानसोत्तरादिकं च सर्वं प्रियव्रतादिकृतं तत्रैवेति प्रसङ्गात्तत्रत्यमिदमप्युच्यत इत्यर्थः ॥१३८॥

सूर्यस्य तु पृथग्ज्ञानमेवमत्र विचारितम्।
कालसूत्रमिहैकं हि रथयुग्मे यथोचितम् ॥ १३९ ॥
सूक्ष्म एव स्थितः सूर्यः स्थूलस्यापि प्रवर्त्तकः।
सारथिस्त्वविशेषेण मूर्त्तिभेदेन वा तथा ॥१४०॥

---

सिद्धान्तेनाहुः–सूर्यस्येत्यादि। तुः पूर्वोक्तपक्षनिरासे, 'पाद्मं कल्पमथो शृण्वि'ति मध्ये उक्तत्वात्तस्यापि वक्तुमुचितता। तथा च तृतीयेऽहोरात्रादीनामुक्तत्वेऽपि पक्षस्य पञ्चदशदिनात्मकत्वेन कथनात्तदादिवृद्धिह्रासहेतुज्ञानाभावे प्रत्यक्षविरोधेन पुनः सन्देहः स्यादिति तन्निवृत्त्यर्थं तद्धेतुभूतदिवसरात्रिवृद्धिह्रासज्ञापनाय, यत्रैते राशयस्तस्य ज्योतिश्चक्रस्यापि पूर्वाध्याये श्लो. ३० 'यदुपरिष्टात्सूर्यरथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमती'त्यनेनोक्ताया गतेर्ज्ञापनाय च तदुक्तिरिति सूर्यस्य पृथगेव ज्ञानमत्र विवक्षितमिति तदेवात्र मुख्यतया विचारितमित्यर्थः। अत्र 'स एष' इति गद्यविवरणरूपं 'यदा मेषे'त्यादिगद्यम्। तस्य सङ्ग्रहो 'यावद्दक्षिणायनमि'त्यादीति ज्ञेयम्। राशिमध्यगतभूमेर्न्यूनाधिकत्वं सूर्यभोग्यनक्षत्राक्रान्तदिवससङ्ख्याभिर्ज्ञेयम्। ज्योतिश्चक्रगतेर्भेदस्त्वग्रिमाध्याये मूल एवानुमानेन बोधनीय इति न कोऽपि शङ्कालेशः। ननु पूर्वाध्याये सूर्यरथस्य सम्वत्सरात्मकं चक्रं मानसोत्तरोपरि भ्रमतीत्युक्तम्, स तु गिरियुतोच्छ्रायो लक्षोच्छ्रायान्मेरोरतिनीचैस्ततस्तदुपरि भ्रमन् रविरथोऽपि सहस्रोच्छ्रायो द्विगुणो वा भवेत्, न त्वधिकस्तथा सति तस्यापि नीचैस्त्वान्मेरुपरि कथं दिनरात्रिव्यवस्था। किञ्च, तस्य गत्याऽस्मदादिदिनरात्र्योर्यथा न्यूनाधिकभावस्तथाऽहोरात्रस्य नास्तीति कथं वैषम्यम्, गतेरैक्यादित्याशङ्कायां द्विविधगतिं तत्प्रयोजकस्य कालोपाधित्वं चोपपादयन्ति सार्द्धैः षड्भिः–कालेत्यादि। कालस्य सूत्रत्वं तृतीये वक्तव्यम्। 'अव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानामि'त्यनेन। सूर्यस्य हि स्थूलं सूक्ष्मं चेति रथद्वयमेकैकचक्रम्। इहास्मिन् रथयुग्मे। हि यतो हेतोः। कालसूत्रं कालात्मकं सूत्रम्, यथोचितं यादृगात्यर्थं यथापेक्षितं तदर्थं तत्र तथास्थितमेकम्. अत उभयोरपि कालोपधित्वम्। हिरग्रेऽपि सम्बद्ध्यते। यतो हेतोः सूक्ष्म एव रथे स्थितः सूर्यः स्थूलस्यापि रथस्य नियामकतया प्रवर्त्तकः। तु पुनः सारथिस्त्वोऽविशेषेणकारूपेण मूर्त्तिभेदेन वा तथा भेदतया प्रवर्त्तकः।
॥ १३९ ॥ १४० ॥

सूक्ष्मरूपरथा ये तु त ऊर्ध्वं मण्डले स्थिताः।
रहटे घटिका यद्वत आरोहणादिकम् ॥१४१॥
आरोहणे मन्दगतिरवरोहे तु शीघ्रता।
समे मध्यमभावश्च ज्योतिश्चक्रगतिः समा ॥१४२॥
राश्यादिभावमापन्नाश्चक्रस्याशा निरूपिताः।
मेषे तुलायां च तथा अत ऊर्ध्वं व्यवस्थया ॥१४३॥

---

तु पुनः ये राह्वादिसप्तर्ष्यन्ताः सूक्ष्मरूपा एकैके रथा येषां ते मण्डले स्थूले चक्रे यद्वद्रहटे घटिकास्तिष्ठन्ति तद्वदूर्ध्वं स्थिताः। (ते विष्णुपुराणे द्वितीयेंऽशे द्वादशाध्याये 'रथस्त्रिचक्रे सोमस्ये'त्यादिना निरूपितास्ततोऽवगन्तव्याः। यद्यपि सप्तर्षीणां रथा नोक्तास्तथापि तेषां गमनदर्शनात्कल्पनीया विमानानि वा)* गतिस्थानभूतानि मण्डलानि तु मध्यममण्डलस्योभयतो दिशाद्क्रमेण ह्रसन्ति। तेष्वारोहणे मन्दा गतिरवरोहणे शीघ्रा प्रत्यहं मण्डलभेदाद्भिद्यते, वायुवशाच्च। समे ज्योतिश्चक्रतुल्ये मध्यममण्डले गतेर्मध्यमता, अत आरोहणादौ तथा तथा गतिरस्तीति गतिभेदाद्दिनरात्र्योर्न्यूनाधिकसमभावो ज्योतिश्चक्रगतिः समा। अतः परमाण्वाद्यहोरात्रान्तानां सर्वदैकरूप्यमिति गतिद्वयाद्गतिस्थानभूतमार्गभेदाच्च सर्वदैकरूप्यमिति गतिद्वयाद्गतिस्थानभूतमार्गभेदाच्च सर्वं समञ्जसमित्यर्थः ॥१४१॥१४२॥

स्थूलचक्रोर्ध्वभागस्य त्रिविधत्वे प्रमाणमाहुः-राश्यादीति। तथेति समानभूमिसम्। अत ऊर्ध्वं व्यवस्थयेति। मेषतुलोभयप्रदेशे यथा यत्र युक्ता तत्र तथेति। अयमर्थः, ज्योतिश्चक्रं तावत्कुलालचक्रवदुत्तानं मानसोत्तरोपरिसमानयैव गत्या भ्रमति, तस्य चक्रस्य स्थितिस्तु यथा पटहस्योर्ध्वमुखतया स्थापितस्य, परं त्वयं गोलाकृतिः, तत्र च मेरोर्लक्षयोजनसमुन्नाहत्वे षोडशसहस्रं भूम्यन्तः प्रविष्टत्वात् मानसोत्तरमस्तकाच्चतुःसप्ततिनवतिसहस्रयोजनोपरि मेरोर्मूर्द्धनि यो वक्ष्यमाणोऽक्षस्याधोभागस्तत्समानसूत्रे मेषस्तुला च चक्रस्योपरि, तत्र भूमिसाम्यम्। ततो मेषात्तिरश्चीनोच्चपृष्ठभागे वृषस्तत्समानसूत्रे तुलोपरि कन्या। वृषात्तिरश्चीनोच्चपृष्ठभागे मिथुनस्तत्समानदेशे कन्योपरि सिंहः। मिथुनसिंहयोस्तिरश्चीनोच्चपृष्ठभागे कर्कः सर्वोपरि, एवं सति मेषाच्चलितस्य कर्कमध्यपर्यन्तमारोहस्तत आरभ्य तुलारम्भपर्यन्तमवरोहः। एवं तुलानीचैस्तिरश्चीनाग्रभागे वृश्चिकस्तत्समानसूत्रे मेषान्नीचैर्मीनः पूर्ववद्वृश्चिकान्नी-

---

* ( ) चिन्हान्तर्गतं मूलपुस्तके नास्ति।

ज्योतिश्चक्रस्य गमनाद्गतिः सूर्यस्य सर्वदा।
यत्र राशौ भवेत्सूर्यः सभागेऽग्रे रथाङ्गके ॥१४४॥
तत्प्रातरुदयस्तत्र तदंशेऽपि गतिस्तथा।

चैर्धनुस्तत्समानसूत्रे मीनान्नीचैः कुम्भः। धनुःकुम्भयोस्तिर्यग्याने सर्वतो नीचैर्मकरः। एवं तुलातो यावन्मकरारम्भमवरोहः, मकरमारभ्य मेषारम्भपर्यन्तमारोह इति। एवं च एषा राशिकक्षा उपवीतवत्तिष्ठति,(एतेषामुदगयनदक्षिणायनवैषुवतराशीनां विभागाः परस्परं विभक्ताः, यत्रोदगयने आरोहस्तत्समाने दक्षिणायनेऽवरोह इत्येवं बोध्याः। कुतः मानसोत्तरोपर्येव सूर्यादिपरिभ्रमणस्योक्तत्वादिति)*। तत्र च राह्वादिसप्तर्ष्यन्ताः स्वस्वकक्षासूक्तरीतिकभूमावारोहन्तोऽवरोहन्तो गच्छन्ति। तत्रापि सूर्यगतिस्थले वायुरिति विषम इति प्रत्यहं गतिभेदः। तदुक्तं श्रीधरीये वायुपुराणवाक्यैः। अन्यथा दिनरात्र्योरेकस्य वृद्धिरपरस्य ह्रास इति न स्यात्। वृषभादिपञ्चके दिनवृद्धौ तुलायां साम्यं चाकस्मिकमापद्येत। एवं सति मूलगद्ये वर्द्धन्ते ह्रसतीत्यत्र समापेक्षया वर्द्धन्ते ह्रसतीत्यध्याहरणमर्थबलात्कार्यमिति सिद्ध्यति। एतेन देवाहोरात्रमपि साधितम्, देवानां मेष उदयः कर्के मध्याह्नस्तुलायां सायं मकरे निशीथमिति। एतावान् परं विशेषो यद्देवैर्दिवसे सूर्यो नवतिवारमुपर्युपरि परिक्रमन् तावद्वारमेवाऽधोऽधः परिक्रमन् दृश्यते। मेरुपत्यकादिवर्तिभिस्त्वस्मदादिवदेकदिवसे एकवारमेवाऽर्द्धं परिक्राम्यन्निति।१४३। तदेतदुत्साधयितुं 'मेवं नवकोटय' इत्यारभ्य 'समामनन्ती'त्यस्य तात्पर्यमग्रे वदिष्यन्तः प्रत्यहं सर्वदर्शन उपपत्तिमाहुः—ज्योतिरित्यादि। तद्वत्या प्रत्यहं दृश्यते न दृश्यते च मेरुव्यवधानादतो दिनरात्रिव्यवस्था भूमिष्ठानामित्यर्थः। प्रातःकालादावुपपत्तिमाहुः यत्रेत्यादि। एकैकस्य राशेः सामान्यतस्त्रिंशत्त्रिंशदंशाः स्थूला अहोरात्ररूपास्तस्यापि तावन्तो मुहूर्तरूपा एवं घटिकापलादिपरमाण्वन्ता ज्ञातव्याः। एवं सति रथाङ्गके ज्योतिश्चक्रे सभागे राश्यात्मकद्वादशभागवति राशौ च घटिकादिभागवति अग्रे प्रथमतो यत्र सूर्यो भवेत्तिष्ठति तत्प्रातः। तत्रापि हेतुः। उदयस्तत्रेति। दृग्गोचरता तस्मिन्नेव समये इति। तथा च यस्मिन् राशौ यस्मिन्नंशादौ प्रथमतः सूर्यदर्शनं तत्प्रातः। एवं तदंशे लग्नघट्यादिरूपेऽपि या सूर्यस्य गतिः सा तथा लग्नादिकालनियामिका ज्ञातव्येत्यर्थः। तत्राऽपि हेतुः—

* ( ) चिन्हान्तर्गतं मूलपुस्तके नास्ति.

समानगत्याऽपि तथा स्वांशकालायतिस्तथा॥ १४५ ॥
साम्प्रतं तु न पक्षोऽयं मध्ये भूमिरियं यतः।
भूमिगोलं परिक्रम्य जलादायाति गच्छति ॥१४६॥
मण्डलानां प्रवेशेन वायोराकर्षणात्तथा।
वृद्धिक्षयप्रकारं हि प्राहुस्तत्रैव युज्यते ॥१४७॥
मासपञ्चकपर्यन्तमहोरात्रक्षयो भवेत्।
वृद्धिर्वा न त्वहोरात्रे तथाऽर्द्धस्य भवेत्क्वचित् ॥१४८॥

---

समानगत्येत्यादि। यथा विषमगत्या राश्यंशादिकालभेदास्तथा समगत्याऽपि तदुदयादिभेदाः। तत्रापि हेतुः—स्वांशेत्यादि। ज्योतिश्चक्रांशभूता ये कालोपाधयस्तेऽपि यतो हेतोरुदयादिनियामका इत्यर्थः। तथा च नियतपरिमाणकालोपाधावहोरात्रादिरूपे ज्योतिश्चक्रगतिः प्रयोजिका, विषमपरिमाणकालोपाधौ राश्यादिरूपे ज्योतिश्चक्रगते देशे सूर्यगतिः प्रयोजिका, अनियतपरिमाणकालोपाधौ लग्नाद्युदयरूपे तूभयोर्गतिः प्रयोजिकेति भावः॥ १४४॥ १४५॥

नन्वत्र सूर्यभ्रमणं तिर्यगुक्तं तत्प्रत्यक्षतो विरुद्ध्यते इति तन्निवृत्त्यर्थं द्वाभ्यामुपपत्तिमाहुः साम्प्रतमित्यादि। मध्य इति। जलमध्ये। जलादायाति गच्छतीति 'अद्भ्यो वा एष उदेति पुनरपः प्रविशती'ति श्रुतेः। 'सूर्यं चाद्भ्यः समुत्थित' इत्यादिवाक्यैश्च तथा। तथा च सा ब्राह्मादिकल्पीया व्यवस्थेतीदानीं (जलप्रवेशे) तदभावात् प्रत्यक्षविरोधो न दोषावहोऽत इदानीमयं पक्षो ज्ञातव्य इत्यर्थः ॥१४६॥ कथमेवमित्याकाङ्क्षायामुपपत्तिमाहुः—मण्डलेत्यादि। मण्डलानां राह्वादिसप्तर्ष्यन्तस्थितिस्थानानां जले प्रवेशेन ज्योतिश्चक्रमेव वायोराकर्षणादायाति गच्छति। तथा तेन पूर्वोक्तेनैव प्रकारेण वृद्धिक्षयप्रकारं दिनरात्र्योर्हि यतो हेतोः प्राहुः, ज्योतिर्विद इति शेषः। तत्रैव ज्योतिःशास्त्रोक्ते तिर्यग्गोलपक्षे एव युज्यते साम्प्रतं पक्ष उपपद्यत इत्यर्थः॥१४७॥ पक्षद्वयसाधारण्येन सिद्धमाहुः—मासेत्यादि। तत्पूर्वमुपपादितं योजनायां चन्द्रगतेर्वैषम्यं मनसि कृत्वाहुः- तथार्द्धस्य भवेत्क्वचिदिति, यथाऽहरादिक्षयवृद्धी सूर्येण तथाऽर्द्धस्य मासार्द्धस्य क्षयो वृद्धिर्वा सा क्वचिच्चान्द्रेऽमावस्यया हि मासान् सम्पश्यन्ति पूर्णमास्यया हि मासान् सम्पश्यन्ती'ति श्रुत्युक्ते मासविशेषे भवेत्। अतश्चन्द्रगतिरपि ज्योतिश्चक्रे विषमा। तथा च तिथ्यादिन्यूनाधिकभावस्य प्रत्यक्षाभावेऽपि प्रत्यक्षाभ्यां पक्षाधिक्यन्यूनत्वाभ्यां तस्या अपि वैषम्यमनुमीयत इत्यर्थः ॥ १४८॥

राशिपर्यन्तगमनमेकोनात्रिंशता क्वचित्।
तथैकत्रिंशता क्वापि गतिस्तेन समा न हि ॥१४९॥
स्थूलचक्रे यतः कीलं तथा तेनोच्यते परम्।
स्थूलचक्रे भूमिभेदा न तु सूक्ष्मे कथञ्चन ॥१५०॥
अधुना भूप्रदेशाश्च ज्ञातव्या विनियामकाः।
दर्शनस्य समानेन सूत्रेणाऽदर्शनं यतः ॥१५१॥
मकरादिषु वृद्धिर्हि तथा कर्कादिषु क्षयः।

---

सूर्यगतिवैषम्येऽनुमापकमाहुः–राशीत्यादि। क्वचिदित्यनियमेन। तथा च तद्यदि देशकृतं स्यान्नियतघटिकापलकमेव स्यात्, न त्वनियतमतो गतिवैषम्यकृतं तदित्यर्थः। १४९। ननु देश एव तथा कुतो न कल्प्यत इत्यत आहुः–स्थूलेत्यादि। यतो हेतोः कीलं कालसूत्ररूपं तथा सूर्यगतिसाम्यापादकम्, तेन हेतुना परं द्वितीयं वैषम्यकारणमुच्यत इत्यर्थः। कालमिति पाठेऽप्ययमेवार्थः। ननु स्थूलचक्र इव सूक्ष्मचक्रेऽपि भूमिभेद एव कुतो नाद्रियत इत्याशङ्कायामाहुः–न तु सूक्ष्मे कथञ्चनेति, स्थूले (ज्योतिश्चक्रे) हि राशयो देशविभागनियामका यथा वर्तन्ते तथा सूक्ष्मचक्रे (सम्वत्सरात्मके) किमपि भूनियामकं नास्ति निरवयवत्वाद्गतिवैषम्यं विना तत्कल्पनेऽप्युक्तानुपपत्त्यपरिहाराच्चातो नाद्रियत इति गतिरेव नियामिकेत्यर्थः ॥१५०॥ ननु कल्पान्तरे तथाऽस्तु नाधुनेत्यत आहुः–अधुनेत्यादि। चोऽप्यर्थे, अधुनाऽपीत्यर्थः। ज्योतिःशास्त्रेऽपि तथैव सिद्धिरिति भावः।

तत्रापि नियमिकामुपपत्तिमाहुः–दर्शनस्येत्यादि। तथा च प्रदेशवैषम्यं गतिवैषम्यं च मतद्वयेऽपि तुल्यम्, गोलतन्मानादिष्वेव परं विशेष इत्यर्थः॥ १५१ ॥ 'यावद्दक्षिणायने'ति गद्यस्य तात्पर्यमाहुः–मकरेत्यादि। वृद्धिरिति। परमहीनदिनापेक्षया वृद्धिः। क्षय इति परममहादिनापेक्षया क्षयः।

---

## ॥ निबन्धकठिनांशविवेचनम् ॥

अग्रे एकविंशाध्यायार्थोक्तौ स्थूलचक्रे भूमिभेदा न तु सूक्ष्मे कथञ्चनेत्यस्य [ १५० ] व्याख्याने 'गतिवैषम्यं विना तत्कल्पनेप्युक्तानुपपत्त्यपरिहाराच्च चे'ति राशिमध्यगता भूस्तु न्यूनाधिकभावेन वर्तते। तत्र क्वचित् न्यूनराशौ दीर्घकालेनातिक्रमः, अधिकराशौ न्यूनेन। सूक्ष्मचक्रे प्रदेशकल्पने तत् न स्यात्। प्रतिराशि चक्रभेदकल्पनापत्तेरतो न्यूनाधिकराशौ दीर्घसूक्ष्मकालेनातिक्रमे सूर्यगतेरेव न्यूनाधिकभावो हेतुरित्यर्थः।

अह्नो विवृद्धिर्मेषादौ रात्रेः स्थूलं न चान्यथा ॥१५२॥
उदगयने गतेर्मान्द्यं दक्षिणे शीघ्रता मता।
अहर्पतिर्यतः सूर्यो मान्द्यादह्नो विवृद्धता ॥१५३॥
परिधिस्त्रिगुणो व्यासात्किञ्चिच्चापि तथाधिकः।
लक्षाधिकं सार्धनवकोट्यो परिधिमण्डले ॥१५४॥
गणनामतभेदाद्धि सन्देहः स्यादितीर्यते।
उपदेशस्ततः पूर्षु समा गतिरिहोच्यते ॥१५५॥
वृद्धिह्रासनिवृत्त्यर्थं स्थूलचक्रं प्रवर्त्तते।
मेरोश्चतुर्दिशं पुर्यस्तत्र प्रोता दिशो मताः ॥१५६॥

---

विवृद्धिरिति। विषुवापेक्षयाऽधिका वृद्धिः। रात्रेरिति। एवं क्षयवृद्धी दिनविपर्ययेण भवत इत्यर्थाज्ज्ञातव्यमित्यर्थः। एतेन मूले वर्द्धन्ते ह्रसतीत्यत्र समापेक्षयेति पदाध्याहारे यावद्दक्षिणायनेति गद्यमेव गमकमिति नात्र कल्पनालेश इति बोधितम्। एवं सूक्ष्मरथस्थसूर्यकार्यं सर्वमुपपाद्य 'स एष' इति गद्यत्रयोक्तमुपसंहरन्ति स्थूलमित्यादिनैकेन ॥ १५२ ॥

अतः पर'मेवं नवकोटय' इत्यारभ्य 'समामनन्ती'त्यन्तेन स्थूलचक्रकार्यं तत्स्वरूपं चोच्यत इति तं ग्रन्थं विचारयन्ति परिधिरित्यादि। व्यासाद्दैर्घ्यात्। मेरोश्चतुर्दिशं सार्द्धकोटिः सार्द्धसप्तलक्षाणीति ततो द्विगुणो मध्यव्यासः कोटित्रयं पञ्चदशलक्षाणि मानसोत्तरोपत्यकावधिरिति। ततस्त्रिगुणः परिधिर्नवकोटयः पञ्चचत्वारिंशल्लक्षाणि मानसोत्तरोपत्यकावधिरिति। ततोऽधित्यकाविचारे तन्मध्यपर्यन्तो व्यासोऽधिको भवतीति लक्षद्वयमधिकं ग्राह्यम्। तेन मूलोक्तः सूर्यपरिवर्त्तनदेशो लक्षाधिकसार्द्धनवकोटिरूपः सिद्धयति। इयं गणना मतान्तरकृतसन्देहनिरासार्थेति मूले ईर्यते। ततो ल्यब्लोपे पञ्चमी, तं भ्रमणदेशं मनसि निधाय। पूर्षु ऐन्द्र्यादिषु चतसृषु उपदेशः पूर्वस्मान्मेरोरित्यादिरूपो दिगुपदेशः तत्र हेतुः, इहास्मिन् परिवर्त्तने समागतिरुच्यत इत्यर्थः ॥१५३॥१५४॥१५५॥ तत्प्रयोजनं हेतुं चाहुः वृद्धिरित्यर्द्धेन। एवमेकं प्रयोजनमुक्तमेकं गद्यं च विवृणृ, द्वितीयमाहुः–मेरोरित्यादि। तथा च मेरुपरिष्ठानां दिग्विभागो मानसोत्तरस्थपुरीचतुष्टयकृत इत्यर्थः। एतेन 'तस्मिन्नैन्द्रीमि'ति गद्यं

**अन्यत्र प्रथमं यत्र मेषे सूर्यो हि दृश्यते ।**
**प्राची सा सर्वलोकानां मेरुश्चोत्तरतस्तथा ॥१५७॥**

व्याख्यातम् ॥१५६॥ नीचैः स्थितानां तमाहुः—अन्यत्रेत्यादि । तत्रोपपत्तिमाहुः सर्वेत्यादि, हि यतो हेतोरत्र 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित' इतिवाक्या-दुदगुदिगेवैका नीचैर्भूस्थानां नियता। एवमेकस्या दिशो नियमे सति मेरुव्यवहितः सूर्यो यत्र यैर्मेषे दृश्यते सा तेषां प्राचीत्येवं मेरुमेषसूर्यदर्शनत्रितयनियतो

### श्रीनिबन्धकठिनांशविवेचनम् ।

एकविंशाध्यायार्थोक्तौ तत्त्वदीपे—अत्राध्याये प्रकरणत्रयमस्तीति सूर्यस्य गमनं पूर्वमिति [ १३४ ] श्लोकेन अध्यायार्थारम्भे उक्तम् । तत्र 'गणनामतभेदाद्धि सन्देहः स्यादितीर्यत' [ १५४ ] एतावदन्तेन ग्रन्थेन सूर्यगमननिरूपकस्य मूलग्रन्थस्यप्रथमप्रकरणस्यार्थ उक्तः ।

अतः परं द्वितीयप्रकरणस्य गतिस्थाननिरूपकस्यार्थ उच्यते, उपदेशस्ततः पूर्षु [१५५] इत्यादि, कालदेवत्वरुद्धय [१५९] इत्यन्तैः सार्धैश्चतुर्भिः श्लोकैः, तत्र उपदेशस्ततः पूर्षु इत्यादि, ततस्तदनन्तरं पूर्षु ऐन्द्र्यादिषु उपदेशः 'ऐन्द्रीं पूर्वस्मादि'त्यनेन गद्येन मेरुपरिष्ठानां पूर्वादिदिगुपदेशः, तत'स्तासुदयमध्याह्ने'त्यनेन भूमिष्ठानां दिगुपदेशः, तत'स्त-त्रस्थाना'मित्यनेन मेरुस्थितानां षण्मासपर्यन्तं उदयास्तमयाद्यभावोपदेशः, सूर्यस्य वामदक्षिण-गत्युपदेशश्च । ततो 'यत्रोदेती'त्यनेन दक्षिणे उत्तरे च समानसूत्रदेशे उदयास्ताद्युपदेशः समानसूत्रपट्ट्याश्यन्तरे च । ततो 'यदा चैन्द्र्या'इत्यनेन पञ्चदशघटिकाभिरिति स्थूलचक्रे समानगतेरुपदेशः, 'सपादकोटिद्वय'मित्यादिना पूर्वोक्तगणनाया उपदेशः, तत 'एवं ततो वारुणी'मित्यनेन अन्यासु पूर्षु पूर्वोक्तातिदेशः, ततः तथा चान्ये चे'त्यनेन सर्वग्रहेषु अतिदेशः, तत 'एवं मुहूर्तेने'त्यनेन गतिस्थानस्य प्रकृष्टं मानम् । ततो 'यस्यैकं चक्र'मित्यनेन चक्रस्य सारत्वं, संवत्सरस्य पुनः पतितत्वात् कालस्य देवत्वं, दिनमासर्त्वयनसंवत्सरक्रमेण वृद्धिः, तदेतत् सर्वम् एभिः सार्धैश्चतुर्भिर्विवृतम् ।

ततस्तृतीयप्रकरणे सूर्यचक्रस्य अक्षप्रोतत्वमुक्तम्, तत्रेयं व्यवस्था ज्ञातव्या,संवत्सरसमे मानसोत्तरदेशे संवत्सरात्मकं स्थूलचक्रं द्वादशारत्वादिना यदङ्गसहितमुक्तं तत्साङ्गम्। मध्या-अक्षेण प्रोतं न भवति। यच्च सूक्ष्मं चक्रं तदक्षेण प्रोतमस्ति परं तथा न, साङ्गं नेत्यर्थः, साङ्गं चक्रं कालदेवत्वरुद्धयर्थम्, एवं निरङ्गं प्रधियुक्तमक्षप्रोतं सुखार्थदेवगमनार्थं प्रशस्तम्। सुखार्थं सर्वलोकसुखार्थं देवस्य सूर्यस्यागमनं द्वादशस्कन्धे प्रोक्तम्। 'द्वादशस्वपि मासेषु देवो वै षड्भिरस्य वै चरन् समन्तात् तनुते परेह च सन्मतिम्। सद्बुद्ध्या सुखमि'ति लोके वेदे च प्रसिद्धम्। एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः, कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यज'इत्यनेन च सर्वलोकावनरूपं सुखमुक्तम् ।

कमलाकृतिरीत्या हि मेरुरत्र तथैव भूः ।
अतो मेरोः शिरस्तुल्यं मानसोत्तरमस्तके ॥१५८॥
सूर्यचक्राक्षमध्यं हि तथाऽत्र परिकल्पना ।
सोऽङ्गचक्रमिदं प्रोक्तं कालदेवत्ववृद्धये ॥१५९॥
ततः सम्वत्सरसमे न प्रध्या सहितं तथा ।

नीचैःस्थानां दिग्विभाग इत्यर्थः। त्रयाणां तथात्वोक्तौ बीजमाहुः—कमलेत्यादि। हि यतो हेतोरत्र भूगोले मेरुः कमलाकृतिरीत्या तथैव तेन वर्तुलमकारेणैव भूः, अतो हेतोर्मेरुशिरस्तुल्यो लक्षयोजनोच्चो यो मानसोपरिभागोऽयुतयोजनोच्छ्रायान्मानसोत्तरादुपरिसाधिकनवतिसहस्रमितस्तस्मिन् सूर्यचक्रस्य स्थूलस्य मध्यभागो हि निश्चयेन वर्तते। तथा तदनुसारिणी अत्रास्मिन् विषये कल्पना। तथा चैवमुक्तौ दृष्टं शास्त्रं च बीजमित्यर्थः। एवं स्थूलचक्रस्य भूमिष्ठदिग्विभागरूपं द्वितीयं कार्यं विवृतम्, तेनैव प्रातरादिकालरूपं तृतीयं कार्यमपि उपपादितम्। तच्च मूले 'ताम्रदये'त्यादिना 'निम्लोचती'त्यन्तेन 'भूमिष्ठानां यत्रे'त्यादिना 'पश्येरन्नि'त्यन्तेन मेरुस्थानां चोक्तम्, गतिसाम्यं च 'यदा चैन्द्र्या' इत्यादिना पञ्चदशघटिकारूपकालनियमकथनेन बोधितम्। सपादकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानीति, कोटिद्वयं सप्तत्रिंशल्लक्षाणि सप्तसप्ततिसहस्राणि चेत्यर्थः। इदं गतिस्थानस्य प्रकृष्टं मानमसन्देहात्योक्तम्। तथाऽन्ये इत्यादिना च चान्द्रनाक्षत्रसावनादिमासेषु कालनियमेन ग्रहादिदर्शने चोपपत्तिः प्रसङ्गादुक्ता। 'एवं 'मुहूर्तेत्यादि'ना च रथगतेः प्रकृष्टं मानमुक्तं तदेतत्सर्वमेतेन बोधितम्।

एवं कार्यं विचार्य 'यस्यैकचक्रमि'त्यादिनोक्तं स्वरूपं विचारयन्ति—साङ्गमित्यादि। अङ्गानि अरनेमिनाभयस्तत्सहितम्। 'सारमि'ति पाठे, अरसहितं तच्च नाभिनेम्योरुपलक्षकम्। इदमेव 'चक्रं त्रिणाभिचक्रमजरमनर्वमि'तितैत्तिरीयारण्यके श्रावितम्। अङ्गकथनप्रयोजनमाहुः—कालेत्यादि। कालस्य 'द्वादशादित्याः सम्वत्सरो वै प्रजापति'रित्यादिश्रुत्युक्तं यद्देवत्वं 'स ऋसर्पोऽसी'ति श्रुत्युक्ता या वृद्धिस्तद्बोधनायेत्यर्थः। वृद्धिपदं क्षयस्याप्युपलक्षकम्, तस्यापि'अंऽहस्य सायन्ते'ति श्रावितत्वाद्, उभयोर्ज्योतिःशास्त्रसिद्धत्वाच्च ॥१५८॥१५९॥ सूक्ष्मचक्रस्यैतदधीनत्वबोधनायाहुः—तत इत्यादि।

१ सारम्। २ चक्र।

सुखार्थं देवगमने प्राधियुक्तं हि शस्यते ॥१६०॥
ज्योतिश्चक्रस्य माहात्म्ये सोमादीनां विवर्णनम् ।
मेरुमस्तकतो नीचो मानसाचल उच्यते ॥१६१॥
तैलयन्त्रेण सदृशो मेरुरत्र निगद्यते ।
आद्याक्षमानं स्पष्टं हि तच्चतुर्थांशतो मितः ॥१६२॥
लक्षाणां तु स एकोनचत्वारिंशत्प्रमाणकः ।

यत इदं सम्वत्सरात्मकं चक्रं देवरूपं समगतिमहावेगं च ततो हेतोः सम्वत्सरसमे सम्वत्सरात्मकस्थूलचक्रसमाने मानसोत्तरमूर्द्धनि मध्या सहितं कीलविशेषेणासमन्तात्सहितं सूक्ष्मं चक्रं तथा न भ्रमति । किन्तु स्वल्पवेगत्वाद्देवत्वाच्च तदुपर्येव तदधीनतया भ्रमतीत्यर्थः । तदुक्तरथस्य गद्ये 'तथा वालखिल्या' इत्यारभ्य 'उपासत' इत्यन्तेनोक्तं प्रयोजनमाहुः सुखार्थेत्यादि देवः सूर्यः । तथान्ये मह्य इति गद्यस्य मुख्यं प्रयोजनमाहुः-ज्योतिरित्यादि । माहात्म्य इति माहात्म्यार्थम् ।

एवं 'नवकोटय' इत्यारभ्य 'समामनन्ती'त्यन्तस्य ग्रन्थस्य तात्पर्यमुक्तम् । अतः परं 'तस्याक्ष' इत्यादेरर्थं वदन्तो दृष्टान्ततात्पर्यमाहुः-मेर्वित्यादि । मेरुमस्तकं लक्षयोजनोच्चं तस्मान्नीचोऽयुतयोजनोच्छ्रायो मानसाचल उच्यते । अतो हेतोरत्रास्मिन् गद्ये तैलयन्त्रेण सदृशं विनिगद्यते, स्थूलचक्रं तद्भ्रमणं चोच्यते । तथा च सम्वत्सरात्मकचक्रस्य स्थौल्यबोधनायोत्तानतया भ्रमणबोधनाय चेदं गद्यम्, तेन तस्य स्थौल्यं नवतिसहस्रयोजनमितम् । अक्षान्नीचरुपरि तु षड्विंशतिलक्षादप्यधिके सप्तर्षिपर्यन्तानां मत्यक्षाणामग्नीन्द्रप्रजापतिकश्यपधर्माणाममत्यक्षाणां च तत्रैव परिभ्रमणादिति सिद्ध्यति । अतः परं तस्मिन्नक्ष इत्यादेराहुः-आद्येत्यादि, स्पष्टमिति । मेरुमध्यमारभ्याऽऽमानसाचलं सार्द्धकोटिः सार्द्धसप्तलक्षाणि व्यासोऽस्ति । अक्षे [१] चक्रमेकतः प्रोतमन्यतः कीलं प्रोतमिति त्रिचतुर्लक्षं ततोऽधिकं भवति । तथापि यद्दिस्तावद्देवेति स्पष्टम् । किञ्च, हि यतो हेतोर्द्वितीयोऽक्षो ध्रुवे कृतोपरिभागस्तच्चतुर्थांशतो मित उच्यते ॥१६२॥ [२] पुनः स ध्रुवो मेरुपरिभागादेकोनचत्वारिंशल्लक्षप्रमाणकस्तथा सति विचार्यमाणः सोऽक्षस्तावल्लक्षाणि सार्द्धसप्तत्रिंशत्सहस्राणि स यद्दिदृश्यमानो भवति । मान्तद्वयेऽपि प्रोतभागोऽधिकश्च भवति । तथा च ध्रुवे कृतोपरिभाग इत्येतावतैव

१ आद्य । २ मतः ।

ध्रुवोऽपि मेरुवत्तस्मात्ततोऽप्युत्तरतः स्थितः ॥१६३॥
अतस्तैलाक्षवत्सोऽपि द्वितीयोऽतिविचारकैः।
रथोपरि स्थितिस्थानं षड्विंशल्लक्षदीर्घकम् ॥१६४॥
नवलक्षकविस्तीर्णं युगं चाऽपि तथाविधम्।
आध्यात्मिका देवरूपा अश्वास्तत्र वहन्ति हि ॥१६५॥
सप्तानामुपयोगाय लक्षयोजनमन्तरा।
प्रदेशोऽस्तीति बोधाय तथाऽऽकाशे गतिर्यथा ॥१६६॥
छन्दोमयास्ततः प्रोक्ता अरुणोऽपि तथोदितः।
शब्दात्मका ह्यन्तरिक्षे गच्छन्तीति न विस्मितम् ॥१६७॥

धारितार्थेऽपि यत्तस्य मानमग्रे ध्रुवे कृतमान्तभागत्वं चोच्यते, तत्तस्य माननिष्कर्षार्थमेवेत्यर्थः। किञ्च ध्रुवोऽपि मेरुवन्मध्यभागस्थस्तस्माद्धेतोस्ततो ध्रुवतोऽपि पूर्वोक्त उत्तरत उत्तरभागे स्थितः ॥१६३॥ अतः स्थितिं विचार्य सोऽप्यक्षस्तैलाक्षवत्समग्रं मध्यतो द्वितीय ऊर्ध्वोऽपि तैलाक्षवद्देवार्जनेन स्थितो विचारकैर्ज्ञेय इति बोधनार्थमेव द्वितीयोऽपि दृष्टान्त इत्यर्थः। अतः परं 'रथनीडस्त्वि'त्यादिनोक्तं सूक्ष्मरथस्वरूपं विचारयन्ति-रथोपरीत्यादि। अत्र मूले तु न त्रयीमयात्पूर्वोक्ताद्रथाद्भेदो बोध्यते। नीडपदार्थमाहुः-उपरिस्थितिस्थानमिति। तत्तुरीयभागविशाल इत्यादेरर्थमाहुः-नवेत्यादि। युगं चाऽपि वहन्तीत्यन्वयः। देवरूपा इति। 'वाजिभ्यो वाजिन'मित्यादिश्रुत्युक्ताः। युगमानकथनप्रयोजनमाहुः-सप्तानामित्यादि, बोधायेत्यन्तम्। युगमानकथनमिति शेषः। तावत्प्रदेशस्थापनप्रयोजनमाहुः-तथेत्यादि। तथाऽतिवेगेन यथाऽऽकाशे गतिरश्वानां भवति तदर्थं युगमानकथनमित्यर्थः। एतेन 'सप्त युञ्जन्ति रथमेकचक्र'मितिश्रुत्युक्तोऽयं रथ इति पूर्वस्मादन्तरङ्गोऽयं भिन्न इति साधितम् ॥१६६॥ छन्दो नामान' इत्यस्य तात्पर्यमाहुः-छन्दोमया इति। तथोदित इति। छन्दोमयत्वाय इत्यर्थानुकल्पेनोक्तः। अरुणस्य छन्दोमयत्वं 'छन्दांसि वै सौपर्णेया' इति श्रुतेर्गरुडस्येव ज्ञेयम्।

एवं कथनस्योपपत्तिमाहुः-शब्देत्यादि। 'सैषा त्रय्येव विद्या तपती'ति श्रुतेः

१ स्पष्टं च।

रथस्याऽऽवश्यकत्वाय स्तोत्रनृत्यादिवर्णनम् ।
स्थूले त्वेवैव सामग्री पश्चाच्चारुणसंस्थितिः ॥१६८॥
राशिचक्रे तु पुरतः सूर्यस्याऽरुण उच्यते ।
अथवा सर्वसामग्रीसहितोऽत्र द्विरूपतः ॥१६९॥
सदा तिष्ठत्युभयथा सर्वेषां कार्यसाधकः ।
एतस्य वा द्विधा शक्तिरचिन्त्यैश्वर्यरूपतः ॥१७०॥
पक्षद्वये प्रकारस्तु कल्पनीयो यथोचितम् ।
मासि मासि द्वयोक्त्याऽपि आदित्या मण्डला रथाः ॥१७१॥
सामग्रीसहिता भिन्नाः कल्पनीया न संशयः ।

सूर्योऽपि तथेति न किमप्यत्राश्चर्यजनकमित्यर्थः ॥१६७॥ अतः परं पुरस्तादिति गद्यार्थमाहुः–रथस्येत्यादि। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्मयश्मश्रु'रिति श्रुतौ सूर्यान्तर्भगवानुक्तः। अत्राऽप्यग्रिमाध्याये 'स एष भगवानादिपुरुष एवे'त्यादिना (च) वक्ष्यते। अतस्तद्बोधिका सामग्री सर्वाऽप्यपेक्षितैवेति साऽत्रोच्यत इत्यर्थः ।

ननु 'पुरस्तात्सवितुररुणः पश्चाच्च नियुक्तः सौत्ये कर्मणि किलास्त' इति स्थानद्वये कथनमित्यत आहुः स्थूलेत्यादि। तथा चानयैव सामग्र्या तस्यापि रथस्य भ्रमणमिति बोधयितुमेकस्यैवारुणस्योभयत्रोक्तिः। सूक्ष्मरथे सवितुः पुरस्ताद्व्याप्रियच्छन्नप्यरुणः, स्थूलरथे पश्चादपि नियुक्त इति। अतस्तदितरा सामग्र्युभयोरप्येकैवेत्यर्थः। नन्वविरुद्धे भ्रमणे कथञ्चित्तदुपपद्येताऽपि न तु विरुद्ध इत्यरुच्या पक्षान्तरमाहुः–अथवेत्यादि। श्रुतौ 'एकोऽश्वो वहति सप्तनामे'ति सामग्र्यन्तरस्याऽप्युक्तत्वादरुणस्याऽपि मूर्तिभेदो रथान्तरंऽङ्गीकार्यं इत्यर्थः ॥१६९॥

ननु श्रुतौ तु प्रकारत्रयम्, रथौ तु द्वावतो विरोधस्यैवमपि न परिहार इत्यतस्तृतीयं पक्षमाहुः–एतस्येति। त्रयीमयस्य भगवद्रूपस्य सूर्यस्य पक्षद्वय इति सप्त युञ्जतीति। एकोऽश्व इत्युक्तेः। नन्वेवं कल्पना मूलाभिमतेति कथं ज्ञातुं शक्यत इत्यत आहुः-मासीत्यादि। तथा च तथाऽन्येति गद्ये तथोक्तेः। शेषा अनुक्ताऽपि कल्पनीयेति मूलेऽप्यभिमत इत्यर्थः॥१७१॥ननु लक्षोत्तरेति गद्ये एवं नवकोटय इति गद्योक्तैव सङ्ख्या भूवलयस्योच्यते। एवं 'मुहूर्ते'ति गद्योक्तपरिभ्रमणसङ्ख्याविचारे तु भूवलयस्याधिका

२ राशिनक्षत्र । ३ निरूपितः ।

मानसोत्तरभूमिस्तु स्वमते दशकोटयः ॥१७२॥
चतुर्विंशतिसाहस्रं लक्षाणां चैव विंशतिः ।
त्रिंशन्मुहूर्ता दिवसे ह्यष्टाशीत्यधिकानि हि ॥१७३॥
लक्षाणि तु चतुस्त्रिंशदेवमेव ततो मता ।
कोटित्रयं पञ्चदश लक्षाण्यायाम उच्यते ॥१७४॥
त्रिगुणा किञ्चिदधिका परिधिः परिकीर्तिता ।
अतोऽत्र मतभेदेन सङ्ख्या बहुविधाऽभवत् ॥१७५॥
लक्षमानं न पूर्वोक्तं यथायोग्यं व्यवस्थितिः ।
माहात्म्यार्थं तदुक्तं हि न विरोधस्ततः स्मृतः ॥१७६॥

सङ्ख्या भवतीति कथं परस्परविरोधपरिहार इत्यत आहुः-मानसेत्यादि सार्द्धचतुष्टयम् । अत्र द्वितीयश्लोके या मूलग्रन्थोक्ता मुहूर्तगमनसङ्ख्योक्ता सा अहोरात्रमुहूर्तविचारेण त्रिंशद्गुणिता सती प्रथमश्लोकोक्ता भूवलयस्य परिधिसङ्ख्या भवति । दशकोटयो विंशतिलक्षाणि चतुर्विंशतिसहस्राणीति मूलोक्तमौहूर्तिकगमनमानगणनया तथासिद्धेः । तदेतदाहुः—एवमेव ततो मतेति एतस्य व्यासस्तु कोटित्रयं चत्वारिंशल्लक्षाण्यष्ट-सहस्राणि । तदर्द्धं चैककोटिः सप्ततिलक्षाणि चत्वारि सहस्राणि, तदेतन्मानसोत्तर-मेर्वोरन्तरं भवति । तत्राष्टसहस्राणि मेरुमध्यात् षट्सहस्राणि त्रिभ्यो मर्यादागिरिभ्यः शिष्टानि द्वादशलक्षाणि चत्वारिंशत्सहस्राणि मानसोत्तराच्च तत्तदाक्रान्तान्यधिकानि ग्राह्याणि । तदेतद्बोधयितुं तृतीयश्लोके पूर्वगणितमेरुमानसोत्तरान्तरद्वैगुण्यसिद्धो व्यास उच्यते । ततस्त्रिगुणस्तु पञ्चचत्वारिंशल्लक्षाधिकनवकोटिरूपः परिधिः सिद्ध्यति ।१७४। त्रिगुणः किञ्चिदधिक इति । उक्तस्त्रिगुणस्ततो द्विलक्षाधिकश्चेत्यर्थः । तत्पूर्वमेव योजनायां व्युत्पादितम् । एवं त्रैविध्ये कल्पत्रयभेदो यस्तृतीयस्कन्ध उक्तः स एव बीजम् । अतो हेतोरत्र परिवर्तननिरूपणे बहुविधा सङ्ख्यामूले मतभेदेनाऽभवत् । तथा सति जम्बूद्वीपस्य पूर्वोक्तलक्षमानं न, किन्तु यस्यां परिधिगणनायां व्यासनिश्चयार्थं यावदपेक्षितं तावदधिकं मेर्वाद्याक्रान्तं भूभागं निक्षिप्य यथायोग्यं व्यासार्धव्य-वस्थितिः कर्तव्या । हि यतो हेतोः तत् माहात्म्यार्थमुक्तं न सङ्ख्यार्थमतः कल्पभेदाद्विरोधपरिहारः स्मृत इत्यर्थः । अत्र स्मृतपदेन कल्पभेदः स्मार्यत इति नात्र शङ्कालेशः । एवं सार्द्धचत्वारिंशत्त्रिंशत्प्रकरणप्रथमाध्यायो विचारितः ॥१७५॥१७६॥

एकस्यैव द्विरूपेण गमने युक्तिरुच्यते ।
सूर्यस्य च तथाऽन्येषां तत्राऽन्येषां पुरा जगौ ॥१७७॥
श्रुतस्यैव विरोधेन प्रश्नो यद्यपि सम्मतः ।
इष्टोऽपि वक्तुमुक्तं हि तथा प्रोवाच सर्ववित् ॥१७८॥
सूर्ये श्रुतानुपपत्तिर्दृष्टस्याऽऽदौ निवार्यते ।
सूर्यस्य तु परीहारो भगवत्वाद्विरूपता ॥१७९॥

अ. २२ अतः परं द्वाविंशे शुभकरणे द्वितीयं सपादाष्टादशभिर्विचारयन्ति। तत्रान्येषां चन्द्रादीनां सत्त्वकार्यरूपा गतिर्मर्यादाऽप्यस्याध्यायस्यार्थ इति पूर्वमुक्तम्। अधुना तद्विशेषतो विवेक्तुं प्रथमत उच्यमानयोः प्रश्नोत्तरयोः प्रासङ्गिकत्वेऽपि निष्कर्पार्थत्वादुभयशेषत्वबोधनायाहुः—एकस्येत्यादि । अत्र सर्वेऽपि तुल्या इति सर्वेपि प्रकरणिनः । ननु राज्ञा सूर्यगतेरेव पृष्टत्वादुत्तरेऽन्यगतेरपि कुतोऽनुमानमित्यत आहुः—तत्रान्येषां पुरा जगाविति। तत्र सूर्यगतिकथनावसरे। तथा अन्ये च ग्रहाः सोमादय' इति गद्ये तथेत्यतिदेशेनान्येषामपि द्विरूपां गतिं पुरा पूर्वाध्याय उक्तवान्। अतः प्रश्नाभावेऽपि पुनः सन्देहाभावाय तेषामप्यनुमान उल्लेख इत्यर्थः ॥१७७॥ नन्वस्त्वेतत् तथाऽपि श्रुतविषयकसन्देहेन तद्विषयकानुमाने पृष्टे तदुत्तरत्वेन तदेव वक्तव्यम्। दृष्टविषयानुमानस्य किं प्रयोजनमिति शङ्कायां तामनूद्योत्तरमाहुः श्रुतस्येत्यादि। यद्यप्येवं तथाऽप्युक्तिमुत्तररूपां वक्तुं दृष्टः पिपीलिकादृष्टान्तोऽपि। हि यतो हेतोः सम्मतोऽतः सर्वविच्छुकस्तथा प्रोवाच। अयमर्थः। अत्र हि विरुद्धं गतिद्वयमेककर्तृकैककर्तृकं सन्दिग्धत्वास्पृष्टमतो दृष्टान्ते पूर्वं गतिद्वयमेककालीनं निर्द्धार्यम्, तच्च कुलालचक्रस्य विरतौ निर्द्धारितं भवति, न तु भ्रमणदशायामतो दृष्टान्तोऽपि न सिद्ध इति तत्साधनाय पूर्वं गतिद्वयमेककालीनं तदनुमानमावश्यकं तदेतदाहुः—सूर्यस्येत्यादि। अत्र दृष्टान्ते यत्र येषां भ्रमता सह भ्रमतां प्रदेशान्तरेपूपलभ्यमानत्वम्, तत्र तेषां भिन्नगतिमत्त्वमिति व्याप्तिं साधयित्वा ततस्तेन प्रकृतं साध्यते इति दृष्टानुपपत्तिनिवारणमावश्यकमिति तत्तस्य प्रयोजनमित्यर्थः। तत्राऽप्येतदनुमानं ग्रहान्तरादिगतिसाधन एव पर्यवस्यति, न तु सूर्यगतिसाधन इत्याहुः—सूर्यस्येत्यादि। तथा च भगवत्त्वाद् द्विरूपत्वात्सामर्थ्येनैव परिहारसम्भव इति न तदर्थमिदमनुमानमपि तु अन्यगतिसाधनार्थमेवेत्याशयेनैव मूले सूर्यादीनामित्यादिपदमुक्तमित्यर्थः ।१७८।१७९। मूले 'स एप' इत्यारभ्य समामनन्तीत्यन्ते-

भगवत्त्वञ्च तद्भुक्त्या कालभेदा यतोऽभवन्।
वेदत्वेनापि तत्सिद्धिः समर्थस्तद्गतो हरिः ॥१८०॥
ज्योतिश्चक्रं चालयन् स स्वांशैर्भुङ्क्तेऽन्यथाऽपि च।
क्षणादि सकलं तस्मादिति भेदा निरूपिताः ॥१८१॥
एकं शतमशीतिश्च स्वार्थाः सन्ति नभोऽन्तरा।
अंशैः सर्वत्र गमने वत्सरो भवतीति च ॥१८२॥
विशिष्टेन स्वरूपेण सदा ज्योतिःप्रवर्तनम्।
दिनमासत्वयनभुक् सर्वं भुङ्क्ते पुनः स्वयम् ॥१८३॥
पञ्चशक्तियुतस्तेन पञ्चनाम्ना निरूपिताः।

नाऽयं परिहारप्रकारो विवक्षित इत्याशयेनाहुः-भगवत्त्वं चेत्यादि। तथा च 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्तादिः काष्ठाश्चाहोरात्राश्च सर्वशः, अर्धमासा मासा ऋतवः सम्वत्सरश्च कल्पन्तामि'तिश्रुत्या बृहदारण्योपनिषदि यत्कालभेद-जनकत्वमुक्तम्, यच्च 'सैषा त्रय्येव विद्या तपती'ति वेदरूपत्वं श्रावितम्, यच्च 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इत्यत्र सूर्यान्तर्वर्तिनो भगवत्त्वं श्रावितम्। अन्तस्तद्धर्माधिकरणे विचारितश्च तदेतत् 'स एष' इत्यादिना 'समामनन्ती'त्यन्तेनो-पबृंहितम्, तेन भगवत्त्वादेव परिहारोऽत्र विवक्षित इत्यर्थः ॥१८०॥

स्वांशैरित्यादि। मण्डलमानिभिर्द्वादशभिः स्वस्वरूपेण चकाराद् महाद्यन्तर्या-मित्वेन पर्वादिसम्वत्सरान्तं भुङ्क्ते तस्मादिमे कालभेदा निरूपिता इत्यन्वयः। ॥१८१॥ यावतार्द्धेन 'नभोवीथ्यामि'त्यादेरर्थं तत्तद्रूपकार्यस्य विभागं सम्वत्सरादिपञ्चनामकथनस्य प्रयोजनं चाहुः एकमित्यादि। उक्तसङ्ख्या एकायनदिवसाश्चकारात्तावन्तो द्वितीयाय-नदिवसाः स्वार्थाः स्वस्य सूर्यस्य भोग्याः सन्ति नभोमण्डलमध्ये। सर्वत्र तेषु सर्वेष्वंशै-र्ज्योतिश्चक्रचालकैर्गमने पूर्णो वत्सरो भवतीति च बोध्यते ॥१८२॥ तत्र हेतुः—विशिष्टेनेत्यादि। प्रवर्तनमिति। कुर्वन्निति शेषः। एवं कुर्वन्नंशैरयनान्तभुक् पुनः स्वयं तथा सन्सर्वं भुङ्क्ते। तेन हेतुना वत्सरास्तथा निरूपिता इत्यर्थः। तथा च ग्रहादयः सर्वे ज्योतिश्चक्रस्थास्तत्प्रवृत्तिश्च सूर्यादेवेति तत्कृता अपि वत्सराः सूर्यकृता एवेति सूर्यगतिनिरूपण एवोक्ता इति भावः ॥१८३[१]॥

१ एवं।

गतिभेदेन वा भेदाः प्रत्येकं मध्यमिश्रणात् ॥१८४॥
चन्द्रादीनां प्रशंसार्थमुक्तत्वं शीघ्रभोजनम् ।
चन्द्रस्य समताऽन्येषां विलम्बोऽपि निरूप्यते ॥१८५॥
अहोरात्रव्यवस्था च पितॄणां चन्द्रतोऽभवत्¹ ।
अधःस्थितास्तु पितरश्चन्द्रं पश्यन्ति नेतरम् ॥१८६॥
कृष्णपक्षो दिनं तेषामष्टम्यादि निरूप्यते ।
सूर्येण समता यर्हि तदा तेषां तु पूर्णता ॥१८७॥
क्षयोरुक्तत्वं कर्माङ्गं मतान्तरमिति स्थितिः ।
कलापानं तथैव स्याद् देवानां तु दिनस्थितिः ॥१८८॥

पक्षान्तरमाहुः—गतीर्त्यादि । मध्यपदेन समगतिः, अस्मिन्पक्षे पञ्चाऽपि भेदाः साक्षात्सूर्यकृता एवेति विशेषः ।१८३।१८४। एवं चन्द्रमा इत्यादेस्तात्पर्यमाहुः—चन्द्रादीनामित्यादि । समता साम्यम् । तथा च सर्वेषामुक्तत्वं चन्द्रस्य शीघ्रभोजनमन्येषामुशनःप्रभृतीनां यथायोग्यं सूर्यगतिसाम्यम्, ततो विलम्बोऽपि योऽत्र निरूप्यते स तेषां प्रशंसार्थं न तु सूर्याद्यधिक्यज्ञापनार्थमित्यर्थः । अत्र नक्षत्राणां स्थिरत्वमेव राशिस्वरूपान्तःपातित्वात् । अन्ये पृथग्गतिमन्त इति बोध्यम् ॥१८५॥ 'अथ चापूर्यमाणे'-त्यादेरर्थं विचारयन्ति-अहोरात्रेत्यादि । कथमित्याकाङ्क्षायां प्रकारमाहुः-अध इत्यादि । पितृलोको हि नक्षत्रशिशुमारोपरि स्थिरश्चन्द्रान्नीचैः सूर्यादुपरि, तथा सति ते चन्द्रमेवोपरिष्टं प्रकाशकतया पश्यन्ति नेतरं सूर्यम्, तस्य तदधःस्थितत्वात् । एवं सति सूर्यान्निःसृत्य यदा कृष्णाष्टम्यामुपरि तत्समानदेशे चन्द्रः समायाति तदा तेषां दिनम्, यदा नीचैः सूर्यस्तदा तेषां मध्याह्नोऽमावास्यायामस्माकं सूर्यादधःस्थत्वाच्चन्द्रदर्शनाभावः । यदा चन्द्रोऽग्रे सूर्यान्निःसरति तदा तेषामपराह्णः शुक्लाष्टम्यां सायमिति । सूर्यस्तु पितृभ्यो नीचैरिति रात्रौ सूर्यस्थितिरप्रयोजिकेति । एवमेव तृतीयस्कन्धसुबोधिन्यां बोध्यम् ।१८६।१८७। ननु देवानां कलापानेन चन्द्रक्षयस्य सोमोत्पत्तावुक्तत्वादमृतपूर्त्या पूर्णतायाश्चोक्तत्वादत्रापि तथाऽभिप्रेतत्वाच्च कथं सूर्याधीना सेत्यत आहुः—क्षयेत्यादि । कलापानेत्यनेनोक्तं मतं तृतीयं वा । तथा च मूले कल्पान्तरमङ्गद्वात्तदप्यभिमेतमित्यर्थः । चन्द्रेण देवदिनव्यवस्थाप्रकारमाहुः-देवानामित्यादि । सूर्यस्य-

१ भवेत् ।

उत्तरायणषट्के हि रथानां दर्शनं भवेत्।
अधःस्थितान्[1] रथांस्ते हि न पश्यन्त्युच्चदर्शिनः ॥१८९॥
प्रभवादिव्यवस्थां तु सुराचार्यः करोति हि।
बुधशुक्रौ सूर्यसमौ सूर्येणैव निरूपितौ ॥१९०॥
तत्पुत्रो मङ्गलश्चैव क्रूरत्वान्न निरूपितौ।
सूर्याल्लक्षे यथा चन्द्रस्ततो भानि च तावता ॥१९१॥
ततोऽग्रिमग्रहाणां तु लक्षद्वितयमन्तरा।
उशना च बुधश्चैव तथाङ्गारक एव च ॥१९२॥
बृहस्पतिः शनिश्चैव ऋषयस्तु शनेः परे।
लक्षैकादशतोऽप्युच्चैः पश्चानां द्विगुणस्ततः ॥१९३॥

कस्मिन्नयने चन्द्रस्य षडावृत्तयो भवन्ति। तत्र तुलामारभ्य मीनान्ता देवानां रात्रिरुत्त-रायणषट्कम्, तस्मिन् रथानां चन्द्रमारभ्य ऋष्यन्तानां दर्शनं देवानां भवेत्। यदा पुनः सूर्यस्य मेषादिकन्यान्ते दक्षिणायनषट्कं तदा सूर्याधःस्थिता देवा उच्चदर्शिन इत्यु-परिष्ठान्न पश्यन्तीति तु दिनस्थितिः। इदमेव चन्द्रकृतममराहोरात्रवितानमित्यर्थः॥१८९॥

बृहस्पतिनिरूपणप्रयोजनमाहुः-प्रभवादीति बुधशुक्रशनिभौमनिरूपणप्रयो-जनमाहुः-बुधेत्यादि। न निरूपिताविति। सूर्यसमत्वेन न निरूपितौ। तथा चैतेषां कालोपाधिनियामकत्वाभावेऽपि फलनिरूपकत्वबोधनार्थं निरूपणमित्यर्थः॥ १९० ॥

अतः परं तत उपरिष्ठात्त्रिलक्षेत्यादिकं विचारयन्ति-सूर्यादित्यादि। ततश्चन्द्रा-द्भानि नक्षत्राणि च तावता लक्षयोजनोपरि कालायने वर्तन्ते। तथा च मूले त्रिलक्ष-योजन इति यदुक्तं तत्तेषां द्विलक्षयोजनोच्चस्वरूपविन्यासमन्तर्निवेश्येति ज्ञापितम्। तेषां देवगृहत्वात्। 'देवगृहा वै नक्षत्राणी'ति तेषां देवगृहरूपत्वश्रावणेन तावद्विन्यासस्य तत्रौचित्यादिति। अन्तरेति परस्परकक्षाव्यवधानम्।

ऋषीणां विन्यासप्रकारमाहुः ऋषय इत्यादि। पश्चानामृषीणां द्विगुणत्वात् एकत एकस्य लक्षद्वैगुण्याद् यौ पुनरपि समौ दृश्येते। सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ भवतोऽति पादशास्कन्ध उक्तौ तयोश्चापि लक्षं हि यतो हेतोर्ग्नोऽप्युच्चैर्लक्षैकादशतः शनेः परे उपरिष्टादृषयः सन्तीतियोजना। एवं सर्वानु[illegible]भिर्द्वाविंशोऽध्यायो विचारितः॥१९३॥

१ अवस्थितान्।

समयोश्चापि लक्षं हि ध्रुवस्तेभ्यस्त्रयोदश।
आध्यात्मिकांश्च तान् राशीनतिक्रम्य यतःस्थितः॥११४॥
पञ्चपात्रयुतस्तत्र मोदते कृष्णतत्परः।
भगवत्सेवकादेव सर्वं कार्यं यतो भवेत्॥११५॥
अन्ये सर्वे तदाधाराः स स्थिरः कार्यकृद्धरेः।
सवनत्रयधर्मस्तु तेषां गतिनियामकः॥११६॥
सूर्यवद्गमनं तेषामतः सम्पद्यते मया।
तेषामपतने हेतुर्वायुः कर्मेति केचन॥११७॥
वस्तुतो भगवानेव शिशुमारस्तदाश्रयः।
निवेशनं ततः प्राह सर्वेषां तत्र वै हरौ॥११८॥

(अ. २३) अतः परं पादोनाष्टभिस्त्रयोविंशं प्रकरणे तृतीयं विचारयन्ति। अत्र यद्यपि शिशुमारः प्रकरणी तथापि तस्योपजीव्यो ध्रुव इति (पूर्वं) तद्वर्णनात्पूर्वं तमेव विचारयन्ति ध्रुव इत्यादि। तस्य त्रयोदशलक्षोपरिष्टत्वे बीजमाहुः–आध्यात्मिकानित्यादि। यतः कालाध्यात्मिकरूपाँस्तान् द्वादशराशीन्मेषादीनतिक्रम्य तेभ्यो राशिस्थेभ्यस्त्रयोदशे तावल्लक्षोपरि विद्यमाने भगवत्स्थाने स्थितः। अतस्तत्र पञ्चपात्रयुतः पञ्चभिरग्नीन्द्रप्रजापतिकश्यपधर्मैर्भगवत्सेवायास्तत्कृपायाः पात्रैर्योग्यैर्युतः कृष्णतत्परो मोदत इति योजना। एवं'मथ तस्मादि'ति गद्यार्थ उक्तः। 'सर्वं'त्यादेरर्थं वदन्तस्तत्र स्थापनप्रयोजनमाहुः–भगवदित्यादि॥ ११५॥ तदाधारा इति। तदाधारत्वेन कार्यकर्त्तारस्त्रिभिः सवनैरिति कथनस्य प्रयोजनमाहुः सवनेत्यादि। प्रातर्मध्यंदिनतृतीयसवनेषु क्रियमाणो धर्मस्तेषां तथेति ज्ञापनार्थं तत्कथनमित्यर्थः॥११६॥ अन्तरिक्षे तद्गमन उपपत्तिमाहुः–सूर्यवदिति। तथा चान्तर्यामिसामर्थ्याद्गमनमित्यर्थः। अत्र गमकमाहुः–अत इत्यादि। यत एतद्गत्यादिकं भगवदधीनमत एव तज्ज्ञाने मया सम्पद्यते 'मये'ति भगवतोक्तमित्यर्थः। नभसि 'यथे'तिदृष्टान्तेन यदतिदिष्टं तत्र सिद्धान्ताभिप्रायेणेत्याहुः तेषामित्यादि। सिद्धान्तमाहुः–वस्तुत इत्यादि। तत्र गमकमाहुः–निवेशनमित्यादि। तथा च यथा केचित्स्वदेहान्तर्हृदयावकाश इति मतान्तरं तत्र आकाङ्क्षापूर्त्तिविषि स्त्वन एवादरणीयत्वाय गतान्तरमुक्तम्। तथेदमपीत्ययमेव मुख्यः पक्ष इत्यर्थः॥ ११८॥ ननु श्रुतौ शिशुमारोपस्थाने 'अग्निःपुच्छस्य प्रथमं

चत्वारो वा तत्सचिवाः कश्यपोऽत्र प्रजापतिः।
अभयं धर्म इत्युक्तं तेन सर्वाविरोधिता ॥१९९॥
अवतारचरित्रं हि धारणं विषमत्वतः।
न ह्येवमन्योऽवस्थातुं क्षणं शक्नोति कश्चन ॥२००॥
अन्यथा सकलां पृथ्वीं न द्रष्टा सुखवृत्तये।
एवं त्रिभिर्ध्रुवमर्यादा मध्यभूता निरूपिता ॥२०१॥
अतस्त्रिभिरधःस्थानमर्यादा सकलोच्यते।
सूर्यान्निरूपणं यस्मादतः स्वर्भानुवर्णनम् ॥२०२॥
प्रसङ्गाद् ग्रहणं चाऽऽह सूर्यादीनां तु गर्वनुत्।
ग्रहणं लोकसिद्धं हि न तु वेदे कथञ्चन ॥२०३॥

काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थमि'त्युक्तम्। इह तु पुच्छाग्रे ध्रुवमुक्त्वा तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्म इति कथमविरोध इत्यत आहुः–चत्वार इत्यादि। तस्य ध्रुवस्य सचिवाः सहकारिणोऽन्यादयश्चत्वारस्तथा सति प्रजापतिना कश्यपेनेत्यत्र प्रजापतिपदं कश्यपविशेषणं श्रुतावपि 'तेजसा कश्यपस्ये'त्युक्तत्वात्। धर्मपदं च श्रुत्युक्ताऽभयशब्दार्थनिर्द्धारकम्, सर्वदेवतानिवेशस्तु तत्रात्र च तुल्यः स्थानभेदः कल्पभेदादिति तेन सर्वमेवाविरुद्धमित्यर्थः ॥ १९९ ॥

तदेतदाहुः–अवतारेत्यादि, अवतारत्वे गमकमाहुः–नहीत्यादि ॥ २०० ॥ तथा स्थितौ प्रयोजनमाहुः–अन्यथेत्यादि। यद्यूर्ध्वमुखस्तिर्यङ्मुखो वा तिष्ठेत्तदा असुखस्य तुच्छसुखस्य वा हन्तये दूरीकरणाय सकलां पृथ्वीं न द्रष्टा न पश्येत्। तथा च तदुभयहननमेव स्थितौ प्रयोजनमित्यर्थः। ध्रुवप्रकरणमुपसंहरन्ति–एवं त्रिभिरित्यादि। मध्यभूतेति। 'मध्ये तिष्ठन्ति राजसा' इतिवाक्यात्। महर्लोकाद्यपेक्षया न्यूनत्वमत्राभिप्रेतम्। पूर्वत्र तु स्वर्गापेक्षयेति नोपक्रमविरोधः। एवं सार्धानसप्ततिभिर्ध्रुवप्रकरणं विचारितम् ॥ २०१ ॥

(अ० २४) अतः परं सार्द्धषोडशभिर्भूम्यधःस्थितमर्यादा विचार्यते–अतस्त्रिभिरित्यादि। अत इति अतः परम्, ननु भूम्यधःस्थमर्यादावर्णनप्रस्तावे राह्वादिवर्णनस्य किं प्रयोजनमित्यपेक्षां पूरयन्तो नवभिश्चतुर्विंशस्य प्रकरणप्रथमस्यार्थमाहुः–सूर्यादित्यादि। तथा च तावदनिरूपणे राज्ञो निराकाङ्क्षता न स्यादिति तदभावाय तन्निरूपणमित्यर्थः।

अन्तरिक्षं ततोऽधस्ताद् देवान्नीचस्थितौ हितम् ।
एवमेवोत्तरं नीचा ज्ञातव्या भागशः क्रमात् ॥२०४॥
दैत्या अतिबला युक्ता भक्ता वा मुरवैरिणः ।
अधःस्थानं स्थितौ तेषां तेन बल्यादिवर्णनम् ॥२०५॥
आनन्दस्य प्रतिष्ठा तु तत्रैवेति निरूप्यते ।
ज्ञानादिकं बाधकं हि दुःखं तत्र महत्तथा ॥२०६॥
अज्ञानतः सुखं तत्र सात्त्विकानां न रोचते ।
अतलादिषु सर्वत्र ततस्तादृशमीरितम् ॥२०७॥
भक्तिः सर्वत्रोत्तमेति तत्राऽप्युत्तमतोच्यते ।

उत्तरमिति उत्तरोत्तरम् । भागश इति यथायोग्यम् । एवमुत्पतन्तीत्यन्तस्य प्रासङ्गिकस्यार्थ उक्तः ॥२०२॥२०३॥२०४॥ अथ तदग्रिमाणामर्थमाहुः-दैत्या इत्यादि । तादृशं तेषां स्थानं कुत इत्यपेक्षायां तान् विशिषन्ति-अतिबला इत्यादि । बल्यादीत्यादिपदं सर्पनागयोरपि सङ्ग्रहार्थम् । तथा च मलयसाधनीभूता योगिनो भगवद्भक्ताश्च यथाभागं वसन्तीत्यर्थः ॥२०५॥ तत्रत्यसुखनिरूपणस्य तात्पर्यमाहुः-आनन्दस्येति । तमस आनन्दमूलत्वात्तदीयानन्दस्य प्रतिष्ठा प्रकर्षेण स्थितिस्तेष्वेव लोकेष्विति हेतोस्तत्रत्यं सुखं निरूप्यत इत्यर्थः । ननु तेषां स्वर्गाद्यधिकसुखवत्त्वे तानि देवैः कुतो नेष्यन्त इत्यत आहुः ज्ञानादिकमित्यादि । तत्र विनोदो मायाकृत इत्यतः स्वर्गाद्याधिक्यं माया च ज्ञानेन योगेन च बाध्यते, सुदर्शनप्रवेशजन्यं दुःखं च महत्, तथा सति तत्र सुखमज्ञानकृतमतो नेष्यत इति बोधनाय तथेरितमित्यर्थः । ननु तथापि सुतलसुखं न तादृशम्, इन्द्रादिष्व-विद्यमानयेति भगवदनुकम्पाविशेषणात् । तादृशानुकम्पासम्पादितस्याज्ञानकृतत्वा-भावादित्यत आहुः-भक्तिरित्यादि । उत्तम इति । आनन्द इति शेषः । तथा च स न बिलसम्बन्धी, किन्त्वतिरिक्त इति न बिलसुखस्य देयत्वमित्यर्थः । यदि भगवतो बलावीदृशी कृपा तदा भगवता तन्निग्रहस्य किं प्रयोजनमत आहुः-धर्मार्थमिति । तदीयधर्मस्य सत्यवाक्त्वादिरूपस्य ज्ञापनार्थम् । तथा च भगवान् जीवस्य

धर्मार्थं भगवाँस्तस्य निगृहीतेति वर्णनम् ॥२०८॥
भगवानुत्तमत्वं च पातालादिष्वकारयत्।
तत्परित्यज्य दुःखेन कर्मणा वर्तते यतः ॥२०९॥
एवं ज्ञानं तस्य वृत्तमिति तद्वाक्यवर्णनम्।
महादेवस्याऽपि भक्तस्तथा किं तु ततोऽधमः ॥२१०॥
ततो लोकत्रयं नीचं भयं किञ्चित्ततो मतम्।
तेषामेव सुखे हेतुर्भगवाँस्तामसस्तथा ॥२११॥
लक्षमात्रमियं भूमिः प्रायेणाऽत्र नियोगतः।

सत्येन दैन्येन स्वात्मन्यधमत्वज्ञानेनानहङ्कारेण तुष्यतीतिज्ञापनार्थं तद्वर्णनमित्यर्थः। ।२०६।२०७।२०८। ननु भगवत्कृपायाः बलिस्वभावस्य चैतावतैव ज्ञातुं शक्यत्वेऽपि तद्वाक्यवर्णनस्य किं प्रयोजनमत आहुः- भगवानित्यादि। उत्तमत्वमिति कृपास्वविषयस्य स्वीयस्येतिशेषः। दुःखेनेति भगवच्छ्मदानरूपेण ।२०९। 'तस्य वृत्तमिति बलेर्वृत्तं नेन्द्रस्य। तथा च सत्वसंरब्धमुख्यापेक्षया राजस एव भगवत्कृपावैशिष्ट्य उत्तमो भवतीति तदीयदास्यमेव वस्तुतः सर्वोत्तममिति ज्ञानं बलेर्जातं नेन्द्रस्येति तदपेक्षयाऽपि भक्त्युत्कर्षबोधनाय बलिवाक्यवर्णनमित्यर्थः। भयसुखनिरूपणतात्पर्यमाहुः-महादेवस्येत्यादि। इन्द्रापेक्षयाऽधिकत्वस्य बल्यपेक्षया न्यूनत्वस्य च ज्ञापनाय तद्वर्णनमित्यर्थः। एवं चतुर्विंशार्थः सार्द्धैर्नवभिरुक्तः॥ २१०३ ॥

(अ. २५) अतः परं त्रिभिः पञ्चविंशस्य प्रकरणद्वितीयस्यार्थमाहुः- तेषामित्यादि। ननु पातालमूले भगवत्स्थितेः किं प्रयोजनं भूमिधृतेः सामर्थ्येनापि सम्भवादित्यत आहुः-तेषामित्यादि। अधोलोकनिवासस्तामसकर्मभिरज्ञानं च, राजसकर्मणा चासुरत्वं दुःखं च, 'कर्मणः सुकृतस्याहु'-रितिगीतावाक्यात्। अतो भगवान् सङ्कर्षणस्तेषां त्रिलनिवासिनामेव सुखहेतुः। तथा तमस उपलक्षणमेतत् नरकस्य सुखहेतुः। अन्यथैतेषु सुखवर्णनं नात्र क्रियेत, नारकी च निर्वृतिर्न स्यात्। तथा चैतत्कार्यद्वयार्थं तत्र स्थितिरित्यर्थः ॥२११॥ सङ्कर्षणस्थितिः पातालमूले ब्रह्माण्डमूलाऽधो वेति सन्देहनिवृत्त्यर्थमाहुर्लक्षमात्रेत्यादि। इयं शेषेण ध्रियमाणा भूमिर्लक्षमात्रं प्रोक्तेति सम्भाव्यते। प्रायेणेति सम्भावनार्थकम्। तत्र हेतुः,

उपयुक्ता ततः प्रोक्ता न तु पृथ्वी हि तावती ॥२१२॥
तस्याधःस्थात् स्थितौ हेतुः संसारो जगतो मतः।
सुखं च विषयोक्तस्य कीर्त्तिश्चाऽपि निरूप्यते ॥२१३॥
दृष्टैव तामसत्वं हि सात्त्विको वस्तुतो मतः।
सुखोत्तमस्य हीनत्वे प्रश्न उत्तरमेव च ॥२१४॥
दुःखं सर्वत्राऽविशिष्टमतः प्रश्नस्तु नारकः।

हि यतो हेतोः नियोगतः कर्मचोदनात उपयुक्ता कर्मोपयोगिनी ततो हेतोः। तथा च यावती वराहावतार उद्ध्रियते तावती, तेन पातालमूलमेव गद्येऽभिमेतमित्यर्थः। अन्यथाऽवान्तरप्रलयो न घटेतेति भावः। तदाहुः—न तु पृथ्वीति। ब्रह्माण्डरूपाऽशेषधार्या न भवतीत्यर्थः। अनेनैव हेतुरुक्तः। तथा च सा सर्वावरणसंयुता गुणप्रवाहे अक्षरब्रह्मणि वा तिष्ठतीति तस्याः पृथ्वीत्वेनाधारान्तरापेक्षाभावादितिभावः ॥२१२॥ तर्हि तद्वदियमपि जल एव स्थास्यतीति किं शेषस्थित्येत्यत आहुः—तस्येत्यादि। तथा च लोकानां स्वस्तय आस्ते इति कथनात्संसारः पूर्वोक्तं बिलसुखं प्रमुक्षुपकारश्च तत्र स्थितौ हेतुरित्यर्थः। अत्र मध्यमं श्रुतार्थापत्तिसिद्धमादिमन्तिमं कण्ठोक्तं ज्ञेयम् ॥२१३॥ अत्र प्रथमगद्ये तामसी कला सात्वतीत्युभयमुक्तं तद्विरोधपरिहारायाहुः—दृष्टयेत्यादि। 'असदृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचन' इतीत्याकृतवर्णने शिववाक्यं बीजं ज्ञेयम्। एवं प्रकरणे द्वितीयः पञ्चविंशत्रिभिर्विचारितः।

(अ, २६) अतः परं चतुर्भिः षड्विंशं तृतीयं विचारयन्तो 'महर्ष एतद्वैचित्र्यमि'ति प्रश्नस्य तदुत्तरस्य च तात्पर्यमाहुः—सुखेत्यादि। सुखं तु सर्वोत्तमयुक्तं तद्धेतुकथने [illegible] कामः कर्म चोक्तम्। तत्र कामकर्मजन्यत्वेऽपि हीनताप्रयोजकज्ञानाय प्रश्नः। उत्तरं 'त्रिगुणत्वादि'त्यादिनोक्तं त्रैगुण्यजन्यत्वेन हीनत्वज्ञापनार्थमेवेत्यर्थः ॥२१४॥ ननु नरकाणां प्रसिद्धत्वात्किं देशविशेषा इत्यादिप्रश्नस्य को वाऽऽशय इत्याकाङ्क्षायामाहुः—दुःखमित्यादि। तथा च नरकस्य पापभोगोपयुक्तत्वात् तत्फलस्य च दुःखात्मकत्वात्तस्य च सर्वत्र तुल्यत्वात्कुतस्तेषां बहुत्वं कुतश्च गुणप्रधानभाव इति

१ यथा। २ धृङ् अवस्थाने इतितुदादिगणस्थधातोः कर्त्तरि रूपम्।

देशा न नरकं किन्तु कर्मणेति तथोत्तरम् ॥२१५॥
यमश्च पितरश्चैव ततस्तत्र निरूपिताः।
कर्माण्येव निमित्तानि सर्वेषां तु यथा भवेत् ॥२१६॥
नरकश्च तथा स्वर्ग इत्यन्ते स्वर्गवर्णनम्।
भगवद्व्यतिरिक्तस्य वर्णनं नैव युज्यते ॥२१७॥
इत्याशङ्क्य हरे रूपवर्णनेनोपसंहृतिः ॥२१७½॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वार्थदीपनिबन्धे
श्रीभागवतार्थप्रकरणे पञ्चमस्कन्धार्थनिरूपणं
समाप्तम्।

---

प्रश्नस्याशय इत्यर्थः। उत्तराशयमाहुः—देशा नेति। देशास्ते स्वरूपतो न बहवः, किन्तु कर्मणा, तथा चैकत्रैव कर्मविश्रमान्त्येऽपि तत्तत्कर्मैव तेषां बहुत्वे गुणप्रधानभावे च प्रयोजकमिति बोधयितुमेकैव कर्मतत्फलभोगविवरणप्रकारेणोत्तरमित्यर्थः ॥२१५॥ अत्र गमकमाहुः—यम इत्यादि। तथा चैवं वत्सलैरपि पितृभिस्तत्सहायाकरणाद्यमेन तद्विवेचनाच्च कर्मैव निमित्तमित्यर्थः। गमकान्तरमाहुः कर्माणीत्यादि। स्वर्गवर्णनमिति। तथैव धर्मवर्त्तिन इत्येनन सूचितम्। शेषं स्फुटम्।

॥ इति श्रीमत्प्रभुचरणदर्शिता पुरुषोत्तमदृष्टा
पञ्चमस्कन्धनिबन्धयोजना
सम्पूर्णा ॥



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

## अथ तत्त्वार्थदीपनिबन्धे भागवतार्थप्रकरणे

# षष्ठस्कन्धविवरणम् ।

एवं कृष्णजयाख्यं हि पञ्चमे स्थानमीरितम् ।
एकोनविंशैरध्यायैः पुष्टिः षष्ठे निरूप्यते ॥ १ ॥

---

श्रीबालकृष्णो विजयते ।

## अथ षष्ठस्कन्धनिबन्धस्य योजना ।

अथ षष्ठस्कन्धार्थं निवक्षन्तः पूर्वस्कन्धे स्थानं यथा महापुराणसामान्यलक्षणभूतस्थितिविशेषरूपमलौकिकं निरूपितमेवमस्मिन्नपि स्कन्धे रक्षाविशेषरूपं पोषणमलौकिकं निरूप्यत इति बोधयन्तः पुष्टिनिरूपणं प्रतिजानते एवमित्यादि। एवं तस्य तस्य तत्र तत्र नियमनेन कृष्णजयाख्यं स्थानं स्थितिविशेषरूपम्, हि यतो हेतोः पञ्चमे ईरितम्। अतो हेतोः षष्ठे कृष्णानुग्रहरूपा पुष्टिरेकोनविंशैरेकोनतत्बोधकतया मुख्य ऊनविंशो यत्र तादृशैरूनविंशतिभिरध्यायैर्निरूप्यते। द्वादशे स्कन्धे रक्षा चतुर्थं लक्षणम्। सा च ‘रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे। तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः’ इत्येवं लक्षिता। तदर्थस्तु विश्वस्याऽनु विश्वोत्पत्त्यनन्तरं युगे युगे प्रतियुगं तिर्यङ्मर्त्यर्षिदेवेषु विद्यमानास्त्रयीद्विषो हन्यन्ते। तादृशी या अच्युतावतारेहा अच्युतस्य अवताराणां वा ईहा चेष्टा सा रक्षेति। एतस्याश्च लक्षणत्वं नावतारलीलात्वेन तुरीयपादव्यर्थत्वापत्तेः, लीलान्तरेऽतिव्याप्तेश्च। नापि त्रयीद्वेषिनिवारकत्वेन सृष्ट्यादिक्रियायामतिव्याप्तेः, अच्युतावतारपदवैयर्थ्यापत्तेश्च। किन्तु वेदविरोधिनिवारकभगवल्लीलात्वेन तादृशावतारलीलात्वेन वा। तथा सति तस्याः पुराणान्तरसाधारणत्वेऽप्यलौकिकत्वानपायात्। अत्र यथा तदुक्तावपि न दोषस्तथापि तत्र हननप्रकारस्य लौकिकत्वादत्र च विशेषलक्षणानामेवोपक्रान्तत्वेन

कृष्णानुग्रहरूपा हि पुष्टिः कालादिबाधिका।
अनुग्रहो लोकसिद्धो गूढभावान्निरूपितः॥ २॥
देवगुह्यत्वसिद्ध्यर्थं नामध्यानार्चनादिकम्।
पुरस्कृत्य हरेर्वीर्यं नामादिषु निरूप्यते॥ ३॥

प्रकारस्याप्यलौकिकत्वविवक्षयाऽनुग्रहरूपा भगवल्लीलोच्यत इत्यर्थः। एवं प्रतिज्ञायां स्वरूपकथनेन रक्षाविशेषरूपतां समर्थयित्वा येनास्या विशेषत्वं तं प्रकारमाहुः-कृष्णेत्यादि। महापुराणान्तरोक्तरक्षा हि त्रयीद्विषां स्वरूपमात्रनाशिका न तु तद्द्वेषमूलकारणस्य स्वभावस्य सहकारिणः कालादेश्च बाधिका, नापि तेषां मोचिका। पुष्टिस्तु तेषामपि स्वभावस्य बाधिका यया स्वरूपतः सन्तोऽपि न त्रयीं द्विषन्ति हताश्च मुक्ता भवन्ति। अतः प्रकारोऽप्यत्रालौकिक इत्यर्थः। नन्वनुग्रहस्याऽप्रसिद्धत्वाल्लक्षणमसम्भवीत्याकाङ्क्षायामाहुः-अनुग्रहो लोकसिद्ध इति। अनुग्रहः कृपाऽपरपर्यायो मनस आत्मनो वा धर्मविशेष इच्छादिव्यतिरिक्तो लोकसिद्ध इति लोके क्षीणधनस्याधमर्णस्य उत्तमर्णः स्वल्पधनग्रहणेनानृणित्वसम्पादने, स्मृतौ प्रायश्चित्ताशक्तस्य पातकिनः पापनिवृत्तये स्वल्पप्रायश्चित्तबोधने च यत्पदनुग्रहत्वादिरूपेण प्रसिद्धोऽतो न लक्षणमसम्भवीत्यर्थः। नन्वन्यधर्मो भगवति कुत उच्यत इत्यत आहुः गूढेत्यादि। कम्पनाधिकरणविषयवाक्येन प्रलयकर्तृत्वेन च भगवतः क्रूरत्वावगमात्स न प्रसिद्धो वस्तुतस्त्वस्तीति गूढभावात्। अनुकृत्यधिकरणे सर्वस्य भगवदनुकारितायाः सिद्धत्वाल्लौकिकेन तेनानुमेयः सोऽत्र मूलरूपे कार्यद्वारा निश्चायित इत्यर्थः॥ २॥

नन्वत्र कालादिनिवर्त्तकत्वं नामादिषु प्रतीयते न तु पुष्टाविति कथं तस्यास्तथात्वमित्यत आहुः-देवेत्यादि। न हि पुष्टेस्तथात्वं मनुष्याणामेव दुर्ज्ञेयम्। किन्तु देवानामपीति देवगुह्यत्वज्ञापनार्थं तद्व्यापारभूतं नामादिकं तथात्वेन निरूप्यत इति शेषः। ननु कथमेतदवगम्यत इत्याकाङ्क्षायामाहुः-पुर इत्यादि। अत्र हि नामादिषु यत्तथात्वं निरूप्यते तत्र नामत्वादिकं पुरस्कृत्य किन्तु 'नामव्याहरणं विष्णोर्महापुरुषपूजायाः सिद्धिः काम्यानुपङ्क्तिकीत्यादिकथनाद्भगवद्वीर्यं पुरस्कृत्येति तेनावगम्यत इत्यर्थः। न चात्र षष्ठ्या तत्पुरुषेण च सम्बन्धमात्रमेव तथा (कालादिनिवर्त्तकः) अवगम्यते न वीर्यमिति शङ्क्यम्। इतरबाधनरूपेण रक्षारूपेण च कार्येण तस्य

मतान्तरस्य भाषा तु नामप्रकरणे मता ।
ध्याने हरिप्रवेशस्तु स्पष्टः प्रोक्तस्तथाऽर्चने ॥ ४ ॥
त्रिभिराद्यं प्रकरणं नराणां देवदैत्ययोः ।
चतुर्दशभिरध्यायैर्द्वाभ्यां चैव निरूप्यते ॥ ५ ॥
नाम त्रिविधसम्बन्धाद्वात्मगामि भवेद्यतः ।
श्रवणात्कीर्तनात्स्मृत्या ततोऽध्यायत्रयं मतम् ॥ ६ ॥

तथात्वावगमात् *, लोके तथा दर्शनात् । अत एवानुग्रहस्येच्छादिभ्यो भेदः । प्रसाद-कृपादीन्यस्यैव पर्यायाः । एवं च कालादिनिवर्त्तकोऽनुग्रहापरनामा वीर्य-विशेषरूपो भगवद्धर्मः पुष्टिरिति सिद्धम् । अत्र च वेदतात्पर्यानभिज्ञपमदूत-ताडनाद्धर्मालोककर्तुर्विश्वरूपस्य पापस्य वृत्रस्य च हननादितिगर्भच्छेदनाच्च सामान्यलक्षणसमन्वयः । एवमजामिलदुष्कर्मण इन्द्रमृत्योर्वृत्रस्वभावकर्मणोर्दितेः स्वभावस्य मरुतां कालकर्मस्वभावानां बाधनाच्च विशेषलक्षणसमन्वयः ॥३॥

एवमत्र त्रिभिः स्थितिकरणभूतः स्कन्धार्थो निर्णीतः । पूर्वस्कन्धत्रये जगज्जन्म-करणभूतसर्गादिनिरूपणवत् । अतः परं प्रकरणार्थो निर्णेयः । तत्र नामादीन्येवात्र भगवत्सम्बन्धीन्युच्यन्त इति व्यापारतया तान्येव प्रकरणीनि, नरादिवाङ्मनःकर्मणां तदभिव्यञ्जकतयोपयोग इत्यनुग्रहविषयाणां नरादीनामपि तथात्वम्, स्थितिलीलाया-श्चिवक्षितेन्द्रादिस्थितिफलम्, तदेतद्बोधयितुं प्रकरणिनो विचारयन्तः प्रथमप्रकरणे विशेष-माहुः-मतान्तरेत्यादि । नाम्नि भगवत्सम्बन्धस्यौपचारिकत्वात्कथमेवं सामर्थ्य-मित्याशङ्कानिरासकस्तुः । भाषाप्रयोजनं त्वग्रे वाच्यम् । स्फुटमन्यत् ॥४॥

एवं प्रकरणार्थं निर्णीय पुष्टिविषयानधिकारिणः स्फुटीकुर्वन्तोऽध्यायान् विभजन्ते त्रिभिरित्यादि । अत्र 'नराणामि'ति बहुवचनादग्रेऽपि देवानां दैत्याना-मिति बोध्यम् । द्विवचनप्रयोगस्तु जात्येकत्वाभिप्रायेणेति च । तथा च देवप्रकरणे चतुर्दश दैत्यप्रकरणे द्वावध्यायावित्यर्थः । तावतां तत्र प्रयोजनमाहुः-नामेत्यादि ।

* नामादिषु भगवद्वीर्यस्य कालादिनिवर्त्तकत्वावगमात् । अनुग्रहस्य कालादिनिवर्त्तक-त्वादेव कालादिप्रवर्त्तकेभ्य इच्छादिभ्यो विभेदः ।

रूपं चतुर्दशगुणं प्रत्येकं हृदि भावितम्।
फलत्येवेति तावद्भिरध्यायैर्विनिरूपणम् ॥ ७ ॥
*रूपेण मोक्षदः प्रोक्तो रसेनाऽऽनन्ददायकः।
गन्धेन भक्तिदः प्रोक्तः स्पर्शेनाऽखिलतापनुत् ॥ ८ ॥
मनोहरस्तु नादेन योगेनाऽऽत्मप्रवेशदः।
कालमोक्षप्रदो द्विष्टः स्वामी सर्वसुखप्रदः ॥ ९ ॥
हीनभावाद् दुःखदश्च केवलः सकलार्थदः।
मितो योगप्रदः प्रोक्तो भिन्नो मृत्युप्रदः स्मृतः ॥१०॥
यथास्थितो ज्ञानदश्च स्नेहाद्वश्यो भवेद्ध्रुवम्।
पूजाऽपि द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥११॥
अतोऽध्यायद्वयं तत्र क्रिया सा त्रिविधो हरिः।
नामरूपे क्रिया चैव हरेः सर्वहितप्रदः ॥१२॥
एतत्त्रयं प्रसन्नश्चेद्ददाति न ततोऽन्यथा।

हरिरित्यन्तैः सार्धैः पद्भिः। चतुर्दशगुणम् इति चतुर्दशधर्मकम्। द्विष्ट इति द्वेषित्वेन भावितः। एवमग्रेपि हीनभावादिति। हीनत्वेन भावनात्। मितो ज्ञातः। क्रिया सेति प्रकरणार्थरूपा पूजा त्रिविधोहरिरिति। त्रयं वा इदं नाम रूपञ्च कर्म चेति श्रुतौ प्रपञ्चस्यात्मकत्वमुक्तम्। अत्र प्रकरणत्वेनोच्यमानं त्रयं न प्रपञ्चरूपं किन्तु तत्त्रितयप्रकारको भगवानेवेत्यर्थः। अत्र गमकमाहुः—नामेत्यादि। तथा च सर्वहितप्रदत्वमेव तेषां भगवद्रूपत्वगमकमिति त्रयाणामनेन रूपेण प्रकरणार्थतेत्यर्थः। एतेनाध्यायार्था अप्युक्ता एव। एतेषां व्यापारत्वं स्फुटीकुर्वन्ति–एतत्त्रयमित्यादि। तथा च हितस्वरूपां स्थितिं प्रसन्नो ददातीति भगवान् कर्त्ता प्रसादः पुष्ट्यात्मकः करणं नामादित्रयं व्यापारः सोऽपि भगवत्प्रसादेनैव प्राप्यो नान्यथेत्यर्थः। नतूक्तविधं नामादित्रयं प्रसादलभ्यं यथा तथैव भक्तिरपि, 'कर्हिचित्स्म न भक्तियोगमि'तिवाक्येन तथाऽनुमानात्। तथा च कारणसाम्ये कथं न भक्तेरे-

* रूपेण मोक्षद इति. अत्रत्यं निबन्धकठिनांशविवेचनं दीर्घत्वात् पञ्चस्कन्धान्ते निवेषितम्, ततोवलोकनीयम्।

पुष्टिः स्वार्था परार्था तु भक्तिः साऽनवमे मता ॥१३॥
अजामिलो दासयोग्यः प्रागेव हरिणा तथा ।
विचारितो गर्वमुक्त्यै तथात्वं प्रापितो बलात् ॥१४॥
स्वभावदुष्टा जीवा हि स्वधर्मोत्कर्षभावुकाः ।
अतस्तथाविधं कृत्वा स्वात्मसात्कुरुते हरिः ॥१५॥
भक्तस्यैवंविधत्वं हि न समाधावभीप्सितम् ।

तत्स्कन्धे कथनमित्यत आहुः-पुष्टिरित्यादि । अत्रोक्ता पुष्टिः स्वार्था जीवहितकरी । भक्तिस्तु परार्था भगवत्कार्योपयोगिनी, सा अनवमे पूर्णे प्रसादे मता । तथा च कारणभेदात्कार्यभेदाच्च तस्या नैतत्स्कन्धार्थतेत्यर्थः । एवं दशभिः प्रकरणत्रयार्थः सामान्यतो विचारितः ॥१३॥

अतः परं प्रथमप्रकरणार्थं विशेषतो विचारयन्ति-अजामिल इत्यादि सार्द्धोनपञ्चसार्धाभिः । योग्यतायां हेतुमाहुः-प्रागेवेत्यादि । तर्हि कथमेवं भाव इत्यत आहुः-गर्वेत्यादि । बलादिति स्वभावदोषबलात् ॥१४॥ स को वा दोष इत्यत आहुः-स्वभावेत्यादि । चिदंशा हि जीवा अविद्यया व्याप्ताः स्वदेहद्वयाहमा स्वधर्मं गुणक्रियात्मकं उत्कर्षं भावयन्ति । अहमीदृश एवमहं करोमि नान्यो मत्सम इति सोऽयं दोष इत्यर्थः । अत इति तद्दोषनिवारणं मनसिकृत्य 'आत्मसात्कुरुते' इति अङ्गीकरोति । तत्र हेतुः-हरिरिति । जीवदुःखहर्ता । तथा च यः स्वदास्यार्थं विचारितः स्वभावदोषवशाद्बहिर्मुखो भवति तं स्वविचारितप्रसादानुसारेणैवं बाहिर्मुख्यमपनयन् तस्य हितं करोतीति जीवदोषनिवारकोऽनुग्रहोऽत्र प्रकरणे पुष्टित्वेन विवक्षित इत्यर्थः । 'पुष्टिः स्वार्थे'ति यदुक्तं तदेताभ्यां श्लोकाभ्यां विवृतम् । तावता तादृशस्थानपोषणबोधकयोः स्कन्धयोः सान्निध्येन मर्यादासंवलनात् मर्यादापुष्टिरिति या प्रसिद्धा सेयमिति फलति । एवमग्रिमप्रकरणयोरपि बोध्यम् । एतादृशे स्वभावजावन्येऽप्येवं कर्मस्वभावयोर्निवृत्तिं नृशरीराणामेव करोति 'तेषां मे पौरुषी प्रिये' तिवाक्यादिति बोधयितुमस्य नरप्रकरणत्वं पूर्वमुक्तं त्रिभिरात्र्यं प्रकरणम् । नराणामिति मनुष्याणां प्रियत्वादेव प्राथम्यमिति च ॥१५॥

नन्वेवं सत्यत्र मतान्तरभाषा व्यासचरणैः किमित्युपन्यस्तेत्याकाङ्क्षायामाहुः-भक्तस्येत्यादि चरणत्रयम् । नन्वनभिमेतत्वे उपन्यासोऽप्यनुचित इत्याशङ्कायामाहुः-

१ नवमे ।

अतो मतान्तरी भाषा नामस्वातन्त्र्यतोऽपि च ॥१६॥
वृत्तान्तश्रवणं तस्य ततः कीर्त्तनशंसनम् ।
फलं तस्येति सकलं द्वितीये विनिरूपितम् ॥१७॥
सिद्धान्तकथनं पश्चाद्बलात्कृतिनिवारणे ।
यमवाक्यस्मृतौ सर्वे स्मरन्ति हरिनाम हि ॥१८॥
प्रायश्चित्तप्रसङ्गेन नाममाहात्म्यमीरितम् ।
पुष्टौ तथापि तत्प्रोक्तं तेनाऽत्रेयं व्यवस्थितिः ॥१९॥

नामेत्यादि । तथा च नास्योपाख्यानस्य सर्वांशेनानभिप्रेतत्वमत उपन्यास इत्यर्थः । नन्वेवं सति मतान्तरभाषात्वमनतिप्रयोजनमिति शङ्कात्वे तत्प्रकरणविमर्शसमाप्तावगस्त्यः शिवभक्तोऽपीत्यादिना निरसनीया । तस्मात्सुष्ठूक्तं नामस्वातन्त्र्यत इति । एवं त्रिभिः प्रथमप्रकरणार्थं विचार्य द्वाभ्यामध्यायार्थमाहुः—वृत्तान्तेत्यादि । अत्राद्यचरणे प्रथमाध्यायार्थः शेषे द्वितीयस्य अग्रिमे तृतीयस्य । बलात्कृतिनिरवाण इति । बलात्कारनिवारणार्थं यममुखेन तन्निरूपणस्य प्रयोजनमाहुः—यमेत्यादि । एतेनाभिप्रेतत्वे युक्तिरुक्ता । एवं द्वाभ्यां सामान्यतोऽध्यायार्थ उक्तः ॥१६॥१७॥

अतः परं विमृशन्ति, नन्वत्र पुष्टौ निरूप्यायां नाम्नस्तद्व्यापारत्वात्तन्माहात्म्यकथनं युक्तम् । अस्य शास्त्रस्य भक्त्युत्पादकत्वेन नामकीर्त्तनस्य च भक्तित्वेन तत्र विश्वासदार्ढ्यार्थं तस्यावश्यकत्वात् । तथापि प्रायश्चित्तप्रसङ्गेन तत्कथनमनुचितम् । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधन'मिति हेमाद्रौ । तल्लक्षणेन तस्य पापनिवारणमात्रफलकतया ततो भक्तिफलाभावप्रसङ्गात् । न च संयोगपृथक्त्वेन तत्सिद्धिः । 'दध्ना इन्द्रियकामस्य जुहुयात् खादिरं वीर्यकामस्य यूपं कुर्या'दित्यादिषु तदुदाहरणेष्वेकस्य फलस्य प्रत्यक्षसिद्धत्वेनेतरस्य च काम्यत्वेनोभयोर्मुख्यतेति तत्र तत्प्रवृत्तिः, अत्र तु पापनिर्देशस्यैव काम्यत्वेनेतरस्याकाम्यत्वेनाप्रत्यक्षत्वेन च तस्य गौणतयोदाहरणवैधर्म्यात् । वैधर्म्येऽपि ग्रहिलतया तत्प्रवृत्त्यङ्गीकारे योगसिद्धचिकित्सान्यायप्राप्तेः । अत पुष्ट्यनुपक्रान्तायां कथमेवं कथनमित्याशङ्कामपनुदन्ति प्रायश्चित्तमित्यष्टभिः । तत्प्रोक्तमिति ज्ञानिभक्तेन शुकेन प्रोक्तम् । उक्तदोषविशेषान् । सर्वमिति पूर्वोक्तदोष पापञ्च । पश्चादिति ज्ञानतिरोधानोत्तरम् । तथेति हेतुभूतम् । शेषं स्फुटम् । तथा

१ भगवत्सेवका ये तु कथञ्चिद् भिन्नतां गता इत्यत्र कथञ्चित्पदस्य व्याख्यानमिदम् ।

भगवत्सेवका ये तु कथञ्चिद्भिन्नतां गताः।
सर्वात्मना पापनाशस्तेषामेव भवेद् ध्रुवम् ॥२०॥

चैवंविधव्यवस्थां बोधयितुं मर्यादापवादं च बोधयितुं तथोपक्रम इत्यर्थः। न च न्यायबाधदोषः। उत्तरतन्त्रे गुणोपसंहारन्यायमणयनेन योगसिद्ध्यधिकरण-न्यायबाधस्येष्टत्वात्। एतेन भक्तेः कल्पतरुस्वभावत्वमपि विवृतं ज्ञेयम्।

एवं सत्ययमाशयः। राजा हि लीलात्रयं विराड्ध्यानाङ्गत्वेन श्रुत्वा स्थान-श्रवणे भगवतस्तत्तन्मर्यादास्थापकत्वमवगत्य स्वस्य ब्राह्मणावज्ञाकर्तृत्वेन तन्निर्वेशस्या-कृतत्वाद्भगवानभयं न दास्यतीति तत्प्राप्तिविलम्बभीतो निर्वेशं पप्रच्छ 'तन्मे व्याख्यातुमर्हसी'ति मदर्थं कथयेत्यर्थः। तत्र श्रीशुकैस्तदधिकारपरीक्षार्थं सामान्योत्तरे दत्ते यदा राज्ञा तस्य वैयर्थ्यं कुञ्जरशौचदृष्टान्तेन बोधितं तदा तदुक्तमुपगम्य कर्मात्मक-प्रायश्चित्तस्याऽज्ञाधिकारकत्वं बोधयित्वा राजाधिकारानुसारेण तद्बोधयन् श्रीशुकः 'प्रायश्चित्तं विमर्शन'मित्यादिना द्वयमुवाच। 'तत्र नाश्नत' इत्यादिश्लोकत्रयेणैकं 'केचि'दित्यादिपञ्चभिरपरम्, ततो द्वितीयं दृढीकर्तुमितिहासमुक्तवान्। तयोः प्रथमं विमर्शनं तद्देहात्मभेदालोचनात्मकं तत्र पथ्यभोजनदृष्टान्तपूर्वकम्। 'एवं नियम-कृद्राजन् शनैः क्षेमाय कल्पत' इति कथनेनाग्रिमे तपःप्रभृतीनां तदङ्गानां च कथनेन तत्समग्राङ्गधर्मस्य श्रद्धालोः कर्तुर्बहुकालेन नाशयति। तत्राऽप्यग्निदृष्टान्तेन सावशेषमेव नाशयति। वेणुगुल्मदाहे मूलस्य भूमौ दर्शनात्। वह्निनिवृत्तौ पुनः प्ररोहदर्शनाच्च। द्वितीया भक्तिः। सा च भगवति परमप्रेमरूपा 'यथा कृष्णार्पितप्राण-'मिति कर्तृविशेषणादवसीयते। तया च कार्त्स्न्येनाघधुवनं नीहारभास्करदृष्टान्तेनोक्तं निःशेषनाशबोधनाय। ततो रात्रौ पुनर्नीहारदर्शनादत्रापि सावशेष एव नाशो भविष्यतीति शङ्कानिरासाय। 'तथा ह्यघवानि'त्येतेन श्लोकेन पूर्वोक्ततपआदिसहित-विमर्शनकृतपावनस्यैतत्कृतपावनान्न्यूनतोक्ता। ततः 'सध्रीचीनो ह्ययं पन्था' इत्यनेन भक्तिमार्गस्योत्कर्षो बोधितः। तेन भक्त्या निरवशेषः पापनाश इति नीहारनाशोऽपि तथा। रात्रौ तु पुनर्नीहारान्तरमेवेति दृष्टान्तो दृढीकृतः। ततः 'प्रायश्चित्तानि चीर्णा-नी'त्यनेन राजोक्तकुञ्जरशौचदृष्टान्तस्य 'कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यत' इति स्वोक्तस्य च निर्णयः कृतः। भगवद्विमुखं न निःपुनन्तीति भगवद्विमुखा एव चाविद्वांस इति। तेन युधिष्ठिरादिकृताश्वमेधादीनामपि पावनत्वं बोधितम्। ततः कर्मजडानां भक्तौ सहकारित्वमेव न मुख्यत्वमिति भ्रम इति तादृशाशङ्काभावाय

१ कारस्त्वम्।

अन्येषां ज्ञानकर्मभ्यां सावशेषक्षयो भवेत् ।
तत्राऽपि कर्मणा नाशः कुञ्जरस्नानवन्मतः ॥२१॥
अधमानां लौकिकानां न विश्वासस्तु नामनि ।
देहात्मबुद्धौ नष्टायां न पापस्फुरणं मतम् ॥२२॥
ज्ञाने तिरोहिते[2] सर्वं सहसैव भविष्यति ।
पश्चाच्चेत्पापनाशेच्छा कर्मणो दोषदर्शनात् ॥२३॥
भक्तौ प्रवेशे हि तदा तं भक्ता मोचयन्ति हि ।
अतः पापक्षये नाम भक्तानां ज्ञानिनां तथा ॥२४॥
नाऽन्येषां तेन भक्तानां मोचकत्वं निरूपितम् ।
मर्यादया कृतार्थाःस्युः[3] यदि पापं न जायते ॥२५॥

'सकृन्मन' इत्यनेन सकृत्कृतायाः स्वल्पाया अपि केवलाया भक्तेर्निःशेषपापनिवारकत्वाय तस्याः यमाद्यदर्शकत्वमुक्त्वा तथा च हार्द्ययेतिहास उपन्यस्तस्तेन सर्वात्मना पापनाशः कृष्णार्पितप्राणानां भगवत्सेवकानामेव । तादृशां पापसम्भवस्तु स्वधर्मोत्कर्षभावनादोषात् । एवमेव 'स्वपादमूलं भजतः प्रियस्ये'त्यत्रापि बोध्यम् । इदमेव 'ध्रुवमि'त्योनेनोक्तम् । एवमेकेन 'केचित्केवल्ये'त्यादिश्लोकद्वयतात्पर्यमुक्तम् । ये पुनर्भक्तेः सहकारित्वं ज्ञात्वा कर्मणि ज्ञाने वा पापनाशार्थं प्रवर्त्तन्ते तादृशां ताभ्यां सावशेषः पापक्षयः । तदेतद् 'अन्येषा'मित्यर्द्धेनोक्तम् । तेन 'विमर्शनमि'त्यादिकथनस्यैकं तात्पर्यमुक्तम् । ये पुनः सहकारित्वमपि न मन्यन्ते तेषां केवलेन कर्मणा पापनाशः कुञ्जरस्नानवद्व्यर्थः । तत्र हेतुः अधमानामित्यादि । ये पुनः शुष्कज्ञानिनो 'येऽन्येऽरविन्दाक्षे'त्यादिपूक्तास्तेषां शनैः साङ्गेन केवलज्ञानेन, नाशेऽपि पुनः प्ररोहः पापस्य, अपथ्याशने रोगस्येव । तदेत'देहात्मबुद्धावि'त्येकेनोक्तम् । एवं 'वेणुगुल्मभिवानिल' इत्यन्तस्य द्वितीयं तात्पर्यं विवृतम् । तेन विमर्शनस्य प्रायश्चित्तत्वबोधनं व्यवस्थाद्वयबोधनायेति बोधितम् । ननु भक्तेर्माहात्म्ये वक्तव्ये 'तत्पुरुषनिषेवये'ति 'सुशीलाः साधवो यत्रे'ति मध्ये भक्तनिवेशस्य किं प्रयोजनमत आहुः—पश्चादित्यादिद्वयम् । तथा च तत्पुरुषेत्यादिसपादः श्लोको येषामजामिलादिसदृशां प्रतिबन्धबाहुल्यं तेषां द्वारापेक्षाया आवश्यकत्वात्तत्पर इत्यर्थः । फलितमाहुः—मर्यादये-

१ क्वचित् । २ तिरोहितम् । ३ कृतार्थस्तु ।

अतस्तदपवादार्थं पुष्टिमार्गया विशेषतः ।
प्रायश्चित्तप्रसङ्गेन ततः पुष्टेरुपक्रमः ॥२६॥
नामोच्चारणकर्तारस्त्रिविधा अधुना मताः ।
प्राकृताः पापनाशस्तु तेषां फलनिरूपणम् ॥२७॥
यथाकथञ्चिन्नाम्नाऽपि सर्वपापक्षयः सदा ।
अन्ते तु मुक्तिर्नियता नान्यथोभयहीनतः ॥२८॥
विवेकिनस्तु द्विविधा भक्ताः साधारणास्तथा ।
भक्तानां भक्तिरेवैषा पुष्टिरन्येषु संस्थिता ॥२९॥
ते ज्ञेयाः सेवका विष्णोः स्वार्थं तेन तथा कृताः ।
ये विवेकेन नामानि नित्यमुच्चारयन्ति हि ॥३०॥
प्रेमयुक्तास्तु तत्रापि दासभावात्पदच्युताः ।

त्येकेन। उक्तां व्यवस्थितिमुपसंहरन्ति-प्रायश्चित्तेत्यर्द्धेन।१९।२०।२१।२२।२३।२४।।२५।२६। एवमष्टाभिरुपक्रमप्रकारः समर्थितः। अतः परं मूले 'सिद्धा येऽधिकारिणो' 'भगवत्सेवका ये लि'त्यादिनोक्ता यच्च तेषां फलमुक्तं तदुभयस्वरूपमुत्तरग्रन्थे सिद्धमिति तद्विहृण्वन्त्यधुनातनानां कथञ्चिन्नामोच्चारेऽप्युक्तफलाभावाज्जायमानं सन्देहं च वारयन्ति नामेत्यादिभिः सार्द्धैः पद्भिः। अधुना नामोच्चारणकर्त्तारः प्राकृताः पृथग्जना अधमास्तेऽपि सात्विकादिभेदेन त्रिविधास्तेषां तु उभयहीनतः ज्ञानभक्त्योर्हीनत्वादन्यथाफलनिरूपणम्। तदाहुः-नाम्नाऽपि यथाकथञ्चित्पापनाशः सदा सर्वपापक्षयः। अन्ते पापक्षयोत्तरं नियता मुक्तिर्नैवेति तामसराजससात्विकक्रमेण बोध्यम्। एतेन 'तत्पुरुषनिषेवये'त्यारभ्य 'चीर्णनिष्कृता' इत्यन्तस्य तात्पर्यमुक्तम्। अविश्वासदोषाभिभूतानां साधुसङ्गे यथाकथञ्चित्पापनाशे भगवद्भक्तसेवायां तथा सदा सर्वपापक्षयः। तत्सङ्गादिना सकृद्भगवच्चरणे मनोनिवेशने यमयात्र्यादर्शनम्। असकृन्निवेशने तु मुक्तिरिति। अत एव नैयत्याभाव उक्तः। उत्तममध्यमयोराहुः-विवेकिन इत्यादि। अन्येष्विति साधारणेषु। तेषां स्वरूपं द्विधेति द्वाभ्यामाहुः-त इत्यादि। विवेकेनेति। तत्तद्गुणकर्मविशिष्टस्य स्वरूपस्य नाम्नश्चानुसन्धानपूर्वा-

पुनर्दासा भविष्यन्ति भक्तिमार्गो न तेषु चेत् ॥३१॥
गुणानुवादनिरताः सेवायां वा प्रतिष्ठिताः।
भक्तास्तेऽत्रावगन्तव्या रसिकाः कामवर्जिताः ॥३२॥
इह वश्यो हरिर्भूत्वा सायुज्यं यच्छते *बलात्।
मनोनिवेशनं ध्यानं पूजायामपि तन्मतम् ॥३३॥
प्रायश्चित्तं तु तत्रापि नाम्नीवाऽस्य च निर्णयः।
अजामिलस्य चरितं पूर्ववृत्तं तु शुद्धये ॥३४॥
शुचीनां श्रीमतां गेहे जन्मवज्जन्म तस्य तु।
[1]कलिशक्तिस्तु सा दासी गुणास्तस्य नवाऽऽत्मजाः ॥३५॥

नन्दात्मकज्ञानेन। दासा इति बहिरङ्गसेवकाः। भक्तिमार्ग इति। 'श्रद्धामृतकथायां म' इत्यादिनोक्तपरिचर्यानिर्वाहः।२७।२८।२९।३०।३१।

भक्ता द्विविधास्तेषां सार्द्धेन स्वरूपमाहुः-गुणेत्यादिना। 'सकृन्मन' इत्यत्र मनोनिवेशनस्यैव प्रायश्चित्तत्वमुक्तमिति प्रकरणान्तरस्थयोर्ध्यानपूजयोरपि तस्य तथात्वादेतं निर्णयं तत्राऽप्यतिदिशन्ति मनोनिवेशनमित्यादि। सप्रयत्नश्चित्तव्यापारो ध्यानमितिरूपप्रकरणे तस्यैव सत्त्वात्पूजायामपि तस्यावश्यकतया सत्त्वाचदुभयमपि तथेति तत्राऽप्यधमसाधारणभक्तरूपाः सभेदास्त्रिविधा अधिकारिणः सत्सङ्गादिरूपं द्वारं पापनाशप्रकारदास्यसायुज्यरूपं फलं च नाम्नीव तत्रापि यथायथमुपक्रमबलादवगन्तव्यमित्यर्थः। एवं प्रश्नोत्तरयोस्तात्पर्यं निर्णीयाऽजामिलपूर्ववृत्तनिरूपणादितात्पर्यं निर्णयन्ति-अजामिलस्येत्यादि। शुद्धय इति पूर्वजन्मीनशुद्धिज्ञापनार्थम्।३२।३३।३४। कलिशक्तिरित्यादि। 'नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्। कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यद्'इति प्रथमे। 'कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः। यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते' इत्येकादशे एवं द्वादशे च स्कन्धे कलिगुणानामुक्तत्वात्तद्गुणरूपा या शक्तिः सा दासी, गुणास्तस्य नवात्मजाः (दैन्यकत्वात्तेन) दशमो गुणतीतावस्थारूपः मोक्षप्रयोजकत्वादन्ये च बन्धप्रयोजकत्वादिति कार्यबलादनुमेयमित्यर्थः।३५।

* ऽचलम्। १ मूलपुस्तके नास्तीदम्।

पित्रादिभिरसम्बन्धो धनेन भजनं पुनः ।
सर्वभावेन तस्या वै यतो मोक्षस्ततोऽभवत् ॥३६॥
गृहस्थितौ तु पितृवत्तस्याऽपि स्याद्भवे गतिः ।
सर्वभावेन यत्रैव सेवा तेनैव सद्गतिः ॥३७॥
सुतरां पुष्टिमार्गे हि सिद्धान्तोऽयं विनिश्चितः ।
शुक्रे मलिनसम्बन्धो महानिति यमानुगैः ॥३८॥
धर्माधर्मौ विनिर्णीतावीश्वरेच्छां न ते विदुः ।
पुष्ट्यभावस्ततः सिद्धः पूर्वपक्षोऽयमीरितः ॥३९॥
वेदप्रामाण्यसिद्ध्यर्थं नाममाहात्म्यमुत्तरे ।

**पित्रादिभिरसम्बन्ध इति** । अजामिलस्येति शेषः ।

पितृवदिति । अजामिलपितृवत् । भव इति संसारे । ननु तादृस्यास्तथाभजने कथं सद्गतिप्रयोजकत्वमत आहुः **सर्वभावेनेत्यादि** । इदं पाद्मे पातालखण्डे वैशाखमाहात्म्ये दिवोदासपुत्र्या उपाख्याने प्रसिद्धम् । सा पूर्वजन्मनि महाव्यभिचारिणी ततः शम्भली[1]भूत्वा पश्चात्किञ्चिद्ब्राह्मणमतिथिं पत्नीभूत्वा सर्वभावेन प्रतोष्य तत्सङ्गेन राजकुमारी बभूव, ततः कृतार्था चेति कश्चिद्व्यभिचारमाशङ्क्यमाहुः—**सुतरामित्यादि** । **महानिति** अत्यन्तं पापजनकः । तत इति मलिनसम्बन्धात् । ईरित इति प्रथमाध्याये उक्तः । **एवमेकविंशतिभिः प्रथमाध्यायो विचारितः** ।३६।३७।३८।३९।

(अ. २) अतः सार्द्धैस्त्रिभिर्द्वितीयाध्यायार्थं विचारयन्ति—**वेदप्रामाण्येत्यादि** । ननु धर्मस्य यल्लक्षणादि यमदूतैरुक्तम्, तस्य विष्णुदूतैरदूषणात्तस्य सर्वं तेषां सम्मतम्, प्रायश्चित्तस्यैव दूषणात्तदंश एव परं विवादः, तत्र नाममाहात्म्यबोधनेन प्रायश्चित्तांशानङ्गीकाराद् वेदे च 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजत' इत्यादिषु कर्मणां प्रायश्चित्तत्वबोधनात् तदनङ्गीकारे वेदस्यांशतः प्रामाण्यहानिप्रसङ्गः, तथा सति अन्यांशेऽप्यनाश्वासप्रसङ्ग इत्याशङ्कानिरासाय नाममाहात्म्यकथनेऽपि प्रामाण्यसिद्धिमुपपादयन्ति **वेदप्रामाण्येत्यादि** । नन्वत्रग्रन्थे वेदनाम्नोऽप्यदर्शनात्स्तुत 'नाधर्मजं तद्धृदय'मित्यनेन तस्य न्यूनत्वबोधनाच्च विपरीतं प्रतीयत इति कथमेव-

[1] शम्भली=कुट्टनीशम्भलीसमे इत्यमरः ।

स्कन्धार्थेन विरोधः स्यादन्यथा तन्मतान्तरम् ॥४०॥
नामार्थयोरभेदो हि वेदोऽपि हरिनाम हि ।
नामानि कृत्वाऽभिवदन्निति वाक्यात्प्रतीयते ॥४१॥
वेदवेदार्थरूपत्वान्नामैवाऽखिलशोधकम् ।

मवगम्यत इत्याकाङ्क्षायामाहुः—स्कन्धेत्यादि । सिद्धान्ते वेदोक्तप्रायश्चित्तस्य यदि सर्वथा हेयतैवाभिमेता स्यान्मर्यादास्कन्ध एव तथा सिद्धान्त उच्येत 'कश्चित्केवलये'-त्यत्र मतान्तरत्वबोधकं केचित्पदं च नोच्येत । अतो भगवदनुग्रहभाजामेव तत्तथेति वैदिकादिप्रायश्चित्तशास्त्रस्यान्यत्र सावकाशत्वाच्च वेदे आंशिकप्रामाण्यस्यापि हानिरित्यर्थः ॥४०॥ नन्वेवं सत्या'नर्थक्ये प्रमाणानां विपरीतं बलाबलमि'ति न्यायेन प्रवृत्तिसङ्कोचे व्यवस्थितविकल्पापत्त्या दोषद्वयापत्तिस्तु दुर्वारैवेत्यत आहुः—नामेत्यादिसार्धम् । अयमत्रार्थः । वेदस्य प्रामाण्ये हि न शब्दत्वादिकं तन्त्रम्, किन्त्वपौरुषेयत्वं वा ईश्वर-निःश्वासत्वम् ईश्वरवाक्यत्वं वा तन्त्रम् । तत्रापौरुषेयत्वं तावत् 'वाचा विरूपनित्यये'ति 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीय'मिति श्रुत्यैकवाक्यतापूर्वकं विचारे 'वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम' इति वाक्योक्त ईश्वराभेदे पर्यवस्यति । तस्यार्थस्तु भगवानेव 'सर्वे वेदा यत्पदमामनन्ती'ति 'मां विधत्तेऽभिधत्ते मा'-मित्यादिश्रुतिभगवद्वाक्याभ्याम् । हि एतो अतो हेतोः नामार्थयोरभेदः । किञ्च हि यतो हेतोः 'बहु स्या'मितीच्छया स्वयं 'सर्वाणि रूपाणि विचित्य धीरः' नामानि कृत्वाऽभिवदन् यदास्ते' इतिश्रुतिवाक्याद् येषु येषु रूपेषु यानि यानि नामानि नियतवान् तानि वैदिकान्येव सृष्ट्यादौ शब्दान्तरस्याभावात् । अतो वेदोऽपि हरिनाम । एवं सति वेदापौरुषेयत्वविचारे हरित्वं हरिनामत्वं च प्रामाण्ये तन्त्रमितिसिद्ध्यति । एवं निःश्वासत्ववाक्यत्वपक्षयोरपि ईश्वरः स्वातिरिक्तं कं वा वक्ष्यतीत्यभेदवादाद्यनु-सारात्तदेव तन्त्रम् । एतावान् परं विशेषः । वेदोक्तानां कर्मादीनां रूपाणां 'प्रजायेये'-तीच्छया शक्तिविक्षेपकरणात्प्रतिनियतकार्यकर्तृत्वेन तत्तत्पापनिवर्तकत्वमेव न तु सर्व-निवर्तकत्वं येषां च सर्वनिवारकत्वं तेषामपि न हृदयपावनत्वमिति यथायथं फलवाक्य-बलात्प्रत्यक्षबलाच्चावसीयते । भगवन्नाम तु शक्तिविक्षेपराहित्येन वेदवेदार्थरूपत्वात्पूर्ण-शक्त्यैवेत्यखिलशोधकम् । अतो नाममाहात्म्यं प्रामाण्यनियामकीभूतवैदिकरूपनिश्चाय-कमिति वेदप्रामाण्यसिद्ध्यर्थमेव । न च व्यवस्थितविकल्पापत्तिः, अप्राप्तबाधस्थल इव वैश्यस्तोमादिविधायकवाक्यानां ब्राह्मणेष्विव चानुगृहीतेष्वधिकारस्य भिन्नतया तद्वाक्य-

तदध्येतृध्यानासिद्धं प्रायश्चित्तं तु दुर्बलम् ॥४२॥
ज्ञानं स्वभावतो भिन्नं मतभेदास्ततोऽभवन् ।
वेदार्थस्याऽपरिज्ञानाल्लौकिकं चाऽप्युपेक्षते ॥४३॥
लोकसङ्ग्रहभेदानां नाऽन्यथा कथनं भवेत् ।
वक्तुरेवार्थसन्देहात्प्रायश्चित्तं न तन्मतम् ॥४४॥
यमादिसाधनैर्युक्तं ज्ञानं संन्याससंयुतम् ।
प्रायश्चित्तमशक्यत्वान्न सर्वेषां तु तद्भवेत् ॥४५॥
वस्त्रं दहति यो ह्यग्निः स न वस्त्रस्य शोधकः ।
तथा ज्ञानं न सञ्जातशोधकं त्याजकं परम् ॥४६॥
अशक्यं साधनं चैव मोक्षपर्यवसायि च ।

प्रवृत्तेरेवाभावादिति। ननु यद्येवं तदा वेदार्थद्रष्टृभिर्ऋषिभिः साधारणतयोक्तस्य प्रायश्चित्तस्य का गतिरित्यत आहुः—तदध्येत्रित्यादि ॥४१॥४२॥

कुत एवं निश्चयमित्यत आहुः—ज्ञानमित्यादिचरणत्रयम्। तदुक्तमेकादशस्कन्धे भगवता 'कालेन नष्टा प्रलये' इत्यारभ्य 'यथा प्रकृतिसर्वेषां चित्रा वाचः स्रवन्ति ही'त्यन्तेन। 'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसी'ति भगवद्वाक्यमनुसृत्य तत्कथने हेत्वन्तरमपि सङ्गच्छते-लौकिकमित्यादिपादोनेन। तथा च भगवदिच्छाज्ञातारस्ते वेदार्थं ज्ञात्वाऽपि लौकिकानामर्थे तद्वदन्तीति साऽप्येका गतिरित्यर्थः। तर्हि शिष्टादरात्तस्यैव प्रायश्चित्तत्वमस्त्वित्यत आहुः—वक्तुरित्यादि। अर्थसन्देहादिति वेदतात्पर्यनिश्चयाभावात् ॥४३॥४४॥

नन्वस्तु नाम्नः शोधकत्वं कर्मापेक्षयाऽऽधिक्यं च, तथापि ज्ञानेनेदं विकल्प्यताम् 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति भगवद्वाक्ये तस्यापि निःशेषपापदाहकत्वकथनादित्यत आहुः—यमादीत्यादिसार्धकं त्रयम्। तथा चानेकसाधनसापेक्षत्वाद्देहनाशकत्वाद् इदानीं तदपेक्षितशुद्धिविरहेणाशक्योऽयत्वादेर्वस्त्रदाहदृष्टान्तेन सावशेषनाशकत्वाद्वेदोक्तत्वेन त्रैवर्णिकमात्राधिकारकत्वाच्च न तेनाऽप्यस्य विकल्प इत्यर्थः। नन्वस्त्वेवं तथापि वेदत्वेन ज्ञाताज्ज्ञानपूर्वकमुच्चारितादेव नाम्नस्तथा फलं भवेत्, न तु यथाकथञ्चि-

१ अशक्तत्वात्। २ ऋषिभि साधारण्येन प्रायश्चित्तकथनेन।

शुद्ध्यभावान्न तत्सिद्ध्येद्वासनाऽपि विशिष्यते ॥४७॥
वेदोक्तं तदपि प्रोक्तं नाम वेदात्मकं हरेः।
अन्यत्राऽपि व्यवहृतमवतारवदुत्तमम् ॥४८॥
अतः पुत्रोपचारेऽपि तद्वस्तु निखिलाघनुत्।
धर्माधिकारी यदि तन्न मन्येत कथञ्चन ॥४९॥
तथा बलात्तथोक्तं स्यादिति जायेत संशयः।
यमवाक्येन तद्दार्ढ्यं प्रमेयबलमीरितम् ॥५०॥
अगस्त्यः शिवभक्तोऽपि तथा तत्त्वमुवाच ह।
परकीयमुखात्स्तोत्रं सत्यमेवेति निश्चितम् ॥५१॥
मिथ्याप्रलोभनाच्चाऽत्र पूजया विनिवार्यते।
तस्याऽपि हरिमाहात्म्यश्रवणात्पूजने मतिः ॥५२॥
यमदूतभयात्सिद्धं प्रायश्चित्तमिदं दृढम्।

द्युक्तादत औपचारिकस्य कथं फलसाधकत्वमित्याकाङ्क्षायामाहुः-प्रोक्तमित्यादि। हरेर्नाम वेदात्मकं प्रोक्तं प्रकर्षेणोपपत्तिपूर्वकमुक्तम्। अन्यत्रापि 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्त्तितानि न संशय' इत्यत्र वेदाक्षराणां हरिनामत्वबोधनान्नाम्नां वेदात्मकत्वमुक्तम्। एवं शास्त्रान्तरेऽपि। किञ्च 'नाम्नां मुख्यतरं नाम कृष्णाख्यं मे परंतप। प्रायश्चित्तमशेषाणां पापानां मोचकं पर'मित्यादिषु सहस्रनामाष्टोत्तरशतनामादिषु च तथा स्मरणाच्छास्त्रान्तरेऽपि प्रायश्चित्तत्वं नाम्नां व्यवहृतम्। किञ्च 'अवतारवदुत्तमम्' यथाऽवतीर्णो भगवानचिन्त्यकार्यकर्त्ता तथा नामापि वाल्मीक्यादौ शबरदेहेऽपि ब्राह्मणत्वादिकरणात्तादृशमतः पुत्रोपचारेऽपि तथेत्यर्थः। एवं सार्द्धनवभिर्द्वितीयाध्यायो विचारितः।४५।४६।४७।४८।

अ. ३ अतः परं चतुर्भिस्तृतीयाध्यायं विचारयन्ति-धर्मेत्यादि। धर्माधिकारीति कर्मजडः। बलादिति श्रद्धाविशेषजनितादाग्रहात्। तद्दार्ढ्यमिति। प्रायश्चित्तदार्ढ्यम्। तद्धिरितं प्रमेयबलमीरितम्। चकारमध्याहृत्य योजना॥४९॥५०॥

एवं यमयाम्यसम्वादतात्पर्यमुक्तम्। अगस्त्योक्त्यादितात्पर्यमाहुः अगस्त्य इत्यादिद्वयम्। अध्यायत्रयसिद्धमर्थमाहुः यमदूतेत्यर्द्धम्। एवं सार्द्धोनचत्वारिंशद्भिः प्रथमप्रकरणार्थो विचारितः।

दक्षे प्रसादस्तपसा* तत्पुत्रेषु तु बोधतः ॥५३॥
तत्कन्यासु जगद्भूत्यै त्रेधाऽनुग्रह ईरितः ।
सत्त्वेन तमसा वाऽपि रजसा चेति स त्रिधा ॥५४॥
त्रिविधोऽपि हरिस्तोषो विश्वरूपार्थमीरितः ।
तस्मिन् सर्वं सुसम्पन्नमिन्द्राय प्रददौ हरिः ॥५५॥
अतः स्थानस्वरूपस्य गुरोरत्र निवारणम् ।

अथ द्वितीय ध्यानप्रकरणम् । अतः परं सार्द्धसप्तत्रिंशद्भिर्द्वितीयं प्रकरणं विचारयन्ति दक्ष इत्यादि । तत्रेदं रूपप्रकरणम् । अत्र हि ध्यायमानं रूपं पुष्ट्यर्थोपायः पूर्वप्रकरणे उच्चार्यमाणं नामेव । पूर्वत्र मनुष्या इवात्र देवाः पुष्ट्यधिकारिण इत्यधिकारिविचारेण देवप्रकरणमिदमिति तानत्र स्फुटीकुर्वन्तोऽनुग्रहेऽपि विशेषमाहुः—दक्ष इत्यादि । तथा च दक्षे तत्पुत्रेषु च साधनद्वारकस्तत्कन्यासु स्वकार्यार्थ इति प्रकारभेदाद् द्विविधोऽपि प्रयोजकभेदात्त्रेधेत्यर्थः ॥५१॥५२॥५३॥

तत्रापि हेतुमाहुः—सत्त्वेनेत्यादि । सेति पुष्टिः । वाशब्द एवकारार्थं उभयत्र अपिः समसमुच्चायकः । ईरित इति । एवमत्राध्यायत्रये ईरितः, दक्षस्याद्ये जन्मान्तराश्रवणाद्रूपेण मोक्षदः प्रथमे ईरितः । द्वितीये हर्यश्वादीनां संसाराभावबोधनाद्रसेनानन्ददायक ईरितः । तृतीये तत्कन्यानां वंशकथनात्त्रन्येन भक्तिद ईरितः । स्त्रीणां सन्तानदातर्यैव माहात्म्यज्ञानपूर्वकस्नेहादिति तथेत्यर्थः ॥५४॥

अग्रिमाध्यायविचारेण तस्य मुख्यं प्रयोजनमाहुः—त्रिविध इत्यादि । एतेन तस्यावान्तरप्रकरणित्वं बोधितम् । तत्र ज्ञापकमाहुः—तस्मिन्सर्वं सुसम्पन्नमिति । विश्वरूपे तपो ज्ञानं जगद्भूतिश्चेति त्रयं सुतरां सम्पन्नं तस्मात्तदर्थ इति ज्ञायत इत्यर्थः । ननु यद्येवं विश्वरूपे प्रसादस्तदा तस्य वधः कुत इत्याशङ्काया'मेकं भगवतः कार्यं बह्वर्थानां च साधकमि'ति न्यायेनाग्रिमाध्यायार्थमाहुः—इन्द्रायेत्यादि न रक्ष्यत इत्यन्तेन । तत्र पूर्वं तदुपपादनायेन्द्रे तथा प्रसादं तत्कार्यमुखेन स्फुटीकुर्वन्ति इन्द्रायेत्यादि । यत उक्तं त्रयं हरिरिन्द्राय प्रददौ प्रकर्षेण साधनं विनैव ददौ, अतोऽत्र प्रकरणे पुष्टिज्ञापनार्थं मर्यादारूपस्य गुरोर्बृहस्पतेर्वारणमनादर उच्यते इदं कार्यं पुष्टिज्ञापकमित्यर्थः । ननु मूले 'इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथ' इत्यादिनेन्द्रस्यामर्यादत्वं गुरोश्च तिरोभावो ब्रह्मणा देवानां भर्त्सनकरणं नोक्त-

* तत्स्मृत्या ।

पुष्ट्यर्थं भगवद्ध्यानादिन्द्रो मर्याद ईरितः ॥५६॥
सर्वज्ञत्वाद्गुरुश्चापि हरिप्रीत्यै तिरोदधे।
मर्यादास्थो यतो ब्रह्मा न गुरोर्गमनात्सुखी ॥५७॥
सोऽपि ज्ञात्वा हरेः कार्यं विश्वरूपमुवाच हि।
आधिभौतिकदुःखाद्धि विशिष्टस्तदनन्तरः ॥५८॥
अतो बृहस्पतिगतौ तूष्णींभावो वरः स्मृतः।
पुष्टिः स्वार्था ततः कोऽपि न सुखं विन्दते चिरम् ॥५९॥
अतो न ब्रह्मवाक्येन क्षमां चक्रे गुरोः कृतौ।
विश्वरूपोऽपि हरिणा हतः कवचदानतः ॥६०॥
दैत्यत्वगन्धमात्रं च भगवान्नाऽत्र मन्यते।

मिति गुरुनिवारणस्य कथं पुष्टिज्ञापकत्वमित्यत आहुः-भगवद्ध्यानादित्यादि। तत्र ज्ञापकद्वयमाहुः-सर्वज्ञत्वेत्यादि। तथा च यद्यत्रभगवद्विचारो हेतुर्न, स्यात् गुरुः शपेदेव न तु तिरोभवेत्। ब्रह्मापि भर्त्सयित्वा गुरुमेव प्रदर्शयेत्, न तु विश्वरूपं गुर्वर्थं वदेत्। अतस्तदकरणादेतत्कारणाच्चेदं द्वयं तस्य (अमर्यादत्वस्य) पुष्टिकार्यत्वज्ञापक-मिति तत्कृतं गुर्वनादरणमपि तथेतीन्द्रेऽस्ति प्रसाद इत्यर्थः। एवमिन्द्रे प्रसादमुपपाद्य विश्वरूपवधमुपपादयितुं तस्मिन्ननुग्रहं द्रढयितुम्-ननु यदीन्द्रेऽनुग्रहस्तदा यथा दक्षेण ब्रह्माज्ञा सृष्ट्यर्थमङ्गीकृता, तथा 'यदि क्षमिष्यध्वमुताऽस्य कर्म'त्युक्ता कर्मक्षमाज्ञा इन्द्रेण कुतो न कृता। किञ्च, ब्रह्मा सर्वज्ञोऽग्रे भाविनं विश्वरूपस्येन्द्रस्य च यथायथं मरणं क्लेशं च जानन् कुतो विश्वरूपं गुर्वर्थमुक्तवानित्याशङ्कामपनुदन्ति-आधि-भौतिकेत्यादि। तदनन्तरमिति। आध्यात्मिको हत्याजनितश्च क्लेशः। अतो यद्यपि तूष्णींभावः श्रेष्ठस्तथापि पुष्टिः स्वार्था जीवार्था, ततो जीवार्थाया तस्याः सकाशा-त्कोऽपि चिरं सुखं न विन्दते। अत इन्द्रो ब्रह्मोक्तं न कृतवान् ब्रह्मापि सम्भाव-नयैव ज्ञात्वोक्तवानित्यर्थः। ननु भवत्विदमेवं तथापि विश्वरूपेऽपराधाभावात्कथं तद्वध इत्यत आहुः विश्वरूपोऽपीति। 'तं प्राह स महेन्द्राय विश्वरूप उदारधी'रिति मूले विश्वरूपविशेषणादनभिप्रेतकारित्वात्तद्वध इत्यर्थः। नन्विन्द्रस्यानुगृहीतत्वेन तस्मै कवचदानं न दोषावहमित्यतो हेत्वन्तरं सार्द्धस्त्रिभिराहुः-दैत्यत्वेत्यादि। अत्रेति। पुष्टौ। अत इत्यध्याहृत्य योजना। अर्थस्तु प्रकट एव। एवमत्राध्यायद्वयार्थ उक्तः।

विद्यमाने हि कवचे सानुभावे च तद्वधः ॥६१॥
पुष्टौ हरीच्छया जातो विश्वरूपस्त्रिरूपधृक् ।
देवो दैत्यो मनुष्यश्च मनुष्यत्वं पुरा स्थितम् ॥६२॥
पौरोहित्ये देवभावो बृहस्पतिसमत्वतः ।
अन्यथा यज्ञकरणं दैत्यभावस्य लक्षणम् ॥६३॥
अतस्त्रिगुणसंयुक्तो विश्वरूपो न रक्ष्यते ।
पुष्टिरत्र द्विरूपा हि मर्यादापुष्टिभेदतः ॥६४॥
विश्वरूपस्तु मर्यादा द्वितीयो वृत्र उच्यते ।
भक्तोऽपि देवद्रोहेण वर्त्तते विषयो यथा ॥६५॥
अतस्तु मारणीयो हि कण्टकन्यायतः परम् ।

(अ. ९) अतः परं नवमस्यार्थं विचारयन्ति तत्रैवं देवप्रकरणमिति दक्षादिविश्वरूपान्तेषु इन्द्रे च पुष्टेरुक्तत्वात्तावतैव प्रकरणसमाप्तिरुचिता । अग्रे वृत्रकथायाः किं प्रयोजनमित्याकाङ्क्षायामाहुः–(तत्र ध्यानध्येयं सम्बन्धेनैव फलजनकत्वात् । ध्यातृरूपमेव व्यापारः । तत्रारम्भे दक्षतपउक्तत्वेऽपि न केवलेन तोषः । किन्तु हंसगुह्यस्तवनयुक्तेन स्तोत्रकथनं प्रस्तुत्य 'कस्यास्तुष्यत्ततो हरि'रिति तत्रोक्तेः । अग्रे च स्तुवतो रूपं प्रदर्शितवानिति ध्यानं तदेव व्यापारः । उपक्रमे प्रतिपादनात्सर्वत्र प्रकरणित्वं तस्य रूपेण मोक्षदत्वं च दक्षस्य पुनर्जन्माकथनात् । रसेनानन्ददायकत्वं च हर्यश्वादीनि[1]) । पुष्टिरत्रेत्यादि । अत्र स्कन्धे उक्तरीत्या द्विप्रकारा पुष्टिर्हि यतो हेतोर्विवक्षिता अतो हेतोस्तत्कथाऽत्रोच्यत इत्यर्थः । मर्यादेति मर्यादापुष्टः द्वितीय इति पुष्टः ॥६४॥

ननु यद्ययं पूर्वापेक्षयाऽधिकानुग्रहभाजनं तदा मारणं कुत इत्यपेक्षायामाहुः-भक्तोऽपीत्यादि । तथा च भक्तिविरुद्धस्वभावनाशनाय मारणमित्यर्थः ॥६५॥

तर्हि मर्यादापेक्षया को विशेष इत्यत आहुः–कण्टकेत्यादि । यथा हि पादे लग्नः कण्टको व्यथां सोढ्वाऽप्यग्रेऽपि सुखार्थं बलाद् दूरीक्रियते तथेत्येष विशेष इत्यर्थः । तदिदमिन्द्रवृत्रसम्वादे स्फुटति । नन्वस्त्वेवं तथापि मध्ये दधीचिवधकथनस्य किं

१ अपि ( ) ❋ चिन्हान्तर्गतं मूलग्रन्थे नास्ति । २ अयो हरे मे कुलिशेनेत्यादिना ।

पुष्टौ कर्मी तथा ज्ञानी भक्तोऽपि विनिपात्यते ॥६६॥
अतः पुष्टिं विलोक्यैव सर्वमार्गरतो भवेत्।
विश्वरूपो दधीचिश्च वृत्रश्चेति हता यतः ॥६७॥
इन्द्रे ह्यनुग्रहः पूर्वं तद्विरोधाद्धता इमे।
सर्वेषां सर्वधर्मा हि हरिप्रीत्यनुगा यतः ॥६८॥
अतोऽनुग्रहसिद्ध्यर्थं हरिमेव समाश्रयेत्।
विश्वरूपे षडध्यायास्तस्मिन् यावाननुग्रहः ॥६९॥
तमिन्द्राय ददौ कृष्णः सप्तमेऽतो वधः कृतः।
साक्षाद्धस्तद्वये घातस्ततः पापं करद्वये ॥७०॥

प्रयोजनमत आहुः पुष्टावित्यादि सार्द्धम्। तथा च पुष्टेर्बलिष्ठत्वज्ञापनं मार्गान्तरावलोकनशिक्षणं च प्रयोजनमित्यर्थः ॥६६॥६७॥

शिक्षणस्यापि प्रयोजनं भगवति दोषारोपाभाव इति हृदिकृत्वाहुः-इन्द्र इत्यर्द्धम्। तथा च भगवान् स्वपूर्वविचारितानुरोधेन करोति, भक्तादिमारणमपि तस्य हितायैव दोषनिवृत्तये करोतीति बुद्धौ यो यो यन्मार्गीयस्तस्य तस्य तत्र तत्र रतिनिर्वाहप्रयोजनमित्यर्थः। ननु वधेन दोषनिवृत्त्या हितसिद्धिर्विश्वरूपवृत्रयोः सिद्धा दधीचेस्तु दोषाभावात्तस्य किं वधेन सिद्धम्। किञ्च, उक्तशिक्षा त्रितयवधकथया सिद्धा न तु केवलदधीचिवधकथयेति तस्याः पृथक्किं प्रयोजनमत आहुः-सर्वेषामित्यादि। हरिप्रीत्यनुगा इति हरिप्रीतिपर्यवसायिनः। तथा च भगवद्विचारितकरणाद्दधीचेर्भगवत्प्रीतिरेव सिद्धा। तथाऽऽनन्दपूर्वकस्वदेहदानकथया आत्मना भगवद्विचारितकार्यकरणसिद्ध्यर्थं भगवदाश्रयणं कर्तव्यमिति शिक्षणं सिद्धमिति तस्यास्तत्प्रयोजनमित्यर्थः ॥६८॥

एवं वृत्रप्रकरणप्रयोजनं विचार्य विश्वरूपप्रकरणीयाध्यायसङ्ख्याप्रयोजनमाहुः-विश्वरूप इत्यादि। विश्वरूपे हि पञ्चगुणाः पूर्णाः, वैराग्यं न्यूनं 'मातृस्नेहवशानुग' इतिवचनात् ते भगवदनुग्रहरूपा एव, अतस्तस्मिन् यावान् अनुग्रहस्तं कृष्ण इन्द्राय ददौ। अत षडध्यायाः, षष्ठ एव च वधः कृतो नो सप्तमे वैराग्यस्यापूर्णत्वादित्यर्थः[1] ॥६९॥

एवं षडध्यायप्रयोजनमुक्त्वा तद्ब्रह्महत्याया हस्ताभ्यां ग्रहणस्य तात्पर्यमाहुः-साक्षादित्यादि। घातो हननं कार्यत्वेन हस्तद्वये जातम्, ततः पापं ब्रह्महत्यारूपं

१ नो। २ तपः।

आध्यात्मिकत्वात्तस्याऽपि सेवामिन्द्रश्चकार ह ।
सम्वत्सरेणाऽऽत्मशौचं निर्बन्धश्च गतो हरौ ॥७१॥
सच्चिदानन्दरूपेषु भूवृक्षस्त्रीषु तन्मलम् ।
स्थापयामास गोविन्दप्रसादान्नान्यथा तु तत् ॥७२॥
एवमिन्द्रे प्रसादस्तु भूमिर्भक्तास्तथा द्रुमाः ।
लक्ष्म्यंशाश्च स्त्रियो भक्तास्तदनुग्रह ईर्यते ॥७३॥
ततो वृत्रसमुत्पत्तिस्तं मोचयितुमादरात् ।
सोमादाहवनीयस्य जन्म चक्रे हरिः स्वयम् ॥७४॥
वेदप्रामाण्यसिद्ध्यर्थं स्वरभङ्गं चकार ह ।
विद्याधरः शापदग्धस्ततो मुक्तिमवाप्स्यति ॥७५॥
उच्छिष्टसोमहवनान्मन्त्रदोषाच्च दैत्यताम् ।
स्वाहेत्येव तु मन्त्रोऽत्र कामितस्याऽनुकीर्त्तनम् ॥७६॥

करद्वये अञ्जलौ अग्रहादित्यर्थः ॥७०॥

तत्स्थापनादिप्रयोजनमाहुः–आध्यात्मिकत्वादित्यादि । तस्य पापस्योग्रत्वात्सम्वत्सरमन्तरेण तन्निर्वेशासम्भवात्तावत्कालमविभ्रदित्यर्थः । ह इति प्रसिद्धौ । तस्य फलमाहुः–हरौ इन्द्रे सम्वत्सरेण आत्मशौचं जातं च पुनः निर्बन्धो ब्रह्महन्तृत्वेनाक्रोशरूपोऽपि गतः। शिष्टं यत्तन्मलं तद्भूम्यादौ स्थापयामास, तत्सर्वं गोविन्दप्रसादादेव नान्यथेतीन्द्रे प्रसादबोधनायेदमत्रोक्तमित्यर्थः ।७१।७२।

भूमिस्तुरीयमित्यादेस्तात्पर्यमाहुः–भूमिर्भक्तेत्यादि । एवं चात्र वैदिकपक्षोऽपि सङ्गृहीतो ज्ञेयः । तत्र भूम्यादित्रय एव ब्रह्महत्याविभागश्रावणात् । तेन तत्रापीदमेव तात्पर्यमेवमेव च स्वरूपं विश्वरूपादीनामिति बोधितम् । अत्र त्वप्स्वधिको ब्रह्महत्याविभागः, स चा'धिकं तत्राऽनुप्रविष्टमि'ति न्यायान्न दोषावह इति ।७३।

एवं विश्वरूपप्रकरणं विचार्य वृत्रप्रकरणं विचारयन्ति ततो वृत्रेत्यादि । आदरं गमकमाहुः–सोमादित्यादि । पधे बीजमाहुः–वेदेत्यादि । तन्मोचनायायमुपाय इत्यर्थः । स्फुटमग्रे ।७४।७५।७६।

१ उत्सृष्ट

अग्निहोत्रप्रक्रियायां तथा निर्णय ईरितः।
कर्मणोत्पादितो देहो ज्ञानेनैव विनश्यति ॥७७॥
अतो दधीचेरस्त्राणि ज्ञानरूपाणि तद्वधे।
उत्पत्तिप्रलयौ यस्य वेदमार्गेण तद्धृदि ॥७८॥
भक्तिर्मुक्तिश्च तस्यैव सायुज्यं नाऽन्यथा भवेत्।
भक्तिमूर्तिमती तत्र देवरूपासु संस्थिता ॥७९॥
तद्वधव्यतिरेकेण न सा निर्गन्तुमर्हति।
अतो हरिः सर्वदेवैः स्तूयते सिद्धभावितैः ॥८०॥
भक्तिक्लेशेऽपि न हरिः स्वयं हन्ति कथञ्चन।
देवार्थं ब्राह्मणान्नाशस्तस्य दोषस्य वर्ण्यते ॥८१॥
प्रचेतसां प्रसादश्च दक्षस्याऽपि तथैव च।
तत्स्तुतानां च निखिलो विश्वरूपे प्रतिष्ठितः ॥८२॥
भक्त्या च तपसा चैव ज्ञानेनाऽपि स उच्यते।
आधिभौतिकरूपं तु त्रयमत्र निरूपितम् ॥८३॥

(अ. १०)दशमाध्यायतात्पर्यमाहुः–कर्मणेत्यादिभिः। तत्रोत्पत्तिमारभ्यान्तं यदत्रोक्तं तत्सर्वं तद्धितार्थमेवेतिद्वाभ्यामुक्तम् ।७७।७८।

'स्तूयमानो मुनिगणै'रित्यनेनोक्ताया इन्द्रस्तुतेस्तात्पर्यमाहुः–भक्तिरित्यादिसार्द्धेन। ननु वृत्रहनने दोषनिवारणाय चेद्भगवता कुतो न कृतमित्यत आहुः–भक्तिक्लेशेत्यादि। दधीचेर्वृत्रवधकरणत्वे प्रयोजनान्तरमानुषङ्गिकमाहुः–देवार्थमित्यादि ।७९।८०।८१।

ननु पूर्वप्रकरणे दक्षादिषु प्रसादो विश्वरूपार्थमुक्तस्तर्हि तेषु न प्रसादस्ततस्तत्फलमपि न तेषां भविष्यतीति शङ्कां सार्द्धैस्त्रिभिर्वारयन्ति–प्रचेतसामित्यादि। अत्रेति प्रचेतःप्रभृतिषु। तथा च तपसा ज्ञानेन सगुणभक्त्या आधिभौतिकस्तेषु 'आध्यात्मिको विश्वरूप' इत्युभयमपि युक्तमित्यर्थः ।८२।८३।

१ नान्यथा तु तत्। २ सु।

आध्यात्मिकानां त्रितयं विश्वरूपे प्रतिष्ठितम् ।
बृहस्पतिसमो ज्ञाने तपस्वी च निरूपितः ॥८४॥

कवचस्योपदेशेन वैष्णवोऽपि निगद्यते ।
तथा वृत्रेऽपि त्रितयं ज्ञानं भक्तिबलं तथा ॥८५॥

आधिदैविकमेतद्धि सायुज्यं नाऽन्यथा भवेत् ।
विश्वरूपवधात्पापमक्षयं तत्प्रतिष्ठितम् ॥८६॥

आध्यात्मिकं ततोऽप्येषा वृत्रहत्या विशिष्यते ।
तामसानामधिपतिस्तत्पापं हन्ति दुर्जयम् ॥८७॥

ध्यानं तत्र निमित्तं हि वैदिकं चाऽप्यभीष्टदम् ।

एतत्त्रितयं वृत्रेऽप्यतिदिशन्ति-तथा वृत्र इत्यादि । विश्वरूप आध्यात्मिको वृत्र आधिदैविक इत्यत्र गमकमाहुः-विश्वरूपवधादित्यादि । वृत्रहत्यायास्तत आधिक्ये हेतुमाहुः-तामसानामधिपतिरिति । तथा च राज्ञो मूर्द्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुरिति वाक्यात्तथेत्यर्थः । ततो 'हरि'रित्यारभ्य 'विधूतपाप' इत्यन्तेन सिद्धं तन्नाशहेतुमाहुः-तत्पापमित्यादि । ध्यानं कर्तृ तत्पापं हन्तीत्यर्थः । ननु सति पापे ध्यानप्रतिबन्धः कुतो नाऽभूदित्यत आहुः-तत्र निमित्तं हीति । तत्र ध्याने लक्ष्मीकृतं तद्रक्षणं यतो निमित्तं ततस्तत्सम्पन्नमित्यर्थः । तर्हि वाजिमेधस्य किं प्रयोजनमत आहुः वैदिकमित्यादि । वैदिकं यज्ञकरणमपि अभीष्टदमेव । चोऽवधारणे । 'इन्द्रो महानास विधूतपाप' इति तत्र कथनाज्ज्ञातिकं पापं नाशयन्महेन्द्रत्वजनकमेवाभूदित्यर्थः । एवं चात्र त्रयोदशेऽध्याये ऋतम्भरध्यानं केवलध्यानम्, तेन 'केवलः सकलार्थद' इति फलमत्र बोधितम् । तथा सप्तमाध्याये 'या एवं चिन्तयतस्तस्य मघोन' इत्यादिश्लोकद्वये इन्द्रस्य गुरुध्यानरूपा चिन्तोक्ता सा 'शीर्ष्णा तच्चरणं स्पृश'न्निति तत्पूर्ववाक्यात्स्पर्शविशिष्टविषया, ततस्तेषां ब्रह्मणा विप्रहरे गुरौ बोधिते विगतज्वरा इति कथनाद् गुरोश्च भगवत्त्वात्स्पर्शनाखिलतापनु-

**भक्तिर्दोषयुता लोके न प्रसिद्धा कथञ्चन ॥८८॥**
**अतस्तदपवादाय मतान्तरमिहोच्यते।**
**वैराग्यं ज्ञानभक्ती च प्रसादः शाप एव च ॥८९॥**
**भक्तिमार्गे तु भक्तस्य न युक्तमिति तत्तथा।**

द्दित्यर्थः सिद्ध्यति। ततोऽष्टमे नारायणवर्मोपदेशस्तत्र ध्यानरूपमेव वर्मधारणम्, तत्र च गोविन्द आसङ्गद आत्तवेणुरिति कथनान्नादेन मनोहर इति प्रतिभाति। ततो नवमे उपस्थानप्रीतस्य भगवतो वाक्येषु 'किं दुरापं मयि प्रीते तथापि विबुधर्षभाः। मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववि'दित्यादिवाक्यत्रये भगवता स्वैकान्तिनां स्वस्य च स्वभावकथनाद्योगेनात्मप्रवेशद इति सिद्ध्यति। ततो दशमे 'द्वौ सम्मताविह मृत्यू दुरापा'वित्यत्र 'यद्ब्रह्मणीर्वीरशयेऽनिवृत्त' इत्यत्र क्षिपतो मोक्षदानात्कालमोक्षप्रदो क्लिष्ट इति सिद्ध्यति। अथवा नवमे देवहेलनाद् क्लिष्टो विश्वरूपस्य कालेन मोक्षदः। दशमे दधीचौ योगेनात्मप्रवेशदः। तत एकादशे 'अहं समाधाय मनो यथा हे'त्यादिषु 'न नाथ भूया'दित्यन्तेषु 'स्वामी सर्वसुखप्रद' इति सिद्ध्यति। ततो द्वादशे इन्द्रस्य वृत्रेऽसुरत्वेन स्वस्माद्धीनभावो वृत्रस्य च परिघताडनेनेन्द्रहस्ताद्वज्रभ्रंशेनेन्द्रे स्वस्माद्धीनभाव इत्युभयोरपि हीनभावाद् दुःखद इति प्रतिभाति।

(अ० १४) अतः परं चतुर्दशाद्यध्यायचतुष्टयं विचार्यते। तेषु चतुर्ष्वेवं दुष्टस्य वृत्रस्य कथं भगवति मति'रिति राजप्रश्ने 'श्रुतं द्वैपायनमुखादित्या'दिना मतान्तरोपन्यासमुखेन वृत्रपूर्वजन्मकथोच्यते। तत्र मतान्तरोपन्यासः कुत इत्याकाङ्क्षायामाहुः भक्तिरित्यादि ।८८।

तदपवादायेति दोषयुतस्यापवादाय। तथा च दोषः शापकृतो न तु स्वाभाविक इति भक्तौ तदभाव एव सर्वसम्मत आगन्तुकस्य दोषस्य भक्तिहीनत्वानापादकत्वादिति। ननु यद्येवं सर्वसम्मतत्वेन शुकैरप्युपगतं तदा कस्मिन्नंशे मतान्तरत्वमित्यत आहुः—वैराग्यमित्यादि। 'अहं हरे तव पादैकमूले'त्यादिवाक्यैर्वृत्रो भक्तिमार्गीयत्वेन विवक्षितस्तादृशस्य वैराग्यादिपञ्चकं न युक्तम्। 'तस्मान्मद्भक्तियुक्तस्ये'त्यत्र ज्ञानवैराग्ययोरश्रेयस्त्वकथनेन पुष्टिरूपाया भक्तेरपि स्वार्थतया तथात्वेन देवान्तरप्रसादस्याप्रयोजनकत्वेन शापस्य चासम्भवेन पञ्चानामप्यसम्भावितत्वात्। इति हेतोस्तदुपाख्यानं तथा मतान्तरत्वेनोक्तमित्यर्थः ॥८९॥

भाषान्तरेऽपि यत्सिद्धमिन्द्रे तत्प्रददौ हरिः ॥९०॥
एवमिन्द्रे महापुष्टिः सर्वबाधा निरूपिता ।
सर्वबाधकरूपा हि दैत्ये पुष्टिरथोच्यते ॥९१॥
तत्रापीन्द्रप्रसादो हि यतो मृत्युनिवारणम् ।
विरुद्धयोः प्रसादं तु हरिः साधयितुं क्षमः ॥९२॥
अग्निरूपो यतो भर्त्ता कश्यपः सकलं निजम् ।
रेत एकोनपञ्चाशत्प्रकारं व्यसृजद्बुधः ॥९३॥
प्रसादश्चाऽप्रसादश्च द्वयं चाऽपि विमिश्रितम् ।
त्रिषु कृष्णः सप्तमूर्तिः सप्तधा सप्तसप्तधा ॥९४॥

नन्वेस्त्वेवं तथाऽप्येतेषामध्यायानां कथं देवप्रकरणे निवेश इत्यत आहुः–भाषान्तर इत्यादि। यदिति ज्ञानादिचतुष्टयम्। तथा चेन्द्राय सर्वं दत्तमिति बोधनायात्र निरूपितमन्यथा सुद्युम्नोपाख्यानादिवदग्रे वदेत्। अत इन्द्रशेषत्वाद्देवप्रकरणे इत्यर्थः। ॥९०॥ प्रकरणमुपसंहरन्ति एवमित्यादि। एवमत्र सार्द्धैः सप्तत्रिंशद्भिर्देवप्रकरणं विचारितम्।

अतः परमष्टभिर्दैत्यप्रकरणं विचारयन्ति–सर्वेत्यादि। दैत्य इति। दैत्यप्रकरणे। सर्वबाधकरूपेति। कालकर्मस्वभावबाधिका। तेन पूर्वस्माद्विशेष उक्तः। नामप्रकरणे कर्मबाधिका। रूपप्रकरणे हर्यश्वादीनां कर्मबाधिका। 'वृत्रस्य स्वभावबाधिकेति ततोधिका। अत्र तु मरुतां त्रितयबाधिकेति ॥ ९१ ॥

नन्वेवं सति देवानां तथा कुतो न बाधस्तत्राहुः–तत्रापीत्यादि। एवं प्रकरणाभ्यां सिद्धं तात्पर्यमाहुः–विरुद्धयोरित्यादि। तथा च भगवत्यलौकिकं सामर्थ्यं बोधयितुमेवं प्रकरणद्वयकथनमित्यर्थः। मरुतामेकोनपञ्चाशत्त्वे हेतुमाहुः–अग्निरूप इत्यादि। नार्य्यां घृतकुम्भसमानत्वाचत्सम्बन्धे क्षुब्ध इत्यग्निरूपः। सकलमिति सांशम्। बुध इति भगवदनुग्रहं जानानः ॥९२॥९३॥ नन्वेवं सति कथं तेषां छेद इत्यत आहुः–प्रसाद इत्यादि। प्रसादादिषु त्रिषु कश्यपधर्मेषु धर्मधर्मिभेदेन सप्तमूर्त्तिः कृष्णः सप्तधा वर्त्तते, अतो मरुतः सप्त भूत्वा प्रत्येकं सप्तधा जाताः। तथा च छेदे भगवदधिष्ठितोऽप्रसादो हेतुरित्यर्थः। तर्हि प्रसादादिषु त्रिषु भगवत्स्थितेः

प्रसन्नत्वाद्वह्वपत्यं क्रोधान्नो वाञ्छितस्थितिः।
उभयान्मानसं किञ्चिन्न्यूनमेकाधिकत्वतः ॥१५॥
वधस्याऽभिनिवेशस्तु सेवया प्रायशो गतः।
पुष्टिरूपा तु या सृष्टिः साधारण्यविशेषभाक् ॥१६॥
सा निरुक्ता ततोऽन्यत्र न सृष्टिः पुष्टिसंश्रिता।
व्रतिनः पूजनं मुख्यमित्यन्ते व्रतसङ्कथा ॥१७॥
सर्वलीलाः पुष्टिमध्ये प्रविशन्तीति मे मतिः।

किं कार्यमित्यपेक्षायां तद्विवृण्वन्ति प्रसन्नत्वादित्यादि, वाञ्छितस्थितिरिति। इन्द्रहन्तृत्वेन स्थितिः। मानसमिति इन्द्रमदशोपकत्वम्। तच्च गर्भमरणाभावादिन्द्रस्य पञ्चाशत्तमस्य जातत्वात् किञ्चिन्न्यूनं तदेतद्भगवदधिष्ठितस्य मिश्रणस्य कार्यमिति त्रिष्वपि भगवदधिष्ठानमित्यर्थः ॥९५॥

ननु तथापि पुत्रमिन्द्रहणमभिसन्धाय पूजाया आरब्धत्वात्तदंशे कथं फलस्य न्यूनतेत्यत आहुः--वधस्येत्यादि। तथा च फलादेव तस्याभिनिवेशस्य निवृत्तिरनुसन्धेयेत्यर्थः। नन्वस्मिन् स्कन्धे पुष्टिर्निरूप्या तत्र सृष्टिनिरूपणस्य किं प्रयोजनम्। राजप्रश्नानुरोधेन चेत् प्रतिनन्दनस्य किं प्रयोजनमत आहुः-पुष्टिरूपेत्यादि। साधारण्यविशेषभागिति। श्रीशुकस्य साधारण्येऽपि विशेषवतीत्यर्थः। तथा च सृष्ट्यन्तरे पुष्टिनिवृत्तिं बोधयितुं तत्कथनं श्रीशुकस्य विवक्षितमतः प्रतिनन्दनमित्यर्थः ।९६। एवं षड्भिरष्टादशो विवृतः।

अर्द्धेनोनविंशार्थमाहुः-व्रतिन इत्यादि। सृष्टिनिरूपणस्य प्रयोजनान्तरमाहुः-सर्वलीला इत्यादि। श्रीभागवतेपि सर्वा एव लीलाः सर्गाद्याः सविशेषा एवोच्यन्ते न तु साधारण्य इति हि सर्गादीनां विशेषलक्षणकरणादवगम्यते। अन्यथा द्वादशस्कन्धे सर्गादीनां पुनः सामान्यलक्षणानि व्यासचरणा न वदेयुः,प्रयोजनाभावात्। अतः साधारण्यविशेषभाक्त्वं सर्वास्वविशिष्टमिति सर्वा एव लीलाः पुष्टिमध्ये प्रविशन्ति इति मे मतिः मम मतम्।

१ वाञ्छितस्थिति,

**अतः सृष्टिस्तु निखिला कृष्णार्थेति विनिश्चयः ॥९८॥**
**तस्मात्सिद्ध्यन्ति कार्याणि भक्त्यैवाश्रयणाद्धरेः ॥९९॥**

इति श्रीमदाचार्यचक्रचूडामणि-
श्रीवल्लभाचार्यचरणविरचिते
श्रीभागवतार्थनिबन्धे
षष्ठस्कन्धः समाप्तः।



नन्वन्यैः कथं मन्तव्यम्, तत्राहुः-(अतः सृष्टिस्त्विति) तुः पूर्वपक्षनिरासे। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'ति द्वितीयस्कन्धेऽनुग्रहादेव सर्वं स्थितिकथनादत्राऽस्मदुक्ते शङ्कैव नोचिता। अतो निखिलासृष्टिः कृष्णार्थेति विनिश्चयो निष्कृष्टोऽर्थ इत्यर्थः ।९७।९८।

तेन सिद्धमाहुः-तस्मादित्यादि। अत्रायमर्थः। श्रीभागवते ह्यनुग्रहशब्दस्त्रिषु प्रयुक्तः। अत्र कालादिनिवारके धर्मे। वृत्रवाक्ये तु स्थापके धर्मे। अदीनलीलेत्यत्र त्वाश्रये। 'यस्याऽनुग्रहमिच्छामी'त्यत्र यः सोऽपि यथाधिकारमेतेष्वेव पर्यवस्यति। तेषु त्रिष्वपि धर्मेष्वाश्रय एव मुख्यो भगवद्रूपत्वान्मुख्यलीलात्वाच्च। स एव च परार्थत्वात्। भक्तिजनकः शेषी च। तस्माद्धेतोर्हरेराश्रयणाद्भक्त्यैव कार्याणि यथाधिकारं सिद्ध्यन्ति। तथा चैतद्बोधयितुमत्र सृष्टिकथनमित्यर्थः।

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता
षष्ठस्कन्धनिबन्धयोजना
समाप्ता।



## षष्ठस्कन्धस्थनिबन्धकठिनांशविवेचनम् ।

( ३३६ तमे पृष्ठे अनुसन्धेयम् )

षष्ठस्कन्धे प्रकरणार्थनिरूपणे रूपप्रकरणतात्पर्योक्तौ रूपेण मोक्षद इत्यादि, रूपस्य चतुर्दशगुणविशिष्टत्वात् प्रत्येक गुणवैशिष्ट्येन हृदि भावितो भगवान् फलति, जीवहित करोतीति पूर्वश्लोक उक्तम्, अत पर तान् चतुर्दशगुणान् तत्कृत फल च विविच्य ज्ञापयितुमाह रूपेणेत्यादिसार्धेस्त्रिमि । ते च गुणा ज्ञानेन्द्रियकर्मेन्द्रियान्त करणचतुष्टयविषया इति प्रत्येक तत्तद्गुणयुक्ततद्ध्याने मोक्षादिफलानि जीवहितानि ददति, तत्र प्रथमेध्याये रूपे वैशिष्ट्येन ध्यातो दक्षस्य मोक्षदायकोऽभूत् । अत एवास्मिन्नध्याये दक्षतपसा प्रादुर्भूते रूपे 'त्रैलोक्यमोहन रूप बिभ्रत् त्रिभुवनेश्वर' इत्युक्तम्, तेन तादृशरूपविशिष्टस्य ध्यानेन दक्षस्य शिवावज्ञादोषनिवृत्तिपूर्वक सृष्टिकर्मणि प्रवृत्तस्यापि मोक्ष सम्पन्न इति ॥ १ ॥

द्वितीयाध्याये भगवद्रसो हि आन्दरूप सर्वेन्द्रियान्त करणवेद्यो हर्यश्वशबलाश्वाना नारदोपदेशे कूटवाक्यार्थावबोधेऽनुभवविषयोऽभूद् येन ते ससाररस त्यक्तवन्त, दक्षे तु न तद्रसानुभव येन नारदेऽधिक्षेप शापश्चेति ॥ २ ॥

तृतीयाध्याये सर्वो सृष्टिवृत्तान्ते विश्वरूप उक्तस्तस्मिंश्च कीर्तिरूपोऽनुभावरूपश्च भगवद्गन्धो ब्राह्मणानुभूतोऽतो देवान् प्रति पौरोहित्याद्विश्वरूप भजतेत्युक्तम्, देवाना च तत्र भक्तिर्जनिता, अन्यथा द्विषता दौहित्र पौरोहित्ये कथमङ्गीकुर्युरिति ॥ ३ ॥

चतुर्थाध्याये 'ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन्नि'तिवाक्यात् तदाविष्टभगवत्स्पर्शाद् देवाना सर्वे तापा निवृत्ता, अत एव प्रार्थना, पौरोहित्ये वरण चेति ॥ ४ ॥

पञ्चमाध्याये कवच भगवन्नादरूपम् आथर्वणाद् दधीचे ऋषे प्राप्तम् । भगवन्नादो हि त्रिलोक्या मनो हरति, अत एव दैत्याशयुक्तोपि विश्वरूपो वैष्णवोऽभूत् । इन्द्राय दत्ते कवचे भगवन्नादस्य दैत्यसम्बन्धित्वनिवारणाय विश्वरूपो हरिणैव हत । एव नादेनमनोहरत्वमिति ॥ ५ ॥

षष्ठाध्याये योगेनात्मप्रवेशद इत्थ निरूपित, भक्तिर्देवरूपा मूर्तिमती या, सा वृत्रोदरे तिष्ठति यया भगवान् परितुष्यति, सा भक्तिस्तु तद्वध विना निर्गन्तुमशक्ता, अतो देवाना परमसङ्कट जातम्, तथापि भगवन्नादात्मककवचस्य इन्द्रे विद्यमानत्वात् तेनैवालौकिकानि सिद्धमापितानि भगवत्स्तुतिरूपाणि देवाना हृदि स्फुरितानि, तै स्तुतो भगवान् प्रकटो भूत्वा देवै सह सम्भाषण कृतवान्, तेन देवानामात्मप्रवेशो दत्त, स्वकीया भूत्वा, वृत्रवधोपायश्च ज्ञापित इति सम्भाषण वागिन्द्रियविषय आत्मप्रवेशफलक इति ॥६॥

सप्तमाध्याये हस्तेन्द्रियव्यापाररूपयुद्धहेतुर्द्वेषः दैत्यादिभिर्युद्धार्थं द्वेषित्वेन भाविते भगवति भगवानपि तैः सह युद्धं कृत्वा कालद्वारा मोक्षं ददाति । यथा पुनः कालग्रस्ता न भवन्ति, परिचर्यायां तु न परस्परं हस्तव्यापारः, अतः कर्मेन्द्रियाणां परस्परं भगवता सह व्यापारकथनार्थं युद्धहेतुर्द्वेषो निरूपितः । एतच्च सैनिकान् प्रति वृत्रवाक्ये स्फुटमिति ॥ ७ ॥

अष्टमाध्याये स्वामी सर्वसुखप्रदः, इत्थं, मूर्तिमती भक्तिर्वृत्रे तया च प्रभौ स्वामित्वभावना स्वस्मिंश्च स्त्रीत्वभावना तथा उपस्थेन्द्रियविषयो भोगश्च परस्परम्, तथा सति पतिर्भार्यायै इव सर्वं स्वकीयं सुखं भक्ताय प्रयच्छति भगवान्, एतच्च वृत्रचतुः-श्लोक्यां स्फुटमिति ॥ ८ ॥

नवमाध्याये हीनत्वेन मलवत् त्यक्तो भगवान् तमपि त्यजति तदा आनन्द-तिरोधानाद् दुःखं भवति । तदित्थं ज्ञेयम्, वृत्रेण हि इन्द्राय स्वज्ञानं भक्तिर्बलं च सर्वं बोधितम्, इन्द्रेणापि वृत्रस्तुतिकरणात्सर्वं बुद्धम्, तथापि स्वजयार्थं इन्द्रपदप्राप्त्यर्थं च युद्धमेव कृतवान् न तु वृत्रे भगवद्भक्तं ज्ञात्वा भगवत्प्रीत्यर्थं प्रपन्नः, वृत्रप्रपत्तौ सत्यां तु शीघ्रं भगवत्प्राप्त्या तत्प्रसादेन च सर्वं सुखमनायासेनैव स्यात् । अत्र तदकरणात् प्रभौ हीनभावनया त्यागो ज्ञापितः, ततो भगवतापि त्यागाद् आधिदैविकवृत्रहत्यारूपं दुःखं प्राप्तमिति ॥ ९ ॥

दशमाध्याये केवलः सकलार्थदः, प्रागुदीच्यां दिशि लक्ष्मीः कमलालया तिष्ठति, तत्र तद्भोगाय भगवानपि केवलः पार्षदादिरहितस्तिष्ठति, अतो हत्या भीत इन्द्रोपि सर्वेषु लोकेषु परिभ्रमणं कृत्वा तत्र तत्र शरणमलभमानस्तूर्णं मानसं प्रविष्टः, तदुक्तं 'नभोगतो दिशः सर्वा' इतिवाक्येन । यद्यपि हत्या दुष्ट इन्द्रो लक्ष्मीस्थानं प्रवेष्टुमयोग्यस्तथापि भगवतः स्वभावं वाचं च स्मृत्वा तत्र गतः, तत्र भगवत्स्वभावस्तु यो भगवत्समीप-गमनार्थमेकं पदं प्रचलति तदा एकोनविंशति पदानि भगवांस्तत्सम्मुखमायाति, अतो भगवता सह तत्र गतः, उक्तं च 'ऋतं वचनं भगवान् बिभर्ति अतो ऋतम्भरः' इन्द्रं प्रति भगवता पूर्वमुक्तम् 'तस्मिन् विनिहते यूयं तेजोऽस्त्रायुधसम्पदः, भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परा'निति (अ० ९) तद्वचनं स्मृत्वा इन्द्रो भगवत्सम्मुखं गतस्तदा भगवानपि स्ववचनं फलयितुं हत्या दुष्टस्यापीन्द्रस्य सम्मुखमागतः, तदुक्तं 'ऋतंभरध्याननिवारिताघ' इत्यनेन, यद्यपि पूर्वाध्याये भगवति इन्द्रस्य हीनभावस्ततो भगवत्सम्मुखमागन्तुं न योग्य-स्तथापीदं वृत्रहननं सर्वलोकेषु भक्तिप्रचारार्थं वृत्रदोषनिवारणार्थं च भगवदभिप्रेतं भगवत्कार्यं च, अतः कार्ये सम्पन्ने हीनभावनाफले भुक्ते पुनरुत्कृष्टबुद्धिर्जातेति ज्ञेयम् । अतः केवलः गतिविषयीकृतः । सकलानर्थान् दत्तवान् ध्यानेन भक्तिं हत्यातो मोक्षं यज्ञैः धर्मं महेन्द्रत्वेनार्थं

काम चेति। आधिदैविकी हत्या ध्यानेन निवृत्ता आध्यात्मिकी श्रीरुद्रेण भौतिकी यज्ञैरिति ॥ १० ॥

एकादशेऽध्याये मितो योगमदः। माङ्मान इत्यस्य धातोर्निष्ठाया मितमितिरूप कृत ज्ञातमित्यादिवत्, तथा च मतिविषयीकृत मत ज्ञानविषयी कृत ज्ञातमित्यादिवन् मानविषयीकृत मितमित्यर्थो भवति, तत्र न्यूनाधिकभावनिर्द्धारो मान, इद वस्तु एतावद् एतादृश चेतिज्ञानतद्विषय न्यूनाधिकभावापन्न वस्तु मितशब्देन ज्ञेयम्, तत्र द्रव्येषु न्यूनत्व मधिकत्व च तोलनेन मानहेतुपात्रेण च ज्ञायते। रत्नादिषु तत्परीक्षादिना इद वस्तु एतावद् एतादृश चेतिज्ञायते, भगवतो मान बुद्ध्यैव ज्ञायते, यद्यपि भगवान् तदानन्दश्च अनन्तत्वान् न मातु शक्यते तथापि बुद्ध्या तद्व्यतिरिक्तस्य सर्वस्य मान निर्द्धार्य भगवति तदानन्दे च सर्वोत्कृष्टत्वमपरिमितत्व यदा मात तदेव मानशब्देनोच्यते। यदाऽमृतो दधौ गगने च, तथा च भगवान् तदानन्दश्च सर्वोत्कृष्टत्वेन अपरिमितत्वेन च बुद्ध्या व्यवसायात्मिकया ज्ञातो येस्तैर्मित इत्युच्यते। तदा तेषा केनाप्युपायेन सम्भाषणादियोगमदः, तदस्मिन्नध्याये व्यतिरेकमुखेनोच्यते, अङ्गिरसि ऋषौ उपदेशार्थमागतेपि सार्वभौमेन चित्रकेतुना पुत्राभावे सम्पदामतोषहेतुत्वकथनात् पुत्रेण स्वस्य पूर्वजाना च परलोके गतिमत्त्वकथनात् तत्रैव परमोत्कृष्टत्वपरमसुखहेतुत्वज्ञानेन भगवति तदभावान्लोपदेशो लब्धस्ततश्च भगवद्योग परमदु ख च। ननु हीनभावाद् दु खद इत्यनेनास्य को भेदस्तत्रापि भगवत्परित्यागादेव दु खलब्धिरिति उच्यते। पायुर्हि देहे विद्यमान मल त्यजति तन्न्यायेन ज्ञानस्यापि हरेस्तत्र परित्याग, अत्र तु तादृग्बुद्ध्यभावाद्धरौ नोत्कृष्टत्वज्ञान नापि परमानन्दानन्तत्वज्ञान तेन भगवदलब्धिरूपोऽयोग एव, न तु योगे जातेपि परित्याग इतिविभेद इति ॥ ११ ॥

द्वादशाध्याये भिन्नो मृत्युमदः भिदिर् विदारणे इत्यस्य धातोर्निष्ठाया भिन्न-मितिरूपम्, तथा सति विदीर्णमित्यर्थो भवति, इद चात्र अहङ्कारस्य कार्य विषयश्च, तथा अहङ्कारो हि एक सर्वात्मकमद्वितीयमात्मरूप भगवन्त विदार्य जीवात्मान पृथक्करोति ततोऽन्यत्या भिन्नो जीवो ममतया जडमपि भगवत पृथक् करोति, अत्र भिन्नत्वेन ज्ञानमेव पृथक्करणम्, ततो भगवानपि विदारणकर्मण फल दु खमेव प्रयच्छति सर्वैरेव रूपै, तत्र जडजीवरूपै शोकमोहभयार्तिरूप मूलरूपेण तु स्वस्मिन् कालरूपत्व सम्पाद्य मृत्युरूपमिति, एतज्ज्ञापनायैवात्राऽध्याये सर्वेषा शोकमोहभयार्तिरूपम्,। मूलरूपेण तु स्वस्मिन् कालरूपत्व सम्पाद्य मृत्युरूपमिति एतज्ज्ञापनायैवात्राध्याये सर्वेषा शोकमोहभया र्निरूपम् उत्तमे द्वे प्रवार्थनिश्रम त्यनेत्युक्तम्, यथा भगवान् स्वात्मन सकाशात्

न भिद्येत, संसारदुःखहेतोरहङ्कारस्य विलयार्थं च तदाधिदैविकस्य तल्लयस्थानस्य च सङ्कर्षणस्य उपासना उक्ता, तया तस्मिन् लीनोऽहङ्कारो न पुनः कदाप्युद्गच्छेदिति, अतोऽहङ्कारस्यैव सर्वत्र बन्धहेतुत्वमुच्यते, अहङ्कारकृतं बन्धं अहङ्कारस्य दृश्यते जन्ममृत्युश्चे'त्यादिष्विति, अग्रे शिवावज्ञा तु भगवत्कार्यमत एव शापे जाते निरहङ्कारो देवीं प्रसादितवानिति ॥१२॥

त्रयोदशेऽध्याये यथास्थितो ज्ञानदः, अत्राध्याये उपक्रमे नारदेन स्वयोगबले-नाऽऽकारितो जीवश्चित्स्वरूपो ज्ञानधर्मा यथास्थितः समागतः, स च मोहनिवारकं जीव-विषयकं ज्ञानमुक्तवान् । 'कस्मिन् जन्मनी'त्यारभ्य 'तावदेव ही'त्यनेन बद्धावस्थापन्न-जीवस्वरूपम्, 'एवं योनिगतो जीवः स नित्यो निरहङ्कृत' इत्यारभ्य 'परावरदृगीश्वर' इत्यन्तेन युक्तावस्थापन्नजीवस्वरूपं च बोधयित्वा ज्ञानदो जातः । ततो नारदोपदिष्टविद्यया चित्रकेतुर्विद्याधराधिपत्यं लब्ध्वा शेषात्मकसङ्कर्षणसान्निध्यं प्राप्तः, सान्निध्यमहिम्नैव ध्रुववत् स्तुतिहेतुभूतं ज्ञानं प्राप्तस्तथापि यावद् गुरुर्नोपदिशति तावज्ज्ञानं न स्थिरं भवति तदर्थं शेषकृतोपदेशः, शब्दब्रह्म परं ब्रह्म ममोभे शाश्वतीतनू' इतिकथनात् शब्दब्रह्म वेदात्मकः शेष अर्थात्मकपरब्रह्मणा नित्यसम्बद्धः, अतः स यथास्थितः उपदेशवाक्येषु च सर्वात्मकस्य अद्वितीयस्य तुरीयरूपस्य परमात्मनो यथास्थितस्य स्वरूपं बोधितवान् । तच्च च ज्ञानं भक्तिपर्यवसायीति ज्ञापनाय 'यद्भक्तः पुरुषो भवेदि'त्युक्तम्, भक्तिविषयः पुरुषोत्तमश्च परमानन्दरूपत्वात् परमफलरूप इति ज्ञापनार्थं 'यत् परात्मैकदर्शन'मित्युक्तं परश्च आत्मा च तयोरेकत्वेन दर्शनं, तेन सहाभेद इतियावत् । यद्वा परश्चासावात्मा च परात्मा तस्यैवैकस्य दर्शनं स्फुरणमित्यर्थद्वयमपि अभिप्रेतं, अत एवाग्रे परमफलरूपा भक्तिर्जाता तथा चात्राध्याय इदं निष्पन्नं, नारदोपदेशेन चित्रकेतुना अहङ्कारपरित्यागेन चित्तविषयीकृतो यथास्थितोऽभिन्नोऽद्वितीयः सर्वात्मक आत्मरूपश्चित्रकेतोः सङ्कर्षणद्वारा स्वरूपफलकभक्तिपर्यवसायी ज्ञानदो जातो भगवानिति ॥ १३ ॥

चतुर्दशाध्याये स्नेहाद् वश्यो भवेद् ध्रुवमिति । तत्र स्नेहश्च मनसो विषयः, तृतीयस्कन्धे भक्तिलक्षणे 'देवानां गुणलिङ्गाना'मितिवाक्ये 'सत्त्व एवैकमनसो वृत्ति'रिति-कथनात् एकोनत्रिंशेऽध्यायेपि निर्गुणभक्तिलक्षणे 'मनोगतिरविच्छिन्ने'तिकथनाद् वैष्णवतन्त्रे च 'स्नेहो भक्ति'रितिकथनात् अविच्छिन्नमनोगतिरूपा भक्तिरेव स्नेहस्तेन भगवान् ध्रुवं वशे स्थितो भवेत्, अत्राध्याये अनन्तोपदिष्टज्ञानेन चित्रकेतोर्भक्तिः स्नेहरूपा जातेति-ज्ञापनार्थं विष्णुदत्तं विमानं 'सलक्षं लक्षवर्षाणा'मितिवाक्याद् अजरामरत्वं पूर्वतनस्य भोगाभि-निवेशस्य विद्यमानत्वात् तन्निवृत्त्यर्थं स्त्रीभिः सह रमणं हरिगुणगानेन च भक्ति'रनुवृत्ति' रितिनिरूपितम्, तथापि मया स्वसाधनबलेनेदं सम्पादितमितिजीवस्वभावदोषस्य स्वधर्मोत्कर्ष-

भावनारूपस्य सत्त्वाद् दीनताभावपूर्विका भक्तिर्न जाता येन परमं फलं स्यात्, विद्याधरत्व एव आसक्तिश्च जाता, तदुभयं भक्तस्य नोचितमिति तन्निवृत्त्यर्थं दीनताभावसम्पादनार्थं च भगवानेव शापं दापितवान्, अत्र भक्तत्वाभिमानज्ञापिका शिवावज्ञा स्वभावदोषज्ञापकानि शापनिमित्तानि शुकप्रोक्तानि अतद्वीर्यविद्वत्त्वादीनि चत्वारि चित्रकेतोर्विशेषणानि, शिवस्तु भगवान् सर्वज्ञ इति एतं भक्तं इदं च भगवत्कार्यं ज्ञात्वा प्रहस्य तूष्णीं बभूव, देवी तु न सर्वज्ञाऽतो रोषः शापदानं च, भक्तत्वनुभावेनैव न शापमात्रेण विमानाच् च्युतिः, कार्ये जाते दीनभावो जातः, स्वभावदोषो निवृत्त इतिज्ञापकानि देवीं प्रति चित्रकेतुवचनानि प्रतिशापदानाभावश्च, भक्तस्य भक्तेश्च माहात्म्यज्ञापकानि देवीं प्रति शिववचनानि । आसुरयोनित्वेऽपि भक्तेरप्रतिहतत्वात् शापेन गुण एव जातो न तु दोष इति ज्ञापकानि निवृत्तदोषस्य वृत्रस्य दीनताभावपूर्वकपरमभक्तिबोधकानि चतुःश्लोकीवचनानि, भगवतो वश्यत्वज्ञापकमासुरदेहत्यागसमये वृत्रसमीपेऽवस्थानम्, सर्वेषु लोकेषु पश्यत्सु तस्मिन् प्रवेशनं चेति अनेन मनोनिवेशनं ध्यानमित्युक्तम्, ध्यानप्रकरणस्वरूपं चतुर्दशाध्यायात्मकस्य सिद्धमिति दिक् ॥ १४ ॥

### ३४७ नमे पूर्वानुसन्धेयम् ।

अथ द्वितीयाध्यायार्थोक्तो (का० ४०) वेदप्रामाण्यसिद्ध्यर्थं नाममाहात्म्यमुच्यते । स्कन्धार्थेन विरोधः स्यादन्यथा तन्मतान्तरमित्यत्र पूर्वं प्रथमाध्याये विष्णुदूतपृष्टैर्यमदूतैर्धर्मस्य स्वरूपलक्षणादिकं प्रतिपादितम्, ततो जीवस्य दण्डनिमित्तं पापं संसारनिमित्तमज्ञानं च प्रतिपादितम्, ततोऽन्तिमश्लोके पापेऽज्ञाने च हेतुभूतः प्रकृतिसङ्गो निरूपितः, तन्निस्तारहेतुरीशसङ्गश्चोक्तः, तत्र वेदोक्तानि कर्माणि प्रायश्चित्तादिरूपाणि पापनिवर्त्तकानि अन्तरङ्गानि ज्ञानसाधनानि अज्ञाननिवर्त्तकानि इत्यपि सूचितम्, कुत्र सूचितं कथं सूचितमितिप्रश्ने उच्यते, अजामिलस्य पूर्ववृत्तकथनव्याजेन सूचितम्, पूर्वमस्य पापाभावात् अन्तरङ्गाणि ज्ञानसाधनान्येव कर्माणि कुर्वाणः स्थितः, तानि तु कामवशेन पराहतानि पश्चात् पापे उद्भूते तानि विलीनानि, ततोऽन्तिमश्लोके 'अकृतनिर्वेश'इत्यनेन प्रायश्चित्तरूपाण्यपि अनेन न कृतानि, अतो दण्डरूपं दुःखात्मकं तपोऽस्य 'निर्वेश'इति तत् सर्वं विष्णुदूतैरभ्युपगतम्, परं एतावत्, कर्मणा यत् पापनिवर्त्तकत्वं पुण्यजनकत्वं अज्ञाननिवर्त्तकत्वं ज्ञानजनकत्वं च यदुक्तं तत्कर्मद्वारा ईशसङ्गमभिप्रेत्यैव, अतो यथा यथा ईशसङ्गसञ्चारस्तथा तथा प्रकृतिसङ्गनाशात् पापादिनिवृत्तिरिति निर्वेदस्य मतम्, तदत्र भगवन्नामश्रवणकीर्तनरूपया भक्त्या ईशसङ्गे सम्पन्ने

प्रकृतिसङ्गनाशे पापादिनिवृत्तिरितिवेदप्रमाण्यसिद्धयर्थमेव नाममाहात्म्यमुत्तरे विष्णुदूतैरुक्तम् । वेदवचनसिद्धं मतं मर्यादा, वेदाभिप्रायसिद्धं मतं पुष्टिः, तत्पुष्टिरूपं मतं विष्णुदूतैर्नोच्येत यदि तदा अस्यापि स्कन्धस्य मर्यादार्थत्वे सिद्धे स्कन्धार्थेन पुष्टिरूपेण विरोधः स्यात्, यतः पुष्टिरूपं वेदाभिप्रायसिद्धं मतान्तरं, तस्मादेव हेतोस्तैस्तथा कथनमित्यर्थः, मर्यादायां पापनिवर्तकानि कर्माणि भिन्नानि मुक्तिसाधकानि च भिन्नानि पुष्टौ तूभयमेकेनैवेति पुष्टिबलं मर्यादातोऽधिकमिति ।

## पञ्चमाध्यायस्थकूटवाक्यार्थविचारः

अग्रे पञ्चमाध्याये कूटवाक्यनिरूपणे श्रीभागवते 'किमसत्कर्मभिर्भवे'दिति नवकृत्वः आवृत्तम्, तस्य श्रीधरीये अर्थ उक्तोऽप्यस्ति तथापि महदनुमहाद् यद् भातं तल्लिख्यते, लिङ्गभङ्गादर्शने निरन्तरं बन्धः पारतन्त्र्यमेव, अतः असद्भिः बन्धहेतुभिः कर्मभिः किं दक्षात्मकपित्राज्ञया सृजनरूपैः किं भवेत् न किमपीत्यर्थः, अत्र अन्तिमे कूटे तदर्थे च जीवस्वरूपानुरूपसुखस्यैव प्रजात्वनिरूपणात् परतन्त्राणां बन्धहेतुकर्मभिस्तदजननात् फलाभाव उच्यते । एवमन्येष्वपि कूटेषु तादृक् तादृक्कर्मभिर्जीवस्वरूपानुरूपसुखाभाव एव फलाभावो ज्ञेयः ॥ १ ॥

'या निशे'ति वाक्यात् तुरीयावस्थाया अदर्शने अवस्थात्रयम्, माया स्वप्न एव, अतः असद्भिः स्वाप्निकवत् मिथ्याभूतैरपि दक्षाज्ञया सृजनरूपैः कर्मभिः पूर्वोक्तसुखरूपफलं न स्यादित्यर्थः, एवं सर्वेषु कूटेषु सृजनरूपकर्मणां समानत्वेपि तत्तत्कूटोक्तविशेषणभेदादेव भेदो ज्ञेयः ॥ २ ॥

प्रत्यक्धाम्नः अज्ञाने बहिरर्थप्राप्तिः आशुविनाशिनी, अतः असद्भिः अचिरकालस्थायिभिः ॥ ३ ॥

बुद्धया उत्तमपदार्थविचारो भवति बुद्धिनिष्ठायाः बुद्धिपरिपाकावस्थाया अभावे उत्तमाप्राप्तिः, अतः असद्भिः उत्तमपदार्थाप्रापकैः ॥ ४ ॥

कुबुद्धिहेतुकं हीनपदार्थैर्जायमानं दुःखं जनेषु यावन् न जानाति तावत् कुबुद्धिवातृन् हीनपदार्थांश्च न त्यजति, अतः असद्भिः निवृत्त्यनुपयोगिभिः । पूर्वत्र उत्तमालाभे सुखाभावः, तत्र कारणं बुद्धिपरिपाकावस्थाऽभावः अत्र तु हीनपदार्थलाभे दुःखम् तत्र कारणं कुसङ्गः कुबुद्धिश्चेतिद्वयोर्भेदः ॥ ५ ॥

भगवद्धर्मविपरीतधर्मकरी माया, तस्या अज्ञाने उत्पत्तिविनाशावेव मायामोहेन भवतः, अतः असद्भिः उत्पत्तिविनाशकरैः ॥ ६ ॥

सङ्घातनिष्ठान् आत्मपर्यन्तपदार्थान् याथार्थ्येन यावन् न जानाति, तावन् नात्महिते प्रवर्तते, अतः असद्भिः विविक्तात्माऽज्ञापकैः ॥ ७ ॥

ऐश्वरशास्त्रादर्शने भगवन्तं परमफलरूपं न जानाति भगवच्छास्त्रे हि भगवदिच्छाप्रतिकूलाप्रवृत्तिः स्वस्य भोक्तृत्वज्ञानेन स्वसुखार्थं जायमाना बन्धरूपा, स्वस्यभोग्यत्वज्ञानेन

भगवत्सुखार्थं भगवदिच्छानुकूला प्रवृत्तिः मोक्षरूपा, अतो भगवच्छास्त्रबन्धमोक्षानुदर्शनम्, तदज्ञाने बन्धमोक्षयोरपि ज्ञानं न भवति, अतः असद्भिः भगवद्भक्त्यनुपयोगिभिः।

अनेन उत्तमानां भगवति सर्वोत्तमत्वज्ञानेन फलरूपा भक्तिः, पूर्वत्र मध्यमानां स्वस्य मोक्षादिसुखदातृत्वज्ञानेन साधनभक्तिरिति अत्रापि द्वयोर्विभेदः ॥ ८ ॥

कनिष्ठानां कालाख्यभगवच्छक्तेर्मर्यादयैव भगवति श्रद्धारूप आदरो भवति कालशक्तेरज्ञाने तु तन् न भवति, अतः असद्भिः भयप्रयोजकभगवद्वीर्याज्ञापकैः ॥ ९ ॥

शास्त्रं पिता आदेशो निवर्त्तनं, निवृत्तावेव जीवस्वरूपानुरूपं सुखं प्रजारूपं फलं भवति, तदज्ञाने गुणेष्वेव विश्वासः सुखदत्वज्ञानरूपः गुणविश्वासयुक्तः स्वसुखाय कथं प्रयतेत, अपि तु दुःखायैव प्रयतेतेत्यर्थः

अत्र पित्रादेशेन यन्त्रितवान् प्रजाविवृद्धये यथावन् मति नारदेन पितुस्तदाज्ञायाः आज्ञाविषयप्रजायाः प्रजाहेतुभूतकर्मणां तैराराध्यस्य आराधकस्य जीवस्य च यथार्थस्वरूपं ज्ञापितमिति नारदोक्तमेव ते कृतवन्तो न दक्षोक्तमिति रसेनानन्ददायक इति च ज्ञापितम्, भगवद्रसास्वादे आनन्दे उद्भूते संसाररसं त्यक्तवन्त इति ॥ १० ॥

वैशद्यार्थं पुनरपि दशानां कूटानामर्थो लिख्यते।

बद्धेन अस्वतन्त्रेण न सृष्टिः कर्तुं शक्यते ॥ १ ॥

सुप्तेन स्वप्ने कृतं सर्वमकृतमेव ॥ २ ॥

आशुविनाशि कार्यमपि फलपर्यन्तं स्थित्यभावाद् व्यर्थमेव ॥ ३ ॥

अनुत्तमपदार्थकरणे तस्य सुखहेतुत्वाभावाद् व्यर्थैव सृष्टिः ॥ ४ ५ ॥

स्वस्य मुग्धत्वे उत्पत्तिविनाशशालित्वे सृष्टेरपि तथात्वे उपयोगाभावाद् व्यर्थैव सृष्टिः।६।

विविक्तात्माऽज्ञाने सृष्टिरपि नात्महितार्थाऽतो व्यर्थैव ॥ ७ ॥

भगवदनुपयोगित्वे तु सुतरां सृष्टेर्वैयर्थ्यम् ॥ ८ ॥

कालस्यानुगुणत्वे एव सर्वं सिद्ध्यति अननुगुणत्वे तु सृष्टिरेव न सिद्ध्यति ॥ ९ ॥

पितुस्तदाज्ञायाः सृष्टेश्चापि स्वरूपं ज्ञातव्यमन्यथा सर्वमयथार्थमेव स्यादिति ॥१० ॥

॥ तत्त्वदीपकठिनांशविवेचने पञ्चमस्कन्धः समाप्तः ॥



न भिद्येत, संसारदुःखहेतोरहङ्कारस्य विलयार्थं तदाधिदैविकस्य तल्लयस्थानस्य च सङ्कर्षणस्य उपासना उक्ता, तया तस्मिन् लीनोऽहङ्कारो न पुनः कदाप्युद्गच्छेदिति, अतोऽहङ्कारस्यैव सर्वत्र बन्धहेतुत्वमुच्यते, अहङ्कारकृतं बन्धं अहङ्कारस्य दृश्यते जन्ममृत्युश्चे'त्यादिष्विति, अग्रे शिवावज्ञा तु भगवत्कार्यमत एव शापे जाते निरहङ्कारो देवो प्रसादितवानिति ॥१२॥

त्रयोदशेऽध्याये यथास्थितो ज्ञानदः, अत्राध्याये उपक्रमे नारदेन स्वयोगबलेनाऽऽकारितो जीवश्चित्स्वरूपो ज्ञानधर्मा यथास्थितः समागतः, स च मोहनिवारकं जीवविषयकं ज्ञानमुक्तवान् । 'कस्मिन् जन्मनी'त्यारभ्य 'तावदेव ही'त्यनेन बद्धावस्थापन्नजीवस्वरूपम्, 'एवं योनिगतो जीवः स नित्यो निरहङ्कृत' इत्यारभ्य 'परावरदृगीश्वर' इत्यन्तेन मुक्तावस्थापन्नजीवस्वरूपं च बोधयित्वा ज्ञानदो जातः । ततो नारदोपदिष्टविद्यया चित्रकेतुर्विद्याधराधिपत्यं लब्ध्वा शेषात्मकसङ्कर्षणसान्निध्यं प्राप्तः, सान्निध्यमहिम्नैव ध्रुववत् स्तुतिहेतुभूतं ज्ञानं प्राप्तस्तथापि यावद् गुरुर्नोपदिशति तावज्ज्ञानं न स्थिरं भवति तदर्थं शेषकृतोपदेशः, शब्दब्रह्म परं ब्रह्म ममोभे शाश्वतीतनू' इतिकथनात् शब्दब्रह्म वेदात्मकः शेषः अर्थात्मकपरब्रह्मणा नित्यसम्बद्धः, अतः स यथास्थितः उपदेशवाक्येषु सर्वात्मकस्य अद्वितीयस्य तुरीयरूपस्य परमात्मनो यथास्थितस्य स्वरूपं बोधितवान् । तच्च ज्ञानं भक्तिपर्यवसायीति ज्ञापनाय 'मद्भक्तः पुरुषो भवेदि'त्युक्तम्, भक्तिविषयः पुरुषोत्तमश्च परमानन्दरूपत्वात् परमफलरूप इति ज्ञापनार्थं 'यत् परात्मैकदर्शन'मित्युक्तं परश्च आत्मा च तयोरेकत्वेन दर्शनं, तेन सहाभेद इतियावत् । यद्वा परश्चासावात्मा च परात्मा तस्यैकस्य दर्शनं स्फुरणमित्यर्थद्वयमपि अभिप्रेतं, अत एवाग्रे परमफलरूपा भक्तिर्जाता तथा चात्राध्याय इद निष्पन्नं, नारदोपदेशेन चित्रकेतुना अहङ्कारपरित्यागेन चित्तविषयीकृतो यथास्थितोऽभिन्नोऽद्वितीयः सर्वात्मक आत्मरूपश्चित्रकेतोः सङ्कर्षणद्वारा स्वरूपफलकभक्तिपर्यवसायी ज्ञानदो जातो भगवानिति ॥ १३ ॥

चतुर्दशाध्याये स्नेहाद् वशगो भवेद् ध्रुवमिति । तत्र स्नेहश्च मनसो विषयः, तृतीयस्कन्धे भक्तिलक्षणे 'देवानां गुणलिङ्गाना'मितिवाक्ये 'सत्त्व एवैकमनसो वृत्ति'रितिकथनात् एकोनत्रिंशेऽध्यायेऽपि निर्गुणभक्तिलक्षणे 'मनोगतिरविच्छिन्ने'तिकथनात् वैष्णवतन्त्रे च 'स्नेहो भक्ति'रितिकथनात् अविच्छिन्नमनोगतिरूपा भक्तिरेव स्नेहस्तेन भगवान् ध्रुवं वशे स्थितो भवेत्, अत्राध्याये अनन्तोपदिष्टज्ञानेन चित्रकेतोर्भक्तिः स्नेहरूपा जातेति ज्ञापनार्थं विष्णुदत्तं विमानं 'सलक्षं लक्षवर्षाणा'मितिवाक्याद् अजरामरत्वं पूर्वतनस्य भोगाभिनिवेशस्य विद्यमानत्वात् तन्निवृत्त्यर्थं स्त्रीभिः सह रमणं हरिगुणगानेन च भक्ति'रनुवृत्ति' रितिनिरूपितम्, तथापि मया स्वसाधनबलेनेदं सम्पादितमितिजीवस्वभावदोषस्य स्वधर्मोत्कर्ष-

भावनारूपस्य सत्त्वाद् दीनताभावपूर्विका भक्तिर्न जाता येन परमं फलं स्यात्, विद्याधरत्व एव आसक्तिश्च जाता, तदुभयं भक्तस्य नोचितमिति तन्निवृत्त्यर्थं दीनताभावसम्पादनार्थं च भगवानेव शापं दापितवान्, अत्र भक्तत्वाभिमानज्ञापिका शिवावज्ञा स्वभावदोषज्ञापकानि शापनिमित्तानि शुकप्रोक्तानि अतद्वीर्यविद्वत्त्वादीनि चत्वारि चित्रकेतोर्विशेषणानि, शिवस्तु भगवान् सर्वज्ञ इति एनं भक्तं इदं च भगवत्कार्यं ज्ञात्वा प्रहस्य तूष्णीं बभूव, देवी तु न सर्वज्ञाऽतो रोषः शापदानं च, भक्त्यनुभावेनैव न शापमात्रेण विमानाच्च्युतिः, कार्ये जाते दीनभावो जातः, स्वभावदोषो निवृत्त इतिज्ञापकानि देवीं प्रति चित्रकेतुवचनानि प्रतिशापदानाभावश्च, भक्तस्य भक्तेश्च माहात्म्यज्ञापकानि देवीं प्रति शिववचनानि। आसुरयोनित्वेपि भक्तेरप्रतिहतत्वात् शापेन गुण एव जातो न तु दोष इति ज्ञापकानि निवृत्तदोषस्य वृत्रस्य दीनताभावपूर्वकपरमभक्तिबोधकानि चतुःश्लोकीवचनानि, भगवतो वश्यत्वज्ञापकमासुरदेहत्यागसमये वृत्रसमीपेऽवस्थानम्, सर्वेषु लोकेषु पश्यत्सु स्वस्मिन् प्रवेशनं चेति अनेन मनोनिवेशनं ध्यानमित्युक्तम्, ध्यानप्रकरणत्वमप्यस्य चतुर्दशाध्यायात्मकस्य सिद्धमितिदिक् ॥ १४ ॥

## ३४५ तमे पृष्ठेनुसन्धेयम्।

अग्रे द्वितीयाध्यायार्थोक्तौ (का० ४०) वेदप्रामाण्यसिद्ध्यर्थं नाममाहात्म्यमुक्तं। स्कन्धार्थेन विरोधः स्यादन्यथा तन्मतान्तरमित्यत्र पूर्वं प्रथमाध्याये विष्णुदूतपृष्टैर्यमदूतैर्धर्मस्य स्वरूपलक्षणादिकं प्रतिपादितम्, ततो जीवस्य दण्डनिमित्तं पापं संसारनिमित्तमज्ञानं च प्रतिपादितम्, ततोऽन्तिमश्लोके पापेऽज्ञाने च हेतुभूतः प्रकृतिसङ्गो निरूपितः, तन्निस्तारहेतुरीशसङ्गश्चोक्तः, तत्र वेदोक्तानि कर्माणि प्रायश्चित्तादिरूपाणि पापनिवर्तकानि अन्तरङ्गानि ज्ञानसाधनानि अज्ञाननिवर्तकानि इत्यपि सूचितम्, कुत्र सूचितं कथं सूचितमितिप्रश्ने उच्यते, अजामिलस्य पूर्ववृत्तकथनव्याजेन सूचितम्, पूर्वमस्य पापाभावात् अन्तरङ्गाणि ज्ञानसाधनान्येव कर्माणि कुर्वाणः स्थितः, तानि तु कामबलेन पराहतानि पश्चात् पापे उद्भूते तानि विलीनानि, ततोऽन्तिमश्लोके 'अकृतनिवेश'इत्यनेन प्रायश्चित्तरूपाण्यपि अनेन न कृतानि, अतो दण्डरूपं दुःखात्मकं तपोऽस्य 'निर्वेश'इति तत् सर्वं विष्णुदूतैरभ्युपगतम्, परं त्वायं, कर्मणां यत् पापनिवर्तकत्वं पुण्यजनकत्वं अज्ञाननिवर्तकत्वं ज्ञानजनकत्वं न यदुक्तं तत्कर्मद्वारा ईशमध्यारमभिप्रेत्यैव, अतो यथा यथा ईशसङ्गसञ्चारस्तथा तथा प्रकृतिसङ्गनाशात् पापादिनिवृत्तिरिति वेदस्य मतम्, तदत्र भगवन्नामश्रवणकीर्तनरूपया भक्त्या ईशसङ्गे सम्पन्ने

प्रकृतिसङ्गनाशे पापादिनिवृत्तिरितिवेदप्रमाण्यसिद्ध्यर्थमेव नाममाहात्म्यमुखेरे विष्णुदूतैरुक्तम्। वेदवचनसिद्धं मतं मर्यादा, वेदाभिप्रायसिद्धं मतं पुष्टिः, तत्पुष्टिरूपं मतं विष्णुदूतैनोच्येत यदि तदा अस्यापि स्कन्धस्य मर्यादार्थत्वे सिद्धे स्कन्धार्थेन पुष्टिरूपेण विरोधः स्यात्, यतः पुष्टिरूपं वेदाभिप्रायसिद्धं मतान्तरं, तस्मादेव हेतोस्तैस्तथा कथनमित्यर्थः, मर्यादायां पापनिवर्तकानि कर्माणि भिन्नानि मुक्तिसाधकानि च भिन्नानि पुष्टौ तूभयमेकेनैवेति पुष्टिबलं मर्यादातोऽधिकमिति ।

## पञ्चमाध्यायस्थकूटवाक्यार्थविचारः

अग्रे पञ्चमाध्याये कूटवाक्यनिरूपणे श्रीभागवते 'किमसत्कर्मभिर्भवे'दिति नवकृत्वः आवृत्तम्, तस्य श्रीधरीये अर्थ उक्तोप्यस्ति तथापि महदनुग्रहाद् यद् भातं तल्लिख्यते, लिङ्गभङ्गादर्शने निरन्तरं बन्धः पारतन्त्र्यमेव, अतः असद्भिः बन्धहेतुभिः कर्मभिःकिं दक्षात्मकपित्राज्ञया सृजनरूपैः किं भवेत् न किमपीत्यर्थः, अत्र अन्तिमे कूटे तदर्थे च जीवस्वरूपानुरूपसुखस्यैव प्रजात्वनिरूपणात् परतन्त्राणां बन्धहेतुकर्मभिस्तदजननात् फलाभाव उच्यते । एवमन्येष्वपि कूटेषु तादृक् तादृक्कर्मभिर्जीवस्वरूपानुरूपसुखाभाव एव फलाभावो ज्ञेयः ॥ १ ॥

'या निशे'ति वाक्यात् तुरीयावस्थाया अदर्शने अवस्थात्रयम्, माया स्वप्न एव, अतः असद्भिः स्वाप्निकवत् मिथ्याभूतैरपि दक्षाज्ञया सृजनरूपैः कर्मभिः पूर्वोक्तसुखरूपफलं न स्यादित्यर्थः, एवं सर्वेषु कूटेषु सृजनरूपकर्मणां समानत्वेपि तत्तत्कूटोक्तविशेषणभेदादेव भेदो ज्ञेयः ॥२॥

मत्यक्ष्यात्मः अज्ञाने बहिरर्थप्राप्तिः आशुविनाशिनी, अतः असद्भिः अचिरकालस्थायिभिः ॥ ३ ॥

बुद्ध्या उत्तमपदार्थविचारो भवति बुद्धिनिष्ठायाः बुद्धिपरिपाकावस्थाया अभावे उत्तमाप्राप्तिः, अतः असद्भिः उत्तमपदार्थाप्रापकैः ॥ ४ ॥

कुबुद्धिहेतुकं हीनपदार्थैर्दीयमानं दुःखं जनेषु यावन् न जानाति तावत् कुबुद्धिदातृन् हीनपदार्थांश्च न त्यजति, अतः असद्भिः निवृत्त्यनुपयोगिभिः । पूर्वत्र उत्तमालाभे सुखाभावः, तत्र कारणं बुद्धिपरिपाकावस्थाऽभावः अत्र तु हीनपदार्थलाभे दुःखम् तत्र कारणं कुसङ्गः कुबुद्धिश्चेतिद्वयोर्भेदः ॥ ५ ॥

भगवद्धर्मविपरीतधर्मकर्त्री माया, तस्या अज्ञाने उत्पत्तिविनाशावेव मायामोहेन भवतः, अतः असद्भिः उत्पत्तिविनाशकैः ॥ ६ ॥

सद्घातनिष्ठान् आत्मपर्यन्तपदार्थान् याथार्थ्येन यावन् न जानाति, तावन् नात्महिते प्रवर्तते, अतः असद्भिः विविक्तात्माऽज्ञापकैः ॥ ७ ॥

पेशशास्त्रादर्शने भगवन्तं परमफलरूपं न जानाति भगवच्छास्त्रे हि भगवदिच्छाप्रतिकूलप्रवृत्तिः स्वस्य भोक्तृत्वज्ञानेन स्वसुखार्थं जायमाना बन्धरूपा, स्वस्यभोग्यत्वज्ञानेन

भगवत्सुखार्थं भगवदिच्छानुकूला प्रवृत्तिः मोक्षरूपा, अतो भगवच्छास्त्रबन्धमोक्षानुदर्शनम्, तदज्ञाने बन्धमोक्षयोरपि ज्ञानं न भवति, अतः असद्भिः भगवद्धर्मत्वनुपयोगिभिः ।

अनेन उत्तमानां भगवति सर्वोत्तमत्वज्ञानेन फलरूपा भक्तिः, पूर्वत्र मध्यमानां स्वस्य मोक्षादिसुखदातृत्वज्ञानेन साधनभक्तिरिति अत्रापि द्वयोर्विभेदः ॥ ८ ॥

कनिष्ठानां कालाख्यभगवच्छक्तेर्मर्यादयैव भगवति श्रद्धारूप आदरो भवति कालशक्तेरज्ञाने तु तन् न भवति, अतः असद्भिः भयप्रयोजकभगवद्वीर्याज्ञापकैः ॥ ९ ॥

शास्त्रं पिता आदेशो निवर्त्तनं, निवृत्तावेव जीवस्वरूपानुरूपं सुखं प्रजारूपं फलं भवति, तदज्ञाने गुणेष्वेव विश्वासः सुखदत्वज्ञानरूपः गुणविश्वासयुक्तः स्वसुखाय कथं प्रयतेत, अपि तु दुःखायैव प्रयतेतेत्यर्थः

अत्र पित्रादेशेन यन्त्रितान् प्रजाविवृद्धये यतान् प्रति नारदेन पितुस्तदाज्ञायाः आज्ञाविषयप्रजायाः प्रजाहेतुभूतकर्मणां वैराराध्यस्य आराधकस्य जीवस्य च यथार्थस्वरूपं ज्ञापितमिति नारदोक्तमेव ते कृतवन्तो न दक्षोक्तमिति रसेनानन्ददायक इति च ज्ञापितम्, भगवद्रसास्वादे आनन्दे उद्भूते संसाररसं त्यक्तवन्त इति ॥ १० ॥

वैशद्यार्थं पुनरपि दशानां कूटानामर्थो लिख्यते ।
बद्धेन अस्वतन्त्रेण न सृष्टिः कर्तुं शक्यते ॥ १ ॥
सुखेन स्वर्गे कृतं सर्वमकृतमेव ॥ २ ॥
आशुविनाशि कार्यमपि फलपर्यन्तं स्थित्यभावाद् व्यर्थमेव ॥ ३ ॥
अनुत्तमपदार्थकरणे तस्य सुखहेतुत्वाभावाद् व्यर्थैव सृष्टिः ॥ ४ ५ ॥
स्वस्य मुग्धत्वे उत्पत्तिविनाशशालित्वे सृष्टेरपि तथात्वे उपयोगाभावाद् व्यर्थैव सृष्टिः ।६।
विविक्तात्माऽज्ञाने सृष्टिरपि नात्महितार्थाऽतो व्यर्थैव ॥ ७ ॥
भगवदनुपयोगित्वे तु सुतरां सृष्टेर्वैयर्थ्यम् ॥ ८ ॥
कालस्यानुगुणत्वे एव सर्वं सिद्ध्यति अननुगुणत्वे सृष्टिरेव न सिद्ध्यति ॥ ९ ॥
पितुस्तदाज्ञायाः सृष्टेश्चापि स्वरूपं ज्ञातव्यमन्यथा सर्वमयथार्थमेव स्यादिति ॥१० ॥

॥ तत्त्वदीपकठिनांशविवेचने षष्ठस्कन्धः समाप्तः ॥



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

## अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# सप्तमस्कन्धविवरणम् ।

एवं त्रिरूपा पुष्टिर्हि षष्ठे यत्नेन रूपिता ।
दुःखाभावः सुखं चाऽपि ह्यैहिकामुष्मिकं द्विधा ॥१॥
ततः पञ्चदशाध्यायैरूतिः सप्तम ईर्यते ।
पुष्टिदोषनिवृत्त्यर्थमूतिलीला निरूप्यते ॥२॥
विषमत्वं हरेर्दोषः पुष्टौ कामाद्यभावतः ।
अतो भगवता सृष्टा निरूप्यन्ते तु वासनाः ॥३॥

---

श्रीबालकृष्णो विजयते ।

## अथ सप्तमस्कन्धनिबन्धस्य योजना ।

अथ सप्तमस्कन्धार्थं निबध्नन्तः पूर्वस्कन्धेनास्य सङ्गतिं बोधयितुं पुष्टिस्वरूपं सूचयन्त ऊतिनिरूपणं प्रतिजानते-एवमित्यादि । एवं जीवार्था पुष्टिरनुग्रहाख्या त्रिरूपा कर्मकालस्वभावबाधिका अजामिलेन्द्रमरुद्विपयिणी यत्नेन साध्यानां दूत-विश्वरूपदध्यङ्वृत्राणामपि हितकारितया सूक्ष्मविचारेण षष्ठे निरूपिता । स्वार्थश्च दुःखाभावसुखभेदेन ऐहिकामुष्मिकभेदेन वा यतो द्विधा ॥ १ ॥ ततो हेतोः सप्तमे एककार्यकारित्वेन ऊतिर्निरूप्यत इत्यर्थः । ननु स्वार्थस्यैकस्यैवेतरस्यापि पुष्ट्यैव सिद्धेर्वक्तुं शक्यतया किमनया लीलयेत्यत आहुः-पुष्टिदोषेत्यादि ॥ २ ॥ को दोष इत्यपेक्षायामुपक्रमस्थप्रश्नोत्तरस्वारस्येन तमाहुः-विषमत्वमित्यादि । कामाद्यभावत इति सप्तम्यर्थे तसिः । अत इति । तदभावसाधनस्यावश्यकत्वात् । तथा च यद्दुःखादिकं तद्वासनयेति न भगवति दोष इति बोधयितुं ता निरूप्यन्त इत्यर्थः । वासनाश्च वंशविशेषरूपाः सन्तानात्मकत्वात् । वंशलक्षणं तु 'राज्ञां

आध्यात्मिकादिभेदेन कर्म स्यात्त्रिविधं यतः।
पञ्चात्मकं ततः पञ्चदशधा तन्निरूप्यते ॥४॥
ताश्च कर्मभिरेवोक्ताः कर्मभ्यस्ताः पृथङ्मताः।
अतः पुष्ट्याऽपि भगवान् यत्करोति स्वलीलया ॥५॥
जीवानां तत्तथैवेष्टं वासनावशतः स्फुटम्।
जीवगा वासना सूक्ष्मा समावेशात्तु मध्यमाः ॥६॥
उभयं जीवसम्बन्धि मनस्यन्या तु कर्मभिः।
जीवगा वासना ज्ञेया देवदैत्याहितेच्छया ॥७॥

ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वय' इति तत्र ब्रह्मपदेन परब्रह्मणश्चतुर्मुखस्य च सङ्ग्रहः। राज्ञामिति पदं रञ्जनकर्तृमात्रपरं यौगिकम्। तथा ब्रह्मणः सकाशादुत्पन्नानां रागजनकानां त्रिकालवर्ती सन्तानो वंश इति सिद्ध्यति। स च वासनास्वपि तुल्य इति तद्बोधयितुं विशेषमलौकिकं स्फोटयितुं चाहुः—**भगवता सृष्टा** इति। न च सामान्यलक्षणेषु पञ्चमं लक्षणं मन्वन्तराणीति तद्विशेषत्वमूर्तेर्वक्तव्यं न तु षष्ठलक्षणभूतवंशविशेषत्वमिति शङ्क्यम्। यथा ऽंदशे ऊत्यनन्तरं मन्वन्तरपाठेऽपि लक्षणे 'मन्वन्तराणि सद्धर्म ऊतयः कर्मवासना' इति प्रातिलोम्यं जन्यजनकभावादेवमत्रापि मन्वन्तराणामष्टमे स्फुटतयाऽत्रौचित्यबलेन वंशविशेषताग्रहणेऽपि बाधकाभावादिति ॥ ३ ॥

एवं त्रिभिः स्कन्धार्थं निरूप्य तस्य पञ्चदशभिर्निरूपणे हेतुमाहुः—**आध्यात्मिकेत्यादि**। पञ्चात्मकमिति। अविद्यापर्वजन्यत्वेन विद्यापर्वजन्यत्वेनाऽधिष्ठानादिपञ्चकजन्मत्वेन च तादृशम् ॥ ४ ॥

ननु कर्मणस्तावद्विधत्वे स्कन्धार्थभूताया वासनायाः कथं तथात्वमत आहुः—**ताश्चेत्यादि**। ऊतयः कर्मवासना' इति लक्षणे ताः कर्मजन्या एवोक्ता अतस्तद्भेदात्तासामपि तावत्त्वमित्यर्थः। नन्वस्त्वेवं तथापि तासां कथं पुष्टिसहकारित्वमित्यत आहुः—**अत इत्यादि**। तथा च भगवत्कृतेरिष्टत्वज्ञापनेन सहकारित्वमित्यर्थः ॥ ५ ॥ ननु भगवत्कृतिः पौरस्त्या वासनास्तु पाश्चात्या इति समानकालीनत्वाभावात्कथं सहकारित्वमत आहुः—**जीवगेत्यादि**। **समावेशादिति**। जीवस्य देहे प्रवेशात्। मध्यमेति। चिदचिद्ग्रन्थिरूपाऽभिमानजन्या। तथा च भगवत्कर्मजन्याया विभागसमानकालीनत्वेन जीवकर्मजन्यायाः सृष्ट्यारम्भसमानकालीनत्वेन यत्नजन्याया अपि तथात्वेन पौर-

आत्मीयत्वेन विज्ञाते तेष्वावेशस्तयोर्भवेत् ।
तदैव तादृशे शक्तिः कर्मणीति मतिर्मम ॥८॥
अतस्तान् तादृशान्मत्वा पुष्टिमार्गं करोति हि ।
त्रीणि प्रकरणान्यत्र पञ्चभिः पञ्चभिः क्रमात् ॥९॥
दैत्यदैवांशभेदेन पितापुत्रौ निरूपितौ[1] ।

स्त्यस्मान्न काऽपि सहकारित्वे शङ्केत्यर्थः ॥ ६ ॥ तदेतद् द्वाभ्यां विवृण्वन्ति—जीवगेत्यादि । एनं जीवं देवमेनं दैत्यं कृत्वैवं हितं करिष्यामीतीच्छया यो व्युच्चरणात्मको विभागस्तत्काले तयेच्छया सा वासना जीवगा ज्ञेया, जीववर्तिनी सती सूक्ष्मदेहप्रवेशहेतुर्ज्ञेया । इदमेव पूर्वश्लोके सूक्ष्मेत्यनेनोक्तम् । एतच्च श्रुतावपि सिद्ध्यति । 'त्रयाः प्राजापत्या' इति, पञ्चरात्रे च उत्पन्नास्त्रिविधा जीवा इति । ततस्तया वासनया आत्मीयत्वेन देहे विज्ञाते सति तेषु देवदैत्यरूपेषु स्थूलदेहेषु तयोर्दैवदैत्यत्वेनात्मानमभिमन्वानयोरावेशः समागमो भवेत् । इयं मध्यमाऽपि जीवगैव । 'एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयत' इति चतुर्थस्कन्धे नारदवाक्ये तस्यापि जीवशब्दवाच्यत्वात् । तदैव एवं वासनाद्वयसम्बन्ध एव तादृशे सात्त्विके राजसे च कर्मणि स्थूलशरीरस्य सामर्थ्यमिति मे मतिर्मया श्रुत्यादितात्पर्यविचारेणोच्यते न त्वन्यसम्मत्येत्यर्थः ॥ ७ ॥ ८ ॥ सिद्धमाहुः—अत इत्यादि । यत एवमिच्छया वासनाविभागः, अतस्तान् देवान् दैत्यांश्च तादृशान् वासनावशान् ज्ञात्वा हि निश्चयेन तेषां हितार्थं पुष्टिमार्गं करोति । तथा च स्वत एकपक्षपातकरणे हीतरस्यानिष्टकरणे कर्तरि वैषम्यं न तु तद्वासनामनुसृत्य । 'वैषम्यनैर्घृण्ये न सापेक्षत्वादि'ति सूत्रे तथैव सिद्धेः । किञ्च, येषां दैत्यानां मारणं तेषामपि मुक्तिरिति तेषामपि हितमेवेति बाहिर्मुख्यादेव वैषम्यभानमिति । पुष्टिसृष्ट्योः सहकारित्वमूतेः पुष्टिदोषनिवारणार्थत्वं च सूपपन्नम् । इदमेवोपक्रमे प्रश्नोत्तराभ्यां सिद्ध्यतीति बोधनाय हि शब्दप्रयोगः ।

एवं स्कन्धप्रयोजनं निष्कृष्य प्रकरणानि विभजन्ते—त्रीणीत्यादि । अत्र स्कन्धे क्रमात्सूक्ष्ममध्यमबाह्यवासनाभेदेन पञ्चभिः पञ्चभिरध्यायैस्त्रीणि प्रकरणानि बोध्यानीति शेषेण योजना ॥ ९ ॥

तत्र गमकमाहुः—दैत्येत्यादि । दैत्यदैवांशभेदेन पितापुत्रौ हिरण्यकशिपु-

[1] पितापुत्रैर्निरूप्यते, इति पाठान्तरम् ।

**कर्मणैव भवेदेतदिति कर्मनिरूपणम् ॥१०॥**
**नारदस्त्रितयावेशी वक्ताऽत्र विनिरूप्यते।**
**ज्ञानी भक्तस्तथा कर्मी श्रोता चाऽपि निरूपितः ॥११॥**
**दैत्यानां पञ्चकर्माणि लौकिकालौकिकत्वतः।**
**लौकिकं द्विविधं कृत्यं भोगेनापि निरूप्यते ॥१२॥**
**तदतिक्रमणं कृत्यं सेवाधर्मकृतं न हि।**

महादौ निरूप्य ते सूक्ष्ममध्यमे वासने स्फुटीकृते। एतद्वासनाद्वयं **कर्मणैव भवेदिति** बोधयितुं कर्मनिरूपणमित्यध्याहारेण योजना। तथा च चायं क्रम एव तथा प्रकरणविभागगमक इत्यर्थः। अत्र **निरूपिताविति** पाठे तुनाऽध्याहार इति गुणः। **पितापुत्रैरिति** पाठे पितापुत्रपदं तदुपाख्यानपरम्। पितुर्दैत्यांशत्वं 'तावादिदैत्यौ सहसे'ति तृतीयसुबोधिनीतो ज्ञेयम्। पुत्राणां देवांशत्वं च 'आसन् मरीचेः षट्पुत्रा' इति दशमस्कन्धाज्ज्ञेयम् ॥ १० ॥

अत्र युधिष्ठिरनारदसम्वादोपन्यासतात्पर्यमाहुः—**नारद** इत्यादि। **त्रितयावेशीति** देवदैत्यनरावेशी। तेन त्रिविधवासनाशालित्वात्सम्यक्तद्वृत्तान्ताभिज्ञः। दैत्यवासना च गन्धर्वजन्मन्यतिलम्पटत्वाज्ज्ञेया। 'देवोऽदेवाञ्जघनतः सृजति स्मातिलोलुपा'निति वाक्येन लाम्पट्यस्य तत्सहजधर्मत्वादिति। **श्रोता तथेति**। युधिष्ठिरस्त्रितयावेशी ज्ञानादित्रितयवांश्चेत्यर्थः। तथा च सम्यग् बोधयितुं सम्यग् बोद्धुं च तौ शक्ताविति बोधनाय तदुपन्यास इत्यर्थः ॥ ११ ॥

एवमत्र सामान्यतः प्रकरणार्थो विचारितः। अतः परं प्रथमप्रकरणार्थं विशेषतो विचारयन्ति—**दैत्यानामित्यादि**। दैत्यानां पञ्चपर्वाविद्याव्याप्तत्वात्तादृशानि पञ्चकर्माणि, तानि **लौकिकालौकिकत्वतो** लौकिकत्वमलौकिकत्वं च प्राप्य द्विविधानि, तेन तद्वोधनायाद्ये द्वेधा विभाग इत्यर्थः। तर्हि द्वावध्यायौ युक्तौ, कुतः पञ्चेत्यत आहुः—**लौकिकमित्यादि**। द्वितीयादिभिरध्यायैर्द्विविधं कृत्यं सर्वपीडादिरूपं तपआदिरूपं च लौकिकं कृत्यं भोगेन। अपिशब्दात्पुत्रस्नेहादिना चापरं द्विविधं कृत्यमेवं चतुर्भिर्निरूप्यते। तदतिक्रमणं प्रथमेन सनकाद्यतिक्रमणमलौकिकं निरूप्यत इत्येवं पञ्चेत्यर्थः ॥ १२ ॥

वैकुण्ठस्थितानां सेवकानां भगवत्परिचर्यैकयोग्यतानां देहेन्द्रियासुहीनतया केवलानामविद्यासम्बन्धस्याशक्यवचनत्वात्कथं सनकाद्यतिक्रमस्याविद्याकृतत्वमित्याकाङ्क्षायामाहुः—**सेवेति**। अतिक्रमणरूपं कृत्यम्। हि निश्चये। सेवाधर्माभ्यां

अवज्ञा त्वन्यथा न स्याद्विज्ञाप्या वा स्वयुक्तितः ॥१३॥
अतो दैत्यस्वभावस्य समुद्गमनतस्तदा।
वैकुण्ठवासयोग्यत्वात्तथा शापं त्रिधा ददुः ॥१४॥
वासना त्रिविधा दुष्टा स्फुटमत्यन्तनिर्गता।
अत्यन्तभोगे तु यथा तद्वत्कामः प्रशाम्यति ॥१५॥
अतः कृपैव शापे तु कारणं हरिणा कृतम्।
तृतीयस्कन्धवार्ता तु मतान्तरमिति स्थितिः ॥१६॥
क्रोधः कामस्तथा लोभो जन्मत्रयगता यतः।
वासनाहेतवो लोके दैत्यत्वं जायते यतः ॥१७॥

कृतं न, तत्र तर्केण हेतुं सूचयन्ति-अन्यथेति। अन्यथा 'यद्येतत्कृतं स्यात् (अवज्ञा न स्यात्)। वेत्रेण स्खलनं न कुर्यातां तेजश्च न विहसेतामिदानीं न दर्शनावसर इत्येवं वदेतां स्वयुक्तिभिस्ते विज्ञाप्या एव ताभ्यां स्युः। यतो नैवमतो ज्ञायते अविद्याकृतमेवेति। तेन सिद्धमाहुः-अत इत्यादि। तथा च विभागसमयविचारितो यो दैत्यस्वभावो देहसम्बन्धमात्रकालीनाविद्यासंसर्गकृतस्तस्य सम्यगुद्भेोयादेव तदतिक्रमणमित्यर्थः। इदं भगवद्विचारितं सनकादिभिरपि ज्ञायत एवेत्याशयेनाहुः-तदेत्यादि। तथा शापं त्रिधेति। त्रिजन्मव्यापकं क्रमेण लोभकामक्रोधबाहुल्यात्रिमकारकमित्यर्थः ॥१३॥१४॥ शापेन यत्कृतं तदाहुः-वासनेत्यादि। ननु भवतु वासनायाः शापेन निर्गमस्तथापि पुष्टेः कथं सहकारित्वमित्यत आहुः-अत्यन्तेत्यादि। तुः पूर्वपक्षनिरासे। यथा अत्यन्तभोगे कामः प्रशाम्यति तद्वदत्यन्तनिर्गमे वासनाऽपि। अतो वासनानिवृत्त्यर्थत्वात् शापे कारणमपि हरिणा दुःखहर्त्रा कृतं कृपैव शश्मेक्षिकायामनुग्रहात्मकमेव तत्रप्रसङ्गं कण्टकन्यायस्योक्तत्वात् सर्वत्र भगवदिच्छायाः कारणत्वाचातोऽत्रापि न पुष्टेः सहकारित्वभङ्ग इत्यर्थः। ननु यद्येवं तदा तृतीयस्कन्धे ब्रह्मणा 'भगवत्प्रतिकूलशीलावि'ति भगवता च 'कदर्थीकृत्य मां यद्वो बह्वकान्तापतिक्रममि'तिस्वेच्छाविरुद्धत्वं किमिति बोधितमित्यत आहुः-तृतीयेत्यादि। मतान्तरत्वं तृतीयनिबन्ध एव व्युत्पादितम् ॥१५॥१६॥ एवं सर्वत्र सहकारित्वबोधनाय कार्यद्वारा तेषु वासना साधिता। अतः परं तस्या जन्मत्रयव्यापकत्वं कुत इत्याकाङ्क्षायामाहुः-क्रोध इत्यादि। वासनाहेतव

अतः सामान्यतः प्रोक्तो लोभोऽत्रैव विशेषतः।
क्रोधरूपो हरिस्तस्मादत्रैवावततार ह ॥१८॥
तद्धर्मग्रहणे तस्य क्रोधादिर्याति नाऽन्यथा
वासना च ततो नाशं यास्यत्येव न संशयः ॥१९॥
अधिकारस्त्वसिद्ध्यर्थं ज्ञानमस्य निरूप्यते।
भोगातिक्रमयोर्मध्ये तपश्चाऽपि निरूप्यते ॥२०॥
ब्रह्मस्तुतिर्वरप्राप्तिश्चतुर्भिः स्यादिहोन्नतिः।

इत्यत्र बहुव्रीहिः। समासान्तस्य वैकल्पिकत्वात्काभावः। यतो वासनातो दैत्यत्वं जायेत तादृग्वासनाहेतुकाः क्रोधाद्यो यतस्तत्तज्जन्मनि प्रसिद्धाः, अतो हेतोः सा त्रिविधेति तथेत्यर्थः। तत्रैव लोभ एव कुत इत्याकाङ्क्षायामाहुः–अत इत्यादि। अतः सामान्यतः प्रबलाद्रजोगुणात्। रजसो लोभ एव चेति। तस्य मुख्यकार्यरूपो लोभः। अत्रैव प्रथमजन्मन्येव विशेषत आधिक्येन प्राप्तस्तस्माद्धेतोः क्रोधरूपः कम्पनाधिकरणविषयत्वानयोक्तरूपो हरिस्तद्दुःखहर्त्ता भगवानत्रैव जन्मनि अवततार मूलस्थानादिहागतः। ह इति प्रसिद्धौ नृकेसरिणो मूलरूपत्वेनैव तापनीये प्रसिद्धत्वादिति ॥१७॥१८॥

दोषनिवृत्तिप्रकारमाहुः–तद्धर्मेत्यादि। एवं वराहावतारेऽपि यज्ञरूपत्वेन 'पशूनां वा एष मन्युर्यद्वराह' इति श्रुत्या च क्रोधरूपता ज्ञेया। अतः कृपयैव-हरणाच्च वैषम्यं भगवतीति पुष्टिदोषनिवृत्त्यर्थमेवैवं लीलेति भावः। एवं चात्र प्रकरणे ऊतिः करणं क्रोधादिकं व्यापारो दैत्यादिरूपेण स्थितिः फलमिति बोधितम्। एतेन नृसिंहलीलाया वेदविरोधिनाशकत्वेन रक्षारूपत्वात्तदंशे लक्षणस्याव्यापकत्वं पुष्टिलक्षणस्यातिव्यापकत्वं च निरस्तम्। सहकारितयाऽत्र पुष्टेः सत्त्वेऽपि लीलायामूतेरेव मूलत्वेन तत्प्रयुक्तत्वादिति। एवं वराहचरित्रेऽपि ज्ञेयम्। प्रकृतमनुसरामः ॥१९॥

ननु दैत्यवासनाया नैसर्गिकत्वे द्वितीयाध्यायोक्तं तत्त्वज्ञानं तृतीयोक्ते तपःस्तुती चतुर्थोक्ता वरप्राप्तिश्च कथं सङ्गच्छन्ते। असुर एवं ज्ञानादेरसम्भवात्। ब्रह्मणः प्रपन्नत्वेन तादृशे वरदानायोगाच्चेति चेत्तत्राहुः–अधिकारस्त्वेत्यादि। तथा च स्वाधिकारज्ञापनाय ज्ञानमुच्यते, ऐहिकोन्नतिज्ञापनाय ज्ञानादिचतुष्टयं तपसः परमो-

तपसः परमोत्कर्षो वरस्तुत्यादिनां भवेत् ॥२१॥
अत्यन्तभोगसम्पत्तावतृप्तिर्वासनावशात् ।
द्वेषः सहेतुको नाऽत्र भ्रातृमारणतः क्वचित् ॥२२॥
पुत्रस्निग्धस्ततो यस्मादात्मत्वात्तु विशेषतः ।
भगवानपि विश्वात्मा देवान् धारयते दृढम् ॥२३॥
अतोऽत्र वासनाहेतुरहेतुः परमो मतः ।
कृष्णाविष्टेन दैत्येन प्रह्लादजननं मतम् ॥२४॥
वैकुण्ठे गमनं तस्य पूर्वसामर्थ्यसम्भवात् ।
सर्वत्र वासना तस्य ज्ञानरूपा विनिर्गता ॥२५॥

त्कर्षज्ञापनाय वरस्तुती चोच्येते । तेन सर्वज्ञोऽपि ब्रह्मा अविचार्यैव वाञ्छितदुत्कर्षमवलोक्य दत्तवान् । अधिकारदशायां विचाराभावेन सार्वज्ञ्यस्य तिरोधानात् । अत एवाग्रे'मैवं वरोऽसुराणां ते प्रदेयः पद्मसम्भवे'त्यनेनाविचारितदानं निषिद्ध्यते । अतो दैत्यानां लौकिकालौकिकत्वेनालौकिकांशस्याऽपि तत्र सत्त्वात्तद्वासनावशेन ज्ञानादिसम्भवेऽपि नासुरत्वप्रतिरोधो न वा परलोकोपकार इत्यर्थः ॥२०॥२१॥

दैत्यानां तादृशं तत्त्वज्ञानं वासनाजन्यत्वाल्लौकिकमेव बिडालादीनां रात्रौ चाक्षुषादिवदित्यत्र गमकमाहुः अत्यन्तेत्यादि । न ह्यत्र तादृक्त्वत्वे भोगादतृप्तिर्भवेत्, न वा भ्रातृमारणतो द्वेषो भवेत् । नाऽपि तादृग्ज्ञानवान् क्वचित्पुत्रस्निग्धो भवेत् । न वा देहात्मबुद्धिर्दृढा भवेत् । न वा भगवति विषमत्वबुद्धिर्भवेत्, यस्मादेतानि तस्मिन्नुक्तानि ततो ज्ञायते तृप्तिर्वासनावशात् । द्वेषो वासनाहेतुकः, पुत्रस्नेहोऽपि ततस्तत्रापि 'आत्मा वै जायते पुत्र' इति देहात्मभावदार्ढ्येन विशेषतो भगवान् विश्वात्माऽपि दृढं देवान् धारयत इति वैषम्यज्ञानम् । अतो हेतोरत्र तत्त्वज्ञानेऽपि वासनैव हेतुर्नापर इत्यर्थः । ननु तस्य यदि सर्वं वासनातस्तदा तस्मात्परमवैष्णवस्य प्रह्लादस्योत्पत्तिः कथं भवेत् । अष्टमस्कन्धीयेषु श्रीवामनवाक्येषु तस्य वैकुण्ठगमनं कथमुच्येतेत्यत आहुः—कृष्णेत्यादि । तत्रैव 'यतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृग' इति कथनाद्भगवांस्तद्धृदये प्रविष्ट इति तादृशेन तज्जननं वैकुण्ठगमनमपि पूर्वसामर्थ्यादेव । अतस्तस्य सर्वत्रोक्तानुक्ते अन्यत्रोक्ते च कार्ये तस्य ज्ञानरूपा वासना विनिर्गता सम्यग् बहिः प्रकटा जाता, तथैव स्नेहादिकं

अतः स्नेहस्तथा चक्रे यो यच्छ्रद्धः स एव सः।
इति बुद्ध्या मतिं चक्रे पुत्रमारणतत्परराम् ॥२६॥
कृष्णद्वेषो महत्पर्व शापात्तत्र न तत्फलम्।
सद्वासनाप्रकारेण ततो मारणमुच्यते ॥२७॥
शत्रुश्चेत्पुत्रतां याति तदा द्वेषो भवेत्क्वचित्।
तदभावाय तत्स्नेहः पञ्चमे वै निरूपितः ॥२८॥
औद्धत्यं सर्वपीडा च स्वपीडानिर्वृतिः सदा।
भगवद्भक्तपीडा च वासना पञ्चधोदिता ॥२९॥
अतः सद्वासनां प्राह पञ्चभिः सर्वमोक्षदाम्।
दैत्यभावे गते सर्वे मुच्यन्ते नाऽत्र संशयः ॥३०॥

जातमिति सर्वत्र सैवोच्यत इत्यर्थः ॥२२॥२३॥२४॥२५॥२६॥

ननु स्कन्धारम्भे द्वेषान्मुक्तिरुक्ता, सास्य कारणसत्त्वेऽपि कुतो नाऽभूदित्यत आहुः–कृष्णद्वेष इत्यादि। महत्पर्वेति। तामिस्रादिषु पञ्चमं महातमोरूपम्। स्फुटमन्यत् ॥ २७ ॥ नन्वग्रे द्वेषकार्यस्य कथनात्ततः पूर्वं पुत्रस्नेहकथनस्य किं प्रयोजनमत आहुः शत्रुरित्यादि। तथा च स स्नेहोऽपि महातमस एव रूपविशेष इति ज्ञापनाय तत्कथनमित्यर्थः। एवं महापर्वव्याख्याय तावन्मात्रसत्तां व्यावर्त्तयितुं सर्वस्या अविद्यायाः सत्त्वं कार्यद्वारा सूचयन्ति–औद्धत्यमित्यादि। निर्वृतिः कामभोगः। तथा च मूलजीवगतया वासनया सनकाद्यतिक्रमस्ततः कार्यजीवगतया क्षोभात्मक आदिरूप, ततः स्थूलगतया औद्धत्यादिपञ्चकमित्येवं पञ्चभिरध्यायैः सपरिकरा दैत्यवासना आसुरसर्गबीजभूता निरूपिता। तेनाद्यं प्रकरणं समाप्तमित्यर्थः ॥२८॥२९॥

एवं सप्तदशभिः प्रथमं प्रकरणं विचारितम्। अतः परं द्वादशभिर्द्वितीयं दैवसर्गबीजभूतां सद्वासनां वक्तुं देवप्रकरणं विचारयितुमारभन्ते–अत इत्यादि। अत इति अतः परम्। सर्वमोक्षदामिति। अविद्यापर्वपञ्चकनाशिकाम्। नन्वभ्यर्हितात्सद्वासना पूर्वं वक्तव्या, सा पश्चात्कुत उच्यत इत्यत आहुः–दैत्येत्यादि।

२ तत्परः। ३ प्रकरणे।

अतो ज्ञानक्रियाभ्यां च सर्वान्मोचयते स्फुटम्।
सैव सद्वासना प्रोक्ता या सर्वानेव मोचयेत् ॥३१॥
दया तु प्रथमं पर्व ज्ञानदा येन मुच्यते।
महत्कृपा द्वितीयं तु सानुभावा विशेषतः ॥३२॥
ततोऽतिदुःखहेतूनां नाशकश्चेद्धरिर्भवेत्।
क्रियापूर्वाङ्गभावेन तृतीयं पर्व तद्भवेत् ३३॥
सर्वथा सन्मुखो जीवो यथा तत्तु चतुर्थकम्।
कायवाङ्मनसां भावः प्रसादः सहितस्तु तत् ॥३४॥
निर्दुष्टसर्वसुखभाक् पूर्णकामश्च पञ्चभाक्।

'निबन्धायासुरी मते'ति वाक्याद्दैत्यभावस्य बन्धकत्वेन तस्मिन् गते सर्वे मुच्यन्ते अत्र संशयो न, प्रतिबन्धकाभावस्य हेतुत्वात् ॥ ३० ॥ अतः सद्वासना ज्ञानक्रियाभ्यां सर्वान् स्फुटं मोचयत इत्यसद्वासनानिवर्त्तकत्वज्ञापनाय पश्चादुच्यत इत्यर्थः ॥

कार्यद्वारा तस्या लक्षणमाहुः-सैवेत्यादि। तेन काम्यधर्मादिविषयिणी सा नेति तस्या निष्कृष्टं स्वरूपं प्रकरणप्रतिपाद्यमुक्तम् ॥ ३१ ॥

अध्यायार्थान् वदन्तः पर्वाण्याहुः दयेत्यादि। 'तस्मात्सर्वेषु भूतेषु दयां कुरुते'-त्यादिषष्ठाध्यायसमाप्तिस्थत्रासर्यमोचकज्ञानदायिनी दया तस्याः प्रथमं पर्व। एवं सप्तमे नारदकृपायाः सानुभावाया उक्तत्वात्तादृशी महत्कृपा द्वितीयं पर्व। तथा-ऽष्टमे श्रीनृसिंहप्रादुर्भावस्योक्तत्वाद् दुःखनाशकभगवत्प्रादुर्भावानुकूला क्रिया तृतीयं पर्व। ततो नवमे प्रह्लादस्य सर्वथा भगवत्साम्मुख्यमुक्तमिति। यथा जीवः सर्वथा भगवत्सम्मुखो भवेत्तत्तु चतुर्थं पर्व। ततो दशमे स्वतन्त्रभक्तेरुक्त-त्वाद्भगवत्प्रसादस्य चोक्तत्वात्तत्सहितो यो भगवति कायवाङ्मनसां भावस्त-त्पञ्चमं पर्व सफलमित्यर्थः। एवं पर्वकथनमुखेनाध्यायार्था उक्ताः। एते पञ्चाप्यत्र व्यापाराः। देवरूपेण स्थितिः फलमिति बोध्यम्। देवरूपं च भगवत्परत्वं ज्ञेयम्।

ननु पञ्चमाध्याये त्रिपुरोपाख्यानस्य किं प्रयोजनमत आहुः-

दुर्वासनाया मूलं तु त्रिपुरं परिकीर्त्तितम् ॥३५॥
आधिदैविकरूपं तु तथाऽन्यत्र हरिस्तथा।
कृष्णप्रसादः सर्वत्र बलं पानेऽथ रक्षणे ॥३६॥
मर्यादा त्वत्र मार्गे हि यावता यो हि सिद्ध्यति।
तावत्तस्य हि कर्त्तव्यं तेन वा तास्तु बोधतः ॥३७॥
स्थूला दैत्येश्वरश्चैव देहनाशेन मोचितः।
प्रह्लादोऽप्याग्रही चैव ब्रह्मा वाऽप्युपदेशतः ॥३८॥

दुर्वासनेत्यादि। तुः पूर्वपक्षनिरासे। एतदुपाख्यानकथनेन त्रिपुरं गुणत्रयसमष्टि-मायारूपं दुर्वासनाया मूलं परिकीर्त्तितं सामर्थ्योपासककार्यादिसहितं कीर्त्तितम् ॥३२॥३३॥३४॥३५॥ कुतोऽस्य मूलत्वमित्यत आहुः-आधिदैविकरूपमिति। दुर्वासना हि मोहादुत्पद्यते, मोहश्च मायया, सा तस्या मूलमित्यर्थः। तर्हि सद्वासना कुत इत्यत आहुः-तथाऽन्यत्र हरिस्तथेति। यथाऽत्र मायामूलं तथा सद्वासनायां हरिर्मूलम्। अत एवैतद्बोधनाय भगवतस्तन्नाशकप्रयोजकत्वमुच्यते इत्याशयेनाहुः-कृष्णेत्यादि। पाने इति रसकूपामृतपाने। रक्षण इतिशम्भुरक्षणे। तथा च पुष्टेः सहकारित्वबोधनपूर्वकमेतत्सर्वबोधनार्थमिदमुपाख्यानमुक्तमित्यर्थः॥३६॥

नन्वत्र स्कन्धे द्विविधसर्गमूलभूता द्विविधा वासना निरूपणीया। तस्या मोचनाय पुष्टेः सहकारित्वं च निरूपणीयम्, तदेतत्पितापुत्रयोः कथया श्रीनृसिंहावतार-कथया च सिद्धं वैयर्थ्यं च परिहृतम्। अतो दुर्वासनामूलकथनस्य हरेस्तन्निवर्तकत्वकथनस्य च प्रकृतानुपयोगादसङ्गतिरित्यरुच्या पक्षान्तरमाहुः-मर्यादेत्यादि। तुः शङ्कानिरासे, अनुपयोगशङ्का न कर्तव्या। अत्र वासनामार्गे। हि यतो हेतोर्मर्यादा। मर्यादापुष्टिः सहकारिणी, अतो हेतोः हि निश्चयेन यो यावता सिद्ध्यति पूर्णकामो भवति तस्य तावद्धि तावदेव भगवता कर्त्तव्यं नाधिकम्। तेन वा हेतुना त्रिपुरोपाख्यानमुक्तमिति योजना। तत्प्रदर्शयन्ति-ता इत्यादि। ताः वासनाः स्थूलास्तु बोधतः प्रह्लादीयज्ञानबोधनान्मोचिताः, दैत्येश्वरश्च देहनाशेन लोभान्मोचितः। च पुनः प्रह्लादोऽप्याग्रही देहदुःखात्। ब्रह्माऽपि अविचारितकारी। 'मैवं वरोऽसुराणां ते' इत्युपदेशतोऽविचारित-

महादेवो मनोदुःखान्मुक्तः शैवोऽपि दोषभाक् ।
अतो मयस्तथा चक्रे तस्मादीशो विमोचितः ॥३९॥
पितापुत्रौ पुरस्कृत्य वासनाद्वयमीरितम् ।
सहजे वासने तेन पुष्टियुक्ता हरेः स्फुटा ॥४०॥
सद्वासना चेत्सहजा सत्सङ्गाद्वृद्धिमेष्यति ।
तेषामेवापमानेन द्वितीया वर्द्धते तथा ॥४१॥
उभयं सहजं तस्य तदर्थं प्रक्रियान्तरम् ।
पञ्चधा कर्मकरणान्मूलभूताऽपि नश्यति ॥४२॥

करणक्लेशान्मोचितः । महादेवो मनोदुःखात्त्रिपुरहननप्रयत्नवैफल्यकृताद्वैमनस्यान्मोचितः । शैवो भक्तो मयोऽपि दोषभाक् तत्र गमकम् । अतोऽस्माद्दोषादेव तथा तादृश्यः पुरथके सोऽपि मनोदुःखा त्स्वकृतवैफल्यजनितशोकरूपान्मोचितः । तदुक्तं 'स्वयं विशोकः शोकार्तानि'त्यनेन । किञ्च तस्मादीशो विमोचितस्त्रिपुरवधकृताहङ्कारादोषेण ईशत्वाभिमानाद्विशेषेण मोचितः । तथा चास्यां लीलायां मर्यादापुष्टिः सहकारिणीति बोधनार्थेयं कथा निरूपितेत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रकरणद्वयेन यत्सिद्धं तदाहुः–पितेत्यादि । तथा च पितापुत्रोपाख्यानेन वासनयोः सहजत्वं हरेः सम्बद्धादस्या लीलायाः स्फुटास्फुटपुष्टियुक्तत्वं सत्सङ्गात्सद्वासनाया वृद्धिस्तदपमानेनासद्वासनाया वृद्धिरित्येतत्सर्वबोधनमेतेन सिद्धमित्यर्थः ॥४०॥४२॥
एवं द्वादशभिर्द्वितीयप्रकरणं विचारितम् ।

अतः परमष्टत्रिंशद्भिस्तृतीयं प्रकरणं विचारयन्ति । ननु 'द्वौ भूतसर्गावि'ति वाक्यात्सर्गो द्विविध इति तन्मूलभूतवासनाऽपि द्विधैवेति तृतीयस्य प्रकरणस्य किं प्रयोजनमत आहुः–उभयमित्यादि । तथा च सङ्कीर्णसर्गमूलभूता तृतीयाऽपि वासना विशिष्टातिरेकान्यथेनास्तीत्यतस्तदर्थं तदित्यर्थः । अत्र च क्रोधद्यादीनां सङ्कीर्णानां व्यापारत्वं ज्ञेयम् । स्थितिप्रकारस्त्वग्रे स्वयमेव वक्तव्यः । नन्वेतदुभयोर्मध्ये एका हेया, द्वितीयोपादेयेति यस्योभयं सहजं तस्य द्विविधकर्मणा द्विविधफलभजनान्मुक्तिर्दुरापास्ता तत्सहकारिणी पुष्टिस्तु दुर्ज्ञेया स्वानधीना चेति किं तदर्थं प्रक्रियान्तरेणेति चेत्तत्राहुः–पञ्चधेत्यादि सार्द्धत्रयम् । मूलभूतेति

निषिद्धकर्मकरणात्तथा सद्वासना पुनः।
विरुद्धवासनापोषाल्लयो वा तद्विरोधतः ॥४३॥
भक्तिमार्गानुसारेण सती चेच्छ्रवणादिभिः।
वासना पोषिता काले फले भुक्ते पुनः पुरा ॥४४॥
प्रादुरासीदतो ह्येतौ जयश्चाऽन्यश्च तादृशौ।
इमं सूक्ष्मं तु यो वेद तस्योपायो निरूप्यते ॥४५॥
अतो नारदसम्प्रश्नः किं भूयः श्रोतुमिच्छसि।

दैत्यवासनेतिशेषः। तथेति नश्यतीत्यर्थः। पुनरित्यादि। दुर्वासनानिवृत्त्यर्थं पञ्चधा कर्म कुर्वतश्चेत्केनचिन्निमित्तेन विरुद्धवासना पुष्टा भवेत् तादृशदशायां यदि तस्य मरणं तदा तत्कर्मबलेन विरुद्धवासनासहितस्यैव तस्य ब्रह्मणि लयः स्वाप्ययवद्धा शब्दात्पातः। एतदन्यतरत्तस्य फलं भवति। यदि दुर्वासनां स्वस्मिन्न-घगत्य तद्विरोधतस्तद्विरोधं कृत्वा सती वासना चेद्भक्तिमार्गानुसारेण 'पोषिता तदा काले वैकुण्ठादौ तत्फले भुक्ते सति 'पुरा आसीद्यथा तथे'त्याध्याहारः पुनः प्रादुर्भवेत्। अतो हेतोर्जयोऽन्यो विजयश्च तादृशौ भगवद्धाम्नि गतापि पुनर्वासनावशादुत्पन्नौ, इमं सूक्ष्मं दुर्ज्ञेयमर्थं यो वेद अर्थाद् विभियात्तस्योपायोऽत्र प्रकरणे निरूप्यते। तथा च तादृशत्वेऽपि पुष्टेः सुज्ञेयत्वार्थं तस्य फलार्थं क्लेशाभावार्थं च तृतीयं प्रकरणमुच्यत इति नास्यानर्थक्यमित्यर्थः ॥४२॥४३॥४४॥४५॥

अयमेव व्यासचरणानां देवर्षेश्चाशय इत्यत्र गमकमाहुः-अतो नारदेति। यद्ययमाशयो न स्यात् तदा युधिष्ठिराकाङ्क्षायाः पूर्णत्वाद्देवर्षिर्भगवद्वीर्याण्येव स्तुवन् अपरं वदामि किमि'ति न पृच्छेत्। राजाकाङ्क्षायाः पूर्णत्वाच्छ्रीशुकोऽपि नोपक्षिपे-द्व्यासोऽप्यत्र नोपनिबध्नीयादत इदं त्रयाणामपि सम्मतमित्यर्थः। ननु प्रह्लाद-चरित्रं श्रुत्वा युधिष्ठिरो भक्तिं कुतो न पृष्टवान् धर्ममेव कुतः पृष्टवाँस्तत्रापि वर्णाश्रमाचारयुतम्। न च तस्य फलान्तरेप्सा 'यत्पुमान्विन्दते पर'मिति फलत्वेन परप्राप्त्यनुवादात्। तत्र च भक्तेरेव कारणतायाः प्रह्लादवाक्येष्वन्ततः सिद्धत्वात्। उत्तरे च नारदेन त्रिंशल्लक्षणधर्मकथने श्रवणादिनवकस्यैवोक्तत्वाच्चेत्यत

भक्तिमार्गस्तु फलदो न प्रायश्चित्तताऽस्य हि ॥४६॥
अतः शुद्धिं तावतीं तु करोति न ततोऽधिकाम् ।
कषायपक्तिः कर्माणि यथाऽग्निर्दाहको मतः ॥४७॥
भक्तिमार्गः केवलस्तु यस्य स्याद्वासना शुभा ।
न द्वितीया तस्य सिद्ध्येदुभयं चेत्तु कर्मणः ॥४८॥
कषायपाकशुद्धिर्हि पक्वं नश्यति तत्क्षणात् ।
भक्त्या ज्ञानेन वा तत्स्यादतोऽन्ते तच्च कीर्त्यते ॥४९॥
साधारणश्च यो धर्मो यश्च वर्णाश्रमात्मकः ।

आहुः-भक्तिमार्ग इत्यादि । तुः शङ्कानिरासे । द्वितीयस्तुरेवकारार्थकः । ततोऽधिकामिति दुर्वासनानिवर्तिकाम् । अतस्तां न पृष्टवानित्यर्थः । कषायपक्तिरिति । कषायः कार्यजीवगता दुर्वासना तस्य पक्तिः शैथिल्यं तज्जननस्वभावत्वात्तद्रूपाणि अतस्तन्निवर्त्तनाय धर्मान् पृष्टवानित्यर्थः ॥४६॥४७॥४८॥

तर्हि 'भक्त्या तुतोषे'ति । तुष्टे तु तत्र किमलभ्य'मिति प्रल्हादः कुत उक्तवानित्यत आहुः-भक्तिमार्गः केवल इत्यादिचरणत्रयम् । तथा च स केवलसद्वासनावानतः स्वानुभवमुक्तवानित्यर्थः । तर्हि नारदः कुत उक्तवानित्यतस्तत्तात्पर्यमाहुः-उभयमित्यादि । उभयं वासनाद्वयं चेत् तु पुनः कर्मणः सकाशात्कषायपाकरूपा शुद्धिः हि यतो हेतोः पक्वं दैत्यत्वं तत्क्षणान्नश्यति कालादेव नश्यतीत्यर्थं नारदो धर्ममुक्तवान् । वासनादार्ढ्ये केवलेन कालेन दैत्यत्वस्यानाशाद्भक्त्या ज्ञानेन वा तन्नाशनम् । अतो हेतो स्त्रिंशल्लक्षणधर्मकथने भक्तिं नवविधामुक्त्वा अन्ते उपदेशसमाप्तौ तच्च कीर्त्यते त्रिविधाद्वैतनिरूपणेन ज्ञानमपि कथ्यते । तथा च दुर्वासनानिवृत्तिः क्वचित्केवलेन धर्मेण क्वचित्तत्सहकृतभक्त्या तादृशेन ज्ञानेन वेति बोधनार्थं नारद उक्तवानित्यर्थः ॥४८॥४९॥ एवमष्टभिः प्रकरणार्थ उक्तः ।

(अ. ११) अतः परमध्यायार्थान्वदन्तः प्रथमस्यार्थं षड्भिराहुः-साधारण इत्यादि । साधारणो धर्मः सत्याद्यात्मसमर्पणान्तस्त्रिंशल्लक्षणवान् 'नृणामयं परो धर्मः सर्वेषां समुदाहृतः'। त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यती'त्यन्ते

उभयं क्रमशः कृत्वा दुष्टां वै वासनां दहेत् ॥५०॥
ब्रह्माण्डे तस्य सम्बन्धो यावानस्ति यतस्ततः ।
त्रिंशल्लक्षणधर्मेण तावत्यो वासना दहेत् ॥५१॥
विराट्छन्दस्तथा चाण्डं त्रिंशद्वर्णात्मकं यतः ।
प्रसादः सात्त्विको बुद्धेः सत्त्वलक्षणमीदृशम् ॥५२॥
अतः प्रसादो येनैव तत्कुर्यादुक्तसाधनैः ।
पुरुषार्थस्य सम्प्राप्तौ दुष्टा वै विनिवर्त्यते ॥५३॥
दुष्टोऽपीष्टफलं प्राप्य निवर्तेतापि निश्चितम् ।
अत आश्रमभेदेन धर्माश्चत्वार ईरिताः ॥५४॥
धर्मा एते भगवतस्ते चेद्धृदयगोचराः ।
धर्मिवासाय ते सर्वे दैत्यभावं दहन्ति हि ॥५५॥
ब्रह्मचारी वनस्थश्च धर्मद्वैविध्यबोधने ।

'सर्वेषामि'ति कथनात् । वर्णाश्रमात्मकस्तु प्रसिद्ध एव तत्तदधिकृत्योक्तः । चौ परिकरसाहित्यबोधकौ ॥५०॥ धर्मे त्रिंशल्लक्षणकत्वकथनस्य किं प्रयोजनमत आहुः—ब्रह्माण्ड इत्यादि । यतः सम्बन्धस्तं प्राप्य तावतीनामवान्तरवासनानां दाहार्थं तावल्लक्षण उक्त इत्यर्थः । सम्बन्धस्य तावद्विधत्वं कुत इत्याकाङ्क्षायामाहुः—विराडित्यादि । यतः विराट्छन्दस्त्रिंशद्वर्णात्मकं च पुनः विराड्वद-वाच्यत्वादण्डं तथा अतः सम्बन्धस्य तावद्विधत्वमित्यर्थः । अत्रोपक्रमे 'येन चात्मा प्रसीदती'ति उपसंहारे च 'सर्वात्मा येन तुष्यती'ति कथनाद्यत्सिद्ध्यति तदाहुः—प्रसाद इत्यादि सार्द्धम् । ईदृशमिति भगवत्तोषजनकम् ॥५१॥५२॥५३॥ *द्वितीयस्य प्रयोजनमाहुः—दुष्ट इत्यादि । निवर्त्तेतेति दुष्टभावान्निवर्त्तेत । आश्रय-भेदेनेति । आश्रया वर्णा आश्रमाश्च तद्भेदेन । धर्मिवासायेति भगवद्वासाय ॥५४॥५५॥ एवं षड्भिः प्रथमार्थ उक्तः ।

द्वितीयस्यार्थमाहुः—ब्रह्मचारीत्यादिद्वाभ्याम् । तत्र 'पादास्त्रयो

* साधरणात्त्रिंशल्लक्षणधर्माद् द्वितीयस्य वर्णाश्रमधर्मस्येत्यर्थः ।




एकाध्यायेनोभयेषां धर्ममध्यापनं ततः ॥५६॥
न्यासोऽन्तिमप्रकरणं द्वितीये विनिरूपितम्।
तदेव कार्यं धर्मस्य नार्थकामाविलीरयन् ॥५७॥
अर्थकामौ गृहस्थस्यवासनानाशकौ यथा।
तादृशौ तौ समाख्यातौ तदर्थं सर्वनिर्णयः ॥५८॥
वासना विषये दुष्टा धर्मेणैव निवर्त्तते।
धर्माधिकारस्तावद्धि ततो भक्तिस्तथा मतिः ॥५९॥
यदैव सर्वभूतेषु कृष्णे वा परमात्मनि।
दुष्टभावो न जायेत तदा स्याद्वासनाक्षयः ॥६०॥
तदा भक्त्यधिकारः स्यादन्ये न त्वधिकारिणः।
अभावे त्वधिकारस्य यदि कृष्णं भजेत्स्वतः ॥६१॥

यद्दिश्चासन्न प्रजानां य आश्रमाः, अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रत' इत्यत्र गृहस्थव्यतिरिक्तानामुद्गमनयोग्यत्वमिति ब्रह्मचारी वनस्थश्च ऊर्ध्वगमनसाधनीभूतो यो धर्मस्तद्बोधने कर्त्तव्ये उपयुज्येते। अत एकाध्यायेन उभयेषां ब्रह्मचारिणां वनस्थानां च धर्ममाह। तत्राऽपि ब्रह्मचारिधर्मे 'छन्दांस्यधीयीते'-त्युक्त्वाग्रे गृहस्थसाधारणधर्माणां कथनेनाध्यापनं माह। ततः समाप्तौ 'संन्यस्याहंममात्मता'मिति कथनादन्तिमं प्रकरणं तृतीयाध्यायोक्तो न्यासस्तेन यद्द्वितीयेऽध्याये *विनिरूपितम्* अ. १२ '*एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही*। चरन् विदितविज्ञानः परं ब्रह्माधिगच्छती'ति। तदेव धर्मस्य कार्यं 'नार्थकामाविलीरयन् माहे'ति योजना ॥५६॥५७॥ एवं त्रिभिर्द्वितीयतृतीययोरर्थ उक्तः।

अग्रिमयोरर्थमाहुः-अर्थकामावित्यादि। यथेति विवक्षिताविति शेषः। समाख्याताविति विचारपूर्वकं निर्णीतौ। तदर्थं.तादृशार्थकामनिर्णयार्थं सर्वेषां धर्माणां तदङ्गानां कालादीनां च निर्णय उक्त इत्यर्थः। तेन वासनाक्षयादिप्रकारमाहुः-वासनेत्यादि। तावदिति यावद्वासनाया अक्षयः। तत इति वासनाक्षयोत्तरम् ॥५८॥५९॥ वासनाक्षये गमकमाहुः-यदैवेत्यादि। तस्योपयोगमाहुः- तदा भक्त्यधिकारः स्यादिति। अन्य इत्यक्षीणवासनाः। वासनानिवर्त्तनस्यावश्यकत्वाय,

सद्वासनातः सङ्गाद्वा धर्मत्यागस्तदा यदि ।
तदा द्वेषो भवेत्कृष्णे दुर्बुद्धिर्वा विशेषतः ॥६२॥
तदाऽपराधो भविता भक्तिर्दुष्टा च जायते ।
तदोपेक्षा भगवतः कालादीनामुपद्रवे ॥६३॥
दुर्वासनाऽतो ह्यत्यन्तं भक्तोप्यत्र विशेषतः ।
भीष्माक्रूरार्जुनादिर्वै दुःखमाप्नोति यद्वशात् ॥६४॥
युधिष्ठिरे कृष्णभक्ते नारदः प्राह कर्म तत् ।
विधर्मादिपरित्यागाद्यथोक्तकरणेन हि ॥६५॥
दुर्वासनाया नाशः स्यान्नान्यथा तु कथञ्चन ।
जीवस्य ब्रह्मभावे तु नाश्यते जीववासना ॥६६॥
गुरूपदेशाद्विवलाज्ज्ञानेनैव तथा भवेत् ।
पक्वा एवं हि नाश्यन्ते ज्ञानेन भजनेन वा ॥६७॥
अन्तःकरणपाकस्तु तत्र हेतुः स्वकर्मभिः ।

अनधिकारेण भजने यद्भवति तदाहुः—अभावे त्वित्यादिसार्द्धाभ्याम् । स्वत इत्यस्यैव विवरणं सद्वासनात इति । सङ्गादिति भगवद्भक्तसङ्गात् । तथा भजने यथधर्मकरणाभावस्तदा सा भक्तिः प्रायश्चित्तरूपतां भजन्ती दुर्वासनां क्षपयतीति पूर्वस्कन्धीयनामप्रकरणात्सिद्धम्, यदि तदा वासनया भजने क्रियमाणे यदि धर्मत्यागो भवति तदा 'तदा द्वेष' इति सार्द्धेनोक्तं फलं भवति । तस्मात्तन्नाशायाधर्माभावाय चोक्तरीत्या सद्धर्मः कर्तव्य इत्यर्थः ॥६०॥६१॥६२॥६३

दुर्वासनायाः सत्त्वेऽपि भजने मर्यादापुष्टौ यद्भवति तन्निदर्शनपूर्वकमाहुः—दुर्वासनात इत्येकेन । अत्रेति । मर्यादापुष्टियुक्तायामृतिलीलायां निदर्शनान्तरमाहुः—युधिष्ठिर इत्यादि, तस्मादिति शेषः । एवं चतुर्थस्य सम्पूर्णस्य पञ्चमीयैकादशश्लोकानां च तात्पर्यमुक्तम् । (अ. १५. श्लो. १२) 'विधर्मः परधर्मश्चेत्यादेस्तात्पर्यमाहुः—विधर्मादीत्यादि । 'धर्मार्थमपि नेहेते'त्यादीनां तात्पर्यमाहुः—जीवस्येत्यादि । जीववासनेति । विभागसामयिकी वासना । तथा भवेदिति ब्रह्मभावो भवेत् । अन्यासां चतसृणां नाशनप्रकारमाहुः—पक्वा इत्यादि । तत्र हेतुरिति कार्यजीवगत-

पक्वं योगेन भक्त्या वा ज्ञानेनापि स नाश्यते ॥६८॥
तपसैव तु पच्यन्ते प्राणानां वासना दृढाः ।
योगेनैवेन्द्रियगताः कर्मणैव शरीरगाः ॥६९॥
तस्मात्पञ्चविधं कर्म यथोक्तं सर्ववर्णिभिः ।
योगेन तपसा भक्त्या ज्ञानेनाऽपि क्रमात्तथा ॥७०॥
शुद्धाधिकारफलता भक्तेर्नान्यत्र कुत्रचित् ।
सद्धर्मैश्चेत्सुसंसिद्धस्ततः प्रोक्तस्तथा क्रमः ॥७१॥
स्वाध्यायश्च तपश्चैव ममतानाश एव च ।
देहकालादिसम्पत्तौ कर्म चाऽप्युत्तमोत्तमम् ॥७२॥
देहादिवासनानाशे चतुष्टयमुदाहृतम् ।
अन्तःकरणधर्माणां संक्षयश्च यदा भवेत् ॥७३॥
तदैव वासना क्षीणा अतः साधनवर्णनम् ।
सर्वस्य मूलं विप्रा हि गुरवस्ते प्रकीर्त्तिताः ॥७४॥
तत्कृपातो भवेत्सर्वमेकमेतद्धि साधनम् ।
तत्सेवा सर्वकर्माणि तथा नश्यन्ति वासनाः ॥७५॥

वासनापाके हेतुः । स्वकर्मभिरिति नित्यैर्वर्णाश्रमधर्मैः । पक्वमिति ॥६४॥६५॥६६॥६७॥६८॥ अन्तःकरणदुर्वासनाख्यं पापम् । सर्ववर्णिभिरिति कार्यमिति शेषः । यथोक्तसर्वसिद्धौ फलमाहुः-योगेनेत्यादि । अपिर्वैराग्यसमुच्चायकः । अनेन क्रमेण सिद्धिः कदेत्यपेक्षायामाहुः-सद्धर्मैरित्यादित्रयम् । एतेन विधया॰ पञ्चपर्वाणि यानि शास्त्रार्थप्रकरण उक्तानि तेषामेतन्मूलमिति ज्ञापितम् ॥६९॥७०॥७१॥७२॥७३॥

क्रमसाधनसिद्धौ हेतुमाहुः-सर्वस्येत्यादि । सर्वकर्माणीति । तथा सिद्ध्यन्तीतिशेषः । प्रसाद इति ब्रह्मवादिनां प्रसादः । 'इयं नृलोक' इत्यादीनां

इति दर्शयितुं शापः प्रसादश्च प्रकीर्तितः ।
ते वश्याः कृष्णभक्त्यैव युधिष्ठिरगृहे यतः ॥७६॥
समायान्ति ततः कृष्णसेवा चेत्सर्वदा भवेत् ।
क्रमेण वासनाः सर्वा नाशं यान्ति न संशयः ॥७७॥
अतो ब्राह्मणवाक्येन सेवां कुर्यादहर्निशम् ।
कर्माशक्तौ ब्राह्मणास्तु चक्रुस्ताः कर्मभिः सह ॥७८॥
स्कन्धे निर्धारितो ह्यर्थः स्पष्टोऽत्र विनिरूप्यते ।
वासना द्विविधा यस्य स कुर्याद् गुरुसेवनम् ॥७९॥
सर्वभावेन तद्वाक्याद्भगवद्भजनं ततः
उभयोर्यदि दुष्टा स्याद्वासनाऽत्र कथञ्चन ॥८०॥
तदा कर्माणि कुर्वीत यथोक्तानि स्वधर्मतः ।
साधारणेषु धर्मेषु यदि निष्ठा भवेत्क्वचित् ॥८१॥
वासना चेत्तदा नष्टा भक्तिमेव तदाऽभ्यसेत् ।
×अन्यथा ब्रह्मचर्यादि जन्म प्राप्य समाचरेत् ॥८२॥

तात्पर्यं वदन्तस्तेषां प्रसादे हेतुमाहुः-ते इत्यादिद्वयम् । पूर्वं वर्णाश्रमधर्मकथनपूर्वकं भगवत्पूजनमुक्त्वा समाप्तौ 'मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पति'रिति । यत्केवलमेव पूजनमुक्तं तत्तात्पर्यमाहुः-कर्माशक्तावित्यादि । ता इति केवला भगवत्सेवाः । चक्रुरित्यस्यावृत्त्या योजना । अपेरध्याहारश्च । तथा च द्वेधाकरणाद् द्विधोक्तिरित्यर्थः । (कर्माशक्तौ ब्राह्मणाः केवला भगवत्सेवा एव चक्रुः । कर्मशक्तौ तु कर्मभिः सहापि भगवत्सेवाः चक्रुरित्यर्थः ) ७४ ॥ ७५ ॥ ७६ ॥ ७७॥ ७८ ॥

एवमष्टत्रिंशद्भिः सर्वं प्रकरणाध्यायार्थं निरूप्य सार्धाष्टभिः सर्वं स्कन्धार्थं सङ्गृह्याहुः- स्कन्धे निर्धारित इत्यादि । उभयोरिति गुरुशिष्ययोः । साधारणेष्विति त्रिंशल्लक्षणेषु । अन्यथेति त्रिंशल्लक्षणेषु निष्ठाभावे ॥७९॥८०॥८१॥८२॥

× ७९-८२ कारिकयो. स्कन्धान्ते ३८४ तमे पृष्ठे निबन्धकठिनांशविवेचनमनुसन्धेयम् ।

जातिस्मरत्वं संस्कारप्रबोधो वा भवेद् ध्रुवम् ।
तदा क्रमेण ते धर्माश्चतुर्धा व्यस्य बुद्धितः ॥८३॥
एकैकानन्तरं कुर्याद्भक्तिं वै वासनाक्षये ।
तदा क्रमेण भगवाँस्तदायत्तो भवेद् ध्रुवम् ॥८४॥
अनष्टायां च दुष्टायां तदा मुक्तो भवेद् ध्रुवम् ।
विलम्बश्चेद्धरीच्छातस्तदा सद्धर्ममाचरेत् ॥८५॥
अवश्यं तु तदा भाव्या भक्तिर्या नवमे मता ।
महद्व्यतिक्रमे मध्ये दुष्टा वृद्धिं प्रयाति हि ॥८६॥
तत्प्रसादाददुष्टा हि कृष्णादुभयथा गतिः ।
इयं लीला भगवतः सततं मोचयेद्धरिः ॥८७॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपे सप्तमस्कन्धविवरणं
नवमं प्रकरणं समाप्तम् ॥

तदा तस्य जन्मान्तरं भवतीत्याहुः—जातिस्मरत्वमित्यादि । तादृशजन्मान्तरे कर्त्तव्यमाहुः-फलं चाहुः—तदा क्रमेणेति सार्द्धैश्चतुर्भिः । एवं च यत्सेवाप्रकरणे बोधितं तत्रैतदेव मूलमितिबोधितम् ॥

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य
दर्शिता सप्तमस्कन्धनिबन्ध-
योजना सम्पूर्णा ॥

समाप्तः सप्तमः
स्कन्धः

## निबन्धकठिनांशविवेचनम्। का-७९-८२

का.७९ तत्त्वदीपे सप्तमस्कन्धसमाप्तौ फलितार्थकथने स्कन्धे निर्द्धारितो ह्यर्थ इत्यादि यावत्समाप्ति। ननु सप्तमस्कन्धे वासनानां तद्धेतुकर्मणां च निरूपणाद् भक्तिसंहितारूपे श्रीभागवतेऽस्य स्कन्धस्य कथं प्रवेशः, भक्तिनिरूपणाभावादितिशङ्कायामाहुः स्कन्धे निर्द्धारितो ह्यर्थ इत्यादि, अत्रापि वाच्यार्थस्तु भक्तिरूप एव, 'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेद्' इति 'आरम्भे मैनेन भक्त्योपशमेन पूजित' इति अन्ते च निरूपणात् मध्येपि कथाप्रसङ्गैर्भक्तेरेव निरूपणाद् वाच्यार्थत्वं भक्तेरेव। वासनानिरूपणं तु पुष्टिदोषनिवृत्त्यर्थं, दुर्वासनावतां द्वेषिणां निन्दकानामपि गतिदो भगवान् भक्तानां कथं न गतिदो भवेदिति कैमुत्येन भक्तिमाहात्म्यार्थं चेति तात्पर्येण। अथ वासनानिरूपणेपि भक्त्यर्थत्वं यथा तदत्र स्कन्धफलितार्थत्वेनोच्यते-स्कन्धे भक्तिरूपो निर्द्धारितो ह्यर्थः स्पष्टो निरूप्यत इति, तमर्थमाहुः वासनाद्विविधेत्यादि, सनकादयो हि ज्ञानार्थमुत्पादिता लोकातीता मुक्ताः सामान्यतः सर्वेषां गुरवस्तत्सेवनमसद्वासनायुक्ताभ्यां पार्षदाभ्यां न कृतम्, अतिक्रमश्च कृतोऽतो वैकुण्ठादपि पातः असद्वासनावशात्। प्राप्तशापेन नारदेन दासीपुत्रत्वदशायां गुरुसेवनं कृतं सर्वभावेन, तद्वाक्याद् भगवद्भजनं चातो नारदत्वं भगवत्पार्षदत्वं च जातम्। प्रह्लादेन च सद्वासनावता गुरोर्नारदस्य सेवनं कृतं गर्भस्थेनापि मातृकृतपरिचर्याद्वारा ततो भगवद्भजनं च। अतो भगवत्साक्षात्कारं प्राप्तवानन्तर्बहिश्च, अन्यैरपि दैत्यपुत्रैः प्रह्लादस्यैव गुरोः सेवनेन तदुपदेशेन भगवद्भजनेन च असद्वासनानिवृत्तिपूर्वकं भगवत्प्रसादो लब्धस्तज्ज्ञापकं नृसिंहस्तुतौ 'नैतान् विहाय कृपणान् विमुमुक्ष एक' इति प्रह्लादवचनमेतत्पूर्वप्रकरणद्वयेन निर्द्धारितम्, यदि तु असद्वासनारहितः सद्वासनावान् गुरुर्न लभ्यते तदा तु स्वे वर्णाश्रमे स्थित्वा यथोक्तानि श्रौतानि स्मार्तानि कर्माणि कर्तव्यानि, तज्ज्ञापनायोक्तं 'धर्ममूलं हि भगवान् सर्ववेदमयो हरिः। स्मृतं च तद्विदामिति। अग्रे 'येन चात्मा प्रसीदती'तिकथनाद् असद्वासनानाशज्ञापिका अन्तःकरणशुद्धिः सर्वैरेव श्रुतिस्मृतिप्रोक्तैर्धर्मैर्भवति, तत्र कस्यचित् साधारणधर्मैरेव दुष्टवासनानाशः, स तु भक्तिमेव नवधां प्रोक्तां सदाऽभ्यसेत्, येन अग्रे भगवत्प्रसादः स्यात्, तदुक्तं 'नृणामयं परो धर्मः सर्वेषां समुदाहृतः,त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यती'ति।

एवमेकादशाध्यायस्थानां द्वादशश्लोकानां भक्त्युपयोगी निर्द्धारितोऽर्थ उक्तः,

का.८२ अग्रिमाणां वक्तुमाहुः अन्यथेत्यादि, यदि साधारणधर्मैर्दुष्टवासनानाशोन्तःकरणशुद्धिज्ञापितो न भवेद् तदा भक्त्यधिकाराभावात् वर्णधर्मान् स्त्रीधर्मान् सङ्करजातिधर्मांश्च तत्तज्जन्म प्राप्य सम्यगाचरेत्, तदा जन्मान्तरे जातिस्मरत्वं पूर्वजन्मकृतधर्मेण उत्तरजन्मीनधर्मार्थे

संस्कारप्रबोधो वा ध्रुवं भवेत्, पूर्वजन्म निकृष्टं चेदग्रिमं जन्मोत्कृष्टं च भवेत्, तज्ज्ञापनार्थं अविच्छिन्नसंस्कारतदभावाभ्यां द्विजाऽद्विजौ उक्तौ, ततो वर्णानां वृत्तीःउक्त्वा चतुर्णां वर्णानां धर्मा उक्ताः, न हि वृत्तिरहितो धर्मं कर्तुं शक्नोतीत्यभिप्रायेण । तत्र वर्णेषु निकृष्टः शूद्रः, ततो निकृष्टा स्त्री, अतः सर्ववर्णधर्मान्ते स्त्रीधर्मनिरूपणम्, ततोऽपि निकृष्टाः सङ्करजातयस्तेषु च स्त्रीपुरुषधर्मभेदो नास्तीतिज्ञापनाय स्त्रीधर्मान्ते निरूपणम्, तेनेदं सिद्धम्, यस्य जीवस्य पूर्वं सङ्करजातिषु जन्म स तज्जातिप्रोक्तं यथोक्तं धर्मं कृत्वा प्रबुद्धसंस्कारो जन्मान्तरे शूद्रादिक्रमेणान्ते विप्रो भवति, एवं तत्तज्जातीया स्त्री अपि अन्ते ब्राह्मणी भवति,। अथ शूद्रादिक्रमे आश्रमा अपि यथोक्तं एकद्वित्रि-चतुःक्रमेण वर्धन्ते, अतो विप्रत्वे चत्वारोप्याश्रमा एकैकानन्तरं क्रमेण बुद्ध्या आयुर्भागाष् चतुर्धा विभज्य कर्तव्याः, ततश्च कस्यचिद् दुष्टवासनानाशः भगवद्भक्तिश्चेत्युभयं भवति, कस्यचिद् धर्मबलेन भक्तिरेव न दुष्टवासनानाशः, परं भक्तौ जातायां भगवांस्तस्य जीवस्य कार्यसाधनार्थं ध्रुवं उद्युक्तो भवति, तदा दुष्टवासनानाशाभावेपि स जीवो ध्रुवं मुक्तो भवेत्, परं तद्वासनाभोगार्थं पुनर्जन्म जयविजयवत् स्यादिति ज्ञेयम्, यदा तु विप्रजन्म प्राप्य चतुर्षु आश्रमधर्मेषु कृतेष्वपि हरीच्छया दुष्टवासनानाशो भक्त्युद्भवे च विलम्बस्तदा अष्टमस्कन्धो-क्तान् सद्धर्मानाचरेत्, तदा तु सर्वथा दुष्टवासनानाशो नवमस्कन्धोक्ता भक्तिश्चावश्यंभाव्या, तदा निरोधो मुक्तिश्चेत्युभयमपि अवश्यं भवेदितिस्कन्धक्रमेण ज्ञाप्यते। एवं हीना स्त्र्यपि पातिव्रत्यधर्मेण तत्तज्जातिवर्णधर्मेण चान्ते ब्राह्मणी भूत्वा 'या पतिं हरिभावेने'तिवाक्योक्तं फलं प्राप्नोति, कदाचिद् धर्मबलात् पुरुषजन्मापि प्राप्य पुरुषजन्मोक्तं च फलं प्राप्नोतीति । अथ वासनाक्षयार्थं धर्मानाचरतः पुरुषस्य मध्ये यदि महतां व्यतिक्रमस्तदा दुष्टवासना-वृद्धिः, सनकाद्यतिक्रमे जयविजयवत्। नारदस्य गन्धर्वजन्मवच् च। तत्प्रसादे तु शुभावासना वर्द्धते, नारदप्रसादेन प्रह्लादवत्, नारदस्य दासीपुत्रजन्मवच्च, उभयथापि कृष्णादेव गतिः यतो भगवान् नृहरिरवतीर्य दुष्टान् मारणेन शिष्टान् पालनेन च तारितवान्, तथा च इयं सप्तमस्कन्धोक्ता कृतिलीला सर्वान् मोचयति, अतो विषमभावज्ञापिका पुष्टिलीलाप्यदुष्टैवेतिभावः, अत्र सर्वत्र कारणं भगवतो हरित्वमेवेति सप्तमस्कन्धार्थ-निबन्धीयप्रान्तस्थश्लोकनवकार्थो यथामतिवर्णितः । इति कठिनांशविवेचनम् ।

**सप्तमस्कन्धः समाप्तः**

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# अष्टमस्कन्धविवरणम् ।

---

एवं पञ्चदशाध्यायैर्वासना कर्म चोदितम् ।
सद्धर्मस्तु ततः प्रोक्तश्चतुर्विंशतिभिः शुभैः ॥ १ ॥
मन्वन्तराणि सद्धर्मः सतां धर्माः प्रकीर्त्तिताः ।

श्रीबालकृष्णाय नमः ।

## अथ अष्टमस्कन्धनिबन्धस्य योजना ।

अथाष्टमस्कन्धार्थं निबध्नन्तः सप्तमाष्टमयोः सामान्यविशेषभावरूपां सङ्गतिं बोधयितुं सप्तमार्थमनुवदन्तः प्रस्तुतस्यार्थमाहुः–एवमित्यादि । उक्तप्रकारेण त्रिभिः प्रकरणैर्द्विधावासना तज्जनकं कर्म च उदितं सप्तमे उक्तं च । ततस्तदुत्तरमष्टमे शुभैर्भगवल्लीलाप्रतिपादकैश्चतुर्विंशतिरध्यायैः सद्धर्मः प्रोक्तस्तेन कर्मसद्धर्मयोः कर्मरूपत्वात्सामान्यविशेषभावः, सद्धर्मस्य वासनाजनकत्वाच्च कार्यकारणभावोऽपि सङ्गतिरित्यर्थः ॥ १ ॥ महापुराणान्तरोक्तेभ्यो मन्वन्तरेभ्यो विशेषं बोधयितुं लक्षणमाहुः–मन्वन्तराणि सद्धर्म इति । 'मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः । ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते' (अ. ७) इति द्वादशस्कन्धोक्तसामान्यलक्षणम् । अत्र तु तत्कथनपूर्वकं सद्धर्म उच्यत इति सद्धर्मवैशिष्ट्यमत्र विशेष इत्यर्थः । मन्वन्तराणामनेकत्वेन तेषामेकलक्षणत्वघटकं सद्धर्मत्वमित्यत एकवचनम् । ननु सद्धर्मस्य सन्निष्ठत्वात्कथं भगवल्लक्षणत्वमित्याकाङ्क्षायामाहुः–सतां प्रकीर्त्तिता इति । भगवतेति शेषः ।* तथा च ते धर्मा भगवदुक्तत्वाद्भगवल्लक्षणभूता इत्यर्थः ।

* पूर्वस्कन्धोक्ताः सदाचाररूपाः सामान्यधर्माः अनुगृहीतानाम्, इमे तु सतां प्रकर्षेण कीर्त्तिता इति विशेषधर्मा भगवतो वीर्यापरनामानः, अतो भगवल्लीलात्वम् । किन्तु पूर्वरूपे देहेन्द्रियादिनिष्ठाः । इमे तु कारणरूपतत्त्वात्मकप्रकृतिगणनिष्ठाः । भक्तिस्तु जीवात्मकपुरुषनिष्ठाऽतः कार्यकारणजीवानामुत्तरोत्तरोत्कृष्टभगवदंशत्वात्तद्धर्माणामप्युत्तरोत्तरोत्कृष्टभगवल्लीलात्वमित्यर्थः ।

प्राकृतास्ते समाख्याताः पौरुषो भक्तिरेव हि ॥२॥
चतुर्विंशतिधा भिन्नाः प्राकृतीं वासनां तु ते ।
सर्वथा नाशयन्त्येव जीवगा भक्तिरुत्तमा ॥३॥
द्विधा ह्यत्र पदार्थाः स्युर्मीमांसायां यथा मताः ।
पुष्ट्यन्ताः प्रथमाः प्रोक्ता आश्रयान्तास्तथाऽपरे ॥४॥
तेनोत्तरस्य षट्कस्य वासना प्रथमा मता ।
प्राकृत्येव हि सा दुष्टा सद्धर्मैरेव नाश्यते ॥५॥
लक्षणे विपरीते हि ततः प्रोक्ते तयोः क्रमात् ।

तेषामुत्पत्तिस्थानमाहुः-प्राकृतास्ते समाख्याता इति । देहेन्द्रियान्तःकरणेषु त उत्पद्यन्त इत्यर्थः । तर्ह्यात्मनि कुतो नोत्पद्यन्त इत्याकाङ्क्षायामाहुः-पौरुषो भक्तिरेव हीति । पुरुषो जीवात्मा तत्रोत्पत्तियोग्यः पौरुषस्तादृशो धर्मो भक्तिरेव हीति निश्चये ॥ २ ॥ तेषां प्रयोजनमाहुः-चतुर्विंशतीत्यादि । 'प्राकृतो गणश्चतुर्विंशतिक' इति तत्रोत्पन्नास्ते तत्रत्यां सर्वप्रकारेण नाशयन्त्येव । जीवगां तु उत्तमा नवमे वक्ष्यमाणा भक्तिरेव नाशयतीत्यर्थः ॥ ३ ॥ धर्माणामाश्रमभेदेन चतुर्विंशतिविधत्वमुक्त्वा फलभेदेन तदुपोद्बलयन्ति- द्विधा हीत्यादि । उपदेशातिदेशाभ्यां द्वादशलक्षण्यां मीमांसायां यथामताः विचारिताः पदार्थाः सद्धर्मा अत्र हि स्कन्धे फलभेदेन द्विधा स्युः । फलभेदं स्पष्टीकुर्वन्ति-पुष्ट्यन्ता इत्यादि । तथा चैवं द्वादशानां द्विविधत्वे चतुर्विंशतित्वमित्यर्थः ॥ ४ ॥ अयं फलविभागो मीमांसायां न प्रकट इति तं प्रकटयन्ति-तेनेत्यादि । उत्तरे षट्केऽतिदेशेन विकृतिरूपा विचारितास्ते च काम्यत्वादृष्टकृताः स्वार्था इति तद्वासना प्रथमा पुष्ट्यन्ता मतेत्यर्थः । तेनाद्यषट्कीयवासनाया आश्रयान्तत्वमर्थादेव बोधितम् , ननु मीमांसाविचारिता एव चेद्धर्मा अत्र गृह्यन्ते तदा को विशेषः सद्धर्मेष्वित्यत आहुः-प्राकृतीत्यादि । तथा च मीमांसाविचारितरीत्या नित्यकर्ममात्रकरणेऽपि तस्यात्मसुख एव पर्यवसानान्न प्राकृतवासनाक्षयोऽपि तु वासनान्तरानुत्पाद एवातः सद्धर्मा आवश्यका इत्यर्थः ॥५॥ अत्र गमकमाहुः लक्षणे विपरीत इति सपादाभ्याम् ।

मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः ॥६॥
कर्मजाः प्राकृता एव पूर्वं नाशकथा ततः।
नष्टाश्चेत्प्राकृताः सर्वास्ततो भक्तिः प्रवर्त्तते ॥७॥
सद्धर्मास्तु ततो ज्ञेयास्त्रिविधास्ते प्रकीर्त्तिताः।
तामसाः सात्त्विकाश्चैव राजसाश्च विभागशः ॥८॥
चतुर्द्धा दशधा चैव नवधा च प्रकीर्त्तिताः।
त्रिविधस्यापि धर्मस्य मत्स्यो वक्ता निरूपितः ॥९॥
मन्वादिभिस्तु ये धर्माः स्वकाले वै प्रकीर्त्तिताः।
तांश्चेत्सर्वात्मना यस्तु समातिष्ठति भागशः ॥१०॥
स एव वासनाः सर्वा दहतीत्यत्र रूप्यते।
तपसोपनिषत्पाठः प्रथमे परिकीर्त्तितः ॥११॥

तथा च पूर्वमुद्देश ऊतिं पूर्वमुक्त्वा यत्सद्धर्मास्पश्चात्तां लक्षितवान् तेन ज्ञायते सद्धर्मनाश्यत्वं तासां बोधयितुमेव तथोक्तानिति। न च कार्यकारणमात्रबोधनाय तथोक्तावानितिशङ्क्यम्। यतो वासनास्कन्धे पूर्वं नाशकथा ततः प्राकृतसर्वनाशबोधनोत्तरं सद्वासनां कर्माणि चोक्त्वाऽग्रे सद्धर्मा उक्तास्ततोऽग्रिमे भक्तिप्रवृत्तिरुच्यत इति स्कन्धकथाक्रमेणोक्तनिश्चयादितिसद्धर्माः सर्वथा ज्ञेया एवेत्यर्थः। एवं चात्र वक्तृत्वेनाश्रयो लक्ष्यस्तदुक्ताः सद्धर्मास्तल्लक्षणम्। तेषां दुर्वासनादाहः फलं जीवकृतिर्व्यापारस्तेन तेषां दग्धवासनतया स्थितिः सिद्ध्यतीति स्कन्धार्थौ विचारितः ॥६॥७॥

अतः परं प्रकरणार्थं विचारयन्तस्तद्भेदकं वदन्ति त्रिविधा इति पाद्योनाभ्याम्। तथा च स्वरूपस्य वक्तुश्च विचारेण चत्वारि प्रकरणानीत्यर्थः ॥८॥९॥ ननु सद्धर्मेषु मन्वन्तरशब्दप्रवृत्तिः कथमित्यपेक्षयामाहुः–मन्वादिभिरिति। 'मन्वन्तरं मनु'रिति द्वादशस्कन्धवाक्यान्मन्वन्तरशब्दो मन्वादिषट्कवति काले रूढो मन्वादिप्रवर्त्तिते धर्मे योगरूढ्या प्रवर्त्तते। तत्र तद्धितस्य लुक्, तस्य फलमाहुः–तांश्चेदित्यादि। तस्मिंस्तस्मिन्मन्वन्तरे तस्य तस्य धर्मस्यावश्यकत्वाय तद्भेदानाहुः–तपस इत्याद्यष्टभिः। तत्र स्वायम्भुवेऽन्तरे तपसोपनिषत्पाठो मनुना कृतः स्पष्टः। स्वारोचिषे भगवद-

द्वितीये ब्रह्मचर्यञ्च सत्यवादस्तृतीयके ।
वेदाभ्यासो धारणं च चतुर्थे परिकीर्त्तितम् ॥१२॥
व्रतादिना भगवतः सेवा पञ्चम ईरिता ।
सतां सुराणां महतां षष्ठे सेवा प्रकीर्त्तिता ॥१३॥

वतारेण विभुना कृतं ब्रह्मचर्यं स्पष्टम् । उत्तमेऽन्तरे सत्यसेनाख्यभगवदवतारकृते-नानृतव्रतदुःशीलमारणेन सत्यवादप्रवर्तनं बोद्धव्यम् । तामसेऽन्तरे वैधृतिनामकदेवैः प्रवर्त्तितो वेदाभ्यासः स्फुटः । पञ्चमो रैवतस्तत्र रमाप्रार्थनेन वैकुण्ठकल्पनकथनात् । श्रीव्रतानां पञ्चमतृतीयस्कन्धयोः लक्षतुलसीदलार्पणव्रतादिना भगवतः सेवा वैकुण्ठाख्यभगवदवतारप्रवर्त्तितैव बोध्या । षष्ठे चाक्षुषेन्तरे अमृतमन्थनादिकथनात्सतां सुराणां महतां सेवा अजिताख्यभगवदवतारप्रवर्त्तितैव बोध्या । सप्तमे

का० ४-७-निबन्धकठिनांशविवेचनम् ।

अष्टमस्कन्धार्थोक्तौ द्विधेत्यादि । भक्तिः प्रवर्त्तत इत्यन्तम्, ननु 'अत्र सर्गो विसर्गश्चे'तिलीलामुद्देशे मन्वन्तरस्य ऊत्यनन्तरमुद्दिष्टत्वेपि लक्षणकथने मन्वन्तरस्य ऊतेः पूर्वं 'मन्वन्तराणि सद्धर्म ऊतयः कर्मवासना' इति लक्षितत्वाल् लक्षणस्य उद्देशादुत्कृष्टत्वाल् लक्षणक्रमेणैव कुतो न स्कन्धयोः कथनम् । अथ उद्देशक्रमेणैव कथने लक्षणे वैपरीत्यं किमर्थमित्याशङ्कायां उद्देशलक्षणस्कन्धकथनानां त्रयाणां तात्पर्यमाहुः- द्विधेत्यादि भक्तिः प्रवर्त्तत इत्यन्तेन । अत्र श्रीभागवते मीमांसावद् द्विधा पदार्थाः, मीमांसाया वेदनिर्णय-रूपत्वादुपदेशातिदेशभेदेन द्विधा निर्णयः, एवं श्रीभागवतस्य वेदफलरूपत्वादनुग्रहाश्रयभेदेन द्विधा फलं निरूप्यते, तत्र तत्तत्फलोपयोगिनो ये अधिकारवासनादयस्तेपि पूर्वोत्तरषट्कयो-र्निरूप्यन्ते, यादृशोऽधिकारस्तादृशोऽनुग्रहः, यादृशी वासना तादृशो भगवत्प्रवेश आश्रयरूप इति ज्ञापनार्थमुत्तरे षट्के वासना प्रथमं सद्धर्मात् पूर्वं निरूपिता, वासनाया भगवत्प्रवेशे सामान्यकारणत्वात् , सद्धर्माणां विशेषकारणत्वादिति, अथ भगवत्प्रवेशे दुष्टनिवृत्तिः प्रथम-मपेक्षिता, तत्र प्राकृती वासना दुष्टा देवदैत्यहितेच्छया जाता, देहादिवासना तथा न दुष्टा मुक्तिहेतुत्वात्, यथा क्षुधाहेतुकं देहादिरक्षार्थं भोजनमत्यन्तं न दुष्टम्, यथा स्वादुहेतुकं दुष्टम् , तथा प्रकृतिगणसम्बन्धिनी केवलभोगार्थं वासना दुष्टा, तस्याश्च नाशकाः सद्धर्मा एवेतिज्ञापनाय लक्षणे सद्धर्माः प्रथमं लक्षिताः, तेन सद्धर्मैः प्राकृतवासनायाः कर्मजाया नाशः लक्षणे पूर्वं निरूपित इति । अथ सद्धर्मैः प्राकृतवासनानाशे भक्तिर-वश्यंभाविनी इति भक्तेरव्यवहितकारणत्वज्ञापनाय भक्तिस्कन्धात् पूर्वं सद्धर्मस्कन्धोऽत्र श्रीभागवते व्यासेन शुकेन वा उक्त इति न कोपि शङ्कालेशः । इति कठिनांशविवेचनम् ।

सप्तमे वैष्णवानां च व्रतानां करणं स्मृतम्।
एकादशी तत्र मुख्या व्रतानामुत्तमा यतः ॥१४॥
दैत्यसम्बन्धरहिता तथाऽष्टम्यादिकं हरेः।
पुष्टिमार्गप्रकारेण धर्मा अष्टम ईरिताः ॥१५॥
यज्ञादिप्रचुरा धर्मा नवमे परिकीर्त्तिताः।
दशमे लोकरक्षार्था धर्मा लोकसुखप्रदाः ॥१६॥
एकादशे स्मार्त्तधर्माः स्वनिष्ठान्ताः शुभाः स्मृताः।
रागाभावयुता धर्मा द्वादशे परिकीर्त्तिताः ॥१७॥
उपास्यदेवतानां तु पोषकाश्च त्रयोदशे।
ज्ञाननिष्ठा भोगयुक्ताश्चतुर्दश उदाहृताः ॥१८॥

वैवस्वते एकादश्यादिव्रतकरणं पुराणान्तराज्ज्ञेयम्। अष्टमे सावर्णिमन्वन्तरे भगवदवतारेण सार्वभौमेन बलये ऐन्द्रपदस्य दानात्पुष्टिमार्गप्रकारका धर्मा अवतारप्रवर्त्तिता एव ॥११॥१२॥१३॥१४॥ नवमे ऋषभाख्यभगवदवतारेणेन्द्रस्य राद्धत्रिलोकीभोगकथनाद्राद्धत्वस्य च यज्ञादिभिरेव भवनाच्तेऽपि भगवत्प्रवर्त्तिता एव। दशमे दक्षसावर्णिमन्वन्तरे अमूर्त्याख्यो भगवदवतारो 'येनाप्यायेत वै जग'दिति कथनाज्जगदाप्यायक इति लोकरक्षार्था लोकसुखप्रदा धर्मा अवतारप्रवर्त्तिता एव। एकादशे धर्मसावर्णिमन्वन्तरे मनोरात्मवत्त्वेन विशेषणाद्भगवदवतारस्य धर्मसेतुनामकस्य त्रिलोकीधारकत्वकथनाच्चोभाभ्यां प्रवर्त्तिता आत्मनिष्ठान्ताः स्मार्ता एव। धर्मशब्दस्य स्मार्तेष्वेव प्रायशः प्रयोगात्। 'सत्यं परं परꣳ सत्यमि'त्यनुवाके यज्ञदानादिभ्यः पृथक् धर्मो 'विश्वस्य जगतः प्रतिष्ठे'त्यादिना धर्मस्योक्तत्वेन तथा निर्णयादिति। द्वादशादिषु त्रिषु मन्वन्तरेषु ये धर्मास्ते पुराणान्तरोक्ता बोद्धव्याः। एवमेतेषां स्वरूपकथनेन व्यवस्थाबोधनात्पूर्वस्कन्धोक्तानामानर्थक्यं वारितम्। तेषां सर्वमन्वन्तरसाधारणत्वादिति। तथा सत्यस्मिन्मन्वन्तर एकादश्यादिव्रतान्येव दुर्वासनानां निःशेषनाशकानि। तत्र स्मृतमित्यनेन पौराणत्वं बोधितम्। उत्तमत्वं च भगवत्प्रसादहेतुत्वात् महाद्वादशीनां प्रायश्चित्तरूपत्वात्। 'वैष्णवो वाथ शैवो वा सौरोऽप्येतत्समाचरे'दिति सर्वेषामावश्यकत्वबोधनाच्च ज्ञेयम्। दैत्यसम्बन्धराहित्यं च। 'दशम्यामसुरा जाता एकादश्यां सुरास्तथा। यत्तु जन्मदिने येषां तत्तेषामेव वर्द्धन'मितिपाद्मादिभ्यो ज्ञेयम्। अष्टम्यादिकमिति, 'जन्मा-

मन्वन्तरविभेदेन सद्धर्माः परिकीर्त्तिताः ।
तत्तद्देशविभेदेन देशधर्मास्तथा पुनः ॥१९॥
महान्तोऽत्र त्रयो धर्मा आपत्सु हरिसंस्मृतिः ।
सम्पत्सु सर्वदानानि निर्वाह्यवचनं तथा ॥२०॥
हरिसंस्मरणे तत्र चत्वारः परिकीर्त्तिताः ।
पुरुषार्थप्रसिद्ध्यर्थमध्याया इति निश्चयः ॥२१॥
मन्वादीनां यथा धर्मः कृष्णस्मृत्यैव सिद्ध्यति ।
तत्रापि धर्मबाधायां क्लेशः स्यादिति निश्चयः ॥२२॥
भगवद्धर्मरूपस्तु यदि धर्मेण बाध्यते ।
तदा फलत्वतो हीना ह्यर्थकामौ तु साधयेत् ॥२३॥
अनुवृत्तस्तु तत्रापि मोक्षं साधयते चिरात् ।
अतो गजेन्द्रकथनं चतुर्भिर्विनिरूपितम् ॥२४॥

ष्टमी रामनवमी वामनद्वादशी नृसिंहचतुर्दशी चे'तिपाद्मे पातिव्रत्यव्रतिनष्टुपक्रम्यै- तेषामेव पञ्चानां कथनादिति । एवमेते कालधर्मा यथाव्यवस्थया सद्धर्मास्तथा देशधर्मा अपि व्यवस्थया तथेत्याहुः- तत्तदित्यादि ॥१६॥१७॥१८॥१९॥

सर्वमन्वन्तरसाधारणान्सद्धर्मानाहुः महान्त इत्यादि । एतेषां महत्त्वं च सर्वमन्वन्तरेष्वावश्यकत्वात्सर्वसद्धर्मसहायत्वाच्च ज्ञेयम । अथमपरः प्रकरणविभागस्तामस- प्रकरणं वेत्याशयेन सार्द्धंनवभिरेतदध्यायार्थानाहुः-हरिसंस्मरण इत्यादि ॥२०॥२१॥

प्रथमे यथा , धर्मसिद्धिस्तदाहुः-मन्वादीनामिति । धर्मस्तेषां रूपः कृष्णस्मृत्या उपनिषदर्थानुध्यानरूपया यथा भगवत्कृतेन प्रतिबन्धनिवारणेन मन्वादीनां सिद्धस्तथा सिद्ध्यतीत्यर्थः । मूले यद्यपि मनोरेवोक्तस्तथापि प्रति- बन्धकानां निवृत्तौ तदितरेषामपि सिद्ध एवेतिबोधनायादिपदम् । एवं प्रथमे हरि- स्मरणेन धर्मसिद्धिमुक्त्वा तत्रैव गजेन्द्रकथोपक्षेपतात्पर्यमाहुः-तत्रापीत्यादि । तथा च स्मरणेन सद्धर्मसाधनेऽपि यदि स्वाचारादिधर्मो बाधते तदा क्लेशः स्यादिति बोधनार्थं तदुपक्षेप इत्यर्थः ॥२२॥२३॥ अनुवृत्त इति । अनुवर्त्तमानो हरिस्मरणरूपो धर्मः । अत इति ल्यब्लोपे पञ्चमी । भगवद्धर्मात्मकहरिस्मरणस्यैवं धर्मान्तरेण

अगस्त्यो ब्राह्मणः शैवः स एव ब्राह्मणः स्मृतः।
तस्याविरोधी यो धर्मः स शीघ्रं फलदो मतः ॥२५॥
भक्तावेव हरिस्तुष्टः कालादीनत्र वारयेत्।
धर्मयुक्तांस्तथा चान्यान्नान्यथा तु कथञ्चन ॥२६॥
गजेन्द्रस्यार्थसिद्ध्यर्थं वृक्षादीनां च वर्णनम्।
काममुक्त्वा तस्य चान्ते क्लेशः कामस्तथा यतः ॥२७॥
स्तोत्रं प्रवृत्तिजनकं स कामो मुख्य ईरितः।

धार्येऽप्येवं फलसाधनतामनुसन्धायेत्यर्थः। ननु 'यानास्थाय नरो राज'न्निति योगेश्वरवाक्येन 'स्खलेदि'त्यनेन विलम्बाभावस्योक्तत्वादिन्द्रद्युम्नस्य कथं विलम्ब इत्यत आहुः-अगस्त्य इत्यादि। तथा च चतुर्थस्कन्धे नन्दिशापेन शिवद्वेषे फलविलम्बस्योक्तत्वादगस्त्यस्य शैवत्वेन 'यो यच्छ्रद्धः स एव स'इति तेन रूपेण शिवद्वेषसम्भवात्तथेत्यर्थः। वस्तुतस्तु 'आसक्तौ भगवानेव शापं दापयति क्वचित्। अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय ही'ति पुष्टिप्रवाहमर्यादोक्तरीत्या धर्ममर्यादास्थापनार्थं भगवद्दापित एवायं शाप इति भावः॥२४॥२५॥ नन्वेवं भक्तोपेक्षा नोचितेत्यत आहुः-भक्तावेति। इन्द्रद्युम्नशरीरे तस्य भगवत्पूजापरत्वमेव न तु भक्तत्वम्। 'इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायण' इत्यादिना सद्धर्मपरत्वस्यैवोक्तत्वात्। सा च पूजा सर्वापेक्षारहितेति गजेन्द्रजन्मनि भक्तिमुत्पादितवती, 'भक्तियोगं स लभते एवं यः पूजयेत मा'मिति वाक्यात्। ततो जातायां भक्तावेव हरिस्तुष्टः 'भक्त्या तुतोष भगवान् गजयूथपाये'ति गजदशायामेव तस्या उक्तत्वात्। कालादीनत्रास्मिन् जन्मनि वारयेत्। तथा कालादिषद्धर्मयुक्तानन्यानगस्त्यादिभ्योऽधिकानपि वारयेत्। यथाम्बरीषरक्षणाय दुर्वासा वारित इति भक्तौ वक्ष्यते। अन्यथा केवलसद्धर्मपर्यवसितत्वे तु कथञ्चन महाधर्मपरत्वेऽपि न वारयेदिति नात्र भक्तोपेक्षेत्यर्थः ॥२६॥

एवं शापतात्पर्यमुक्त्वा द्वितीयाध्यायतात्पर्यमाहुः-गजेन्द्रस्येति। ननु तृतीये कामो वाच्य इति कुतस्तत्र स्तोत्रकथनम्। किञ्च, भक्तिरत्र प्रेमात्मिका विवक्षिता, सा चान्तरेति तया प्रसादे स्तोत्रस्य कुत्रोपयोग इत्यत आहुः-**स्तोत्रमि**त्यादि, प्रपद्ये अवतु इत्यादीनां प्रयोगाणां दर्शनात्तस्य प्रपत्तावुपयोग इत्यर्थः। नन्वत्र

मोक्षस्तु कृष्ण एवात्र प्रीतः सर्वात्मना मतः ॥२८॥
तदा भक्ताश्च ये पूर्वे प्राकृता अपि वै श्रुताः।
ते मोक्षदाः समस्तानां जाता वै हरिवाक्यतः ॥२९॥
इत्यापरस्तु हरेः स्मृत्या यत्फलं परिकीर्त्तितम्।
ततस्तु दशभिः प्रोक्तं सर्वेभ्यो दानमीप्सितम् ॥३०॥
गुणास्तु नवधा प्रोक्ता निर्गुणो दशमः स्मृतः।
दानं तु त्रिविधं प्रोक्तं हेतुरूपफलैः पृथक् ॥३१॥
हेतवश्च त्रयः प्रोक्ता भगवान् सात्त्विकः पुरा।
ततो देवासुराश्चैव राजसाः परिकीर्त्तिताः ॥३२॥
शिवश्च तामसः प्रोक्तस्त्रिभिर्दोषे निवारिते।
दानं सिद्ध्यति सर्वेभ्यस्ततो हेतुं पुरोक्तवान् ॥३३॥
कृष्णेन प्रेरिता देवाः प्रेरयन्ति यदा मनः।

चतुर्भिरध्यायैश्चत्वारोऽर्था वक्तव्या इति पञ्चमायाः प्रपत्तेः कथमत्रोक्तिरित्यत आहुः–सकामो मुख्य इति। प्रपत्तिमुखेन स मुख्यकाम एवोक्तो गजेन्द्रस्य मुख्यतया रक्षितृकामनाया एव सत्त्वादिति कामत्वादत्रोक्तिरित्यर्थः। चतुर्थस्यार्थमाहुः–मोक्ष इत्यादि, (श्लो. १७) 'ये त्वां मां च सरश्चेद'मित्यादिभगवद्वाक्यतात्पर्यमाहुः–तदेत्यादि ॥२७॥२८॥२८½॥ एवं सार्द्धनवभिः प्रथमं प्रकरणं विचारितम् ॥

अतः परमेकपञ्चाशद्भिर्द्वितीयं प्रकरणं विचारयन्ति–तत इत्यादि। अध्यायान् विभजन्ते–गुणा इत्यादि। ननु गुणानां तथात्वे दानस्य कुतस्तावद्भिः कथनमत आहुः–दानमित्यादि। तथा च तस्य विधासु प्रत्येकं त्रैगुण्यसम्बन्धात्तावद्भिः कथनमित्यर्थः। एतेनात्रावान्तराणि प्रकरणानीति बोधितम्। आद्ये त्रित्वं व्युत्पादयन्ति हेतव इत्यादि। पुरेति प्रथमाध्याये ॥३०॥३१॥३२॥ ननु त्रयः कुतः कथं च हेतव इत्याकाङ्क्षायां त्रयाणां हेतुप्रकारं प्रथमतस्तत्कथनहेतुं चाहुः–त्रिभिरित्यादि। न'न्वेक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः, विहर्तुकामस्तानाह समुद्रोन्मथनादिभि'रिति भगवत एव तद्विहारेच्छाकथनात्कस्त्रयाणामुपयोग इत्यत आहुः–कृष्णेनेत्यादि। स इति जीवः। तथा च भगवानवान्तरकार्ये

१ तत्फलं।

लोभं च नाशयेन्नयक्षस्तदा दाता स जायते ॥३४॥
अमृतादधिकं लोके न देयमिह विद्यते।
मृत्युना व्याप्तलोके हि मरणं तन्निवारयेत् ॥३५॥
तत्त्वरूपपरिज्ञानं जिज्ञासायां च जायते।
सा च क्लेशोदये सम्यक् तदर्थं क्लेशसङ्कथा ॥३६॥
ज्ञापको हरिरेवात्र स चेद्वैकुण्ठवत्क्वचित्।
स्थानं कृत्वा यदा तिष्ठेत्तदैवार्थः प्रसिद्ध्यति ॥३७॥
इति वैकुण्ठनिर्माणकथनार्थं तु पञ्चमः।
मन्वन्तरो ज्ञानरूपः प्रथमं स निरूपितः ॥३८॥
वैराग्यरूपः षष्ठस्तु स क्लेशात्मा पुरा भवेत्।
तत्रैव गुरुसम्बन्धो ब्रह्मस्थानगतिस्ततः ॥३९॥
तदर्थं वेद चेद्ब्रह्मा भगवान् किं करिष्यति।
अतो भगवतो जग्मुः स्थानं सर्वे दिवौकसः ॥४०॥
क्रिययैव स दृश्यो हि तेन स्तोत्रमुदीरितम्।
स्तुत्या प्रसादपर्यन्तं हरिः सात्विक ईरितः ॥४१॥

कुर्वन्नपि मूलप्रकारं सूचयन्नेव करोतीतिज्ञापने उपयोग इत्यर्थः। ननु सम्पत्तु सर्वदानानां वक्तव्यत्वेन प्रथममसृतप्रसङ्ग एव कुत इत्यपेक्षायां 'जीवाभयप्रदानस्य कलां नार्हन्ति षोडशी'मितिवाक्यात्सर्वाणि दानान्यभयान्तानि। 'अभयं चामृतादि'-त्यादि बोधयितुं तत्प्रसङ्ग इत्याहुः-अमृतादित्यादि ॥३४॥३५॥

एवं प्रकरणार्थं विचार्य प्रथमाध्यायार्थं विचारयन्तोऽमृतस्य मोक्षाध्यात्मकत्वबोधनाय तद्धर्मानतिदेष्टुमेवं कथयेत्याशयेनाहुः-तत्त्वरूपेत्यादि। जिज्ञासायामिति विचारे। पञ्चम इति मन्वन्तरविशेषणम्। प्रथममिति वैराग्यरूपात् षष्ठात्पूर्वम्, षष्ठस्य वैराग्यरूपत्वे गमकमाहुः सक्लेशात्मा पुरा भवेदिति, तत्रैव गुरुसम्बन्ध इति च। तदर्थमिति अमृतजनकमर्थम्। तथा चैवं परोक्षवादेन मोक्षपर्यन्तं दानं महाधर्म इति बोधयितुं ज्ञानप्रदो हरिः प्रथमाध्याये उक्तस्तस्य सात्त्विकत्वं चैवं देयस्वरूपविचारादुपायप्रकारविचाराच्च ज्ञातव्यमित्यर्थः। तेन 'स्वच्छन्दगतिरीश्वर' इत्यन्तो द्वितीयाध्यायोऽपि प्रथमस्यैव शेष इतिबोधितम् ॥३६॥३७॥३८॥३९॥४०॥४१॥ एवं षड्भिः प्रथमाध्यायार्थं उक्तः।

राजसा देवदैत्याश्च मेलनं कपटेन हि।
राजसं कर्म तच्चापि क्लेशात्मकमुदीरितम् ॥४२॥
हेतुः स मध्यमः प्रोक्तो नितरां क्लेशदः परः।
तामसः स तु विज्ञेयः क्रियादौ तामसी मता ॥४३॥
कालकूटं शुद्धतमः पानं तस्य तु सात्विकम्।
एवं त्रेधा विभागस्तु सर्वत्र ज्ञायतां स्वतः ॥४४॥
एवं त्रिभिर्हेतुकथा दानार्थमिह रूपिता।
साधकः साधकानीत्थं प्रतिबन्धनिवारकः ॥४५॥
सद्धर्मकार्ये सर्वत्र हरिर्वै साधको मतः।
देवाः साधनवर्गस्तु बाधकाभाव ईश्वरः ॥४६॥

(अ. ६–७) अत एव 'अथ तस्मै भगवते नमस्कृत्य पितामह (अ. ६. श्लो. २७)' इत्यादिना अर्थान्तरोपक्रमः सूच्यत इत्याशयेन द्वितीयाध्यायार्थमाहुः–राजसा इत्यादि। राजसत्वे हेतुः मेलनं कपटेन हीति। हिर्हेतौ। तदिति मन्दरानयनरूपं देवादिसाध्यम्। स इति मन्दरानयनरूपः। तथा च मध्यमत्वमपि राजसत्वे हेतुरित्यर्थः। एवं सपादेन द्वितीयार्थ उक्तः। तृतीयस्यार्थमाहुः नितरामित्यादि। परस्तृतीयाध्यायार्थो नितरां क्लेशदस्तस्य तथात्वे हेतुः तामस इति तामसत्वे हेतुः। तत्रादौ गिरेरधोगमनरूपा तामसीक्रिया मध्ये कालकूटं च, तस्य पानं तु सात्विकं तेन तदर्थस्य शिवस्यापि ब्रह्मविद्योपदेशद्वारैव सात्विकक्रिया-हेतुत्वमित्यर्थः। एवं हेतुविभागमुपपाद्य एतस्य सर्वसाधारणत्वाय सद्धर्मान्तरे-ऽप्यतिदिशन्ति–एवं त्रेधेति॥४२॥४३॥४४॥ एतदेव स्पष्टीकुर्वन्ति–एवमित्यादि। एवं प्रकारेण त्रिभिरध्यायैर्हेतुकथा इहामृतप्रसङ्गे तु दानार्थं निरूपिता तथापि सद्धर्मस्कन्धे निरूपितत्वात्साधक इत्यादिनोक्तो विभागः सर्वत्र सद्धर्मकार्ये वर्तत इत्यर्थः। तत्रापि न सामान्यरूपेण त्रितयज्ञानं सद्धर्मसाधकं किन्तु तत्तद्रूपेणेत्याहुः–हरिर्वा इत्यादि॥४६॥ ननु पुष्टौ चित्रकेतुशापप्रयोजकतया नाशकत्वेन शिवः सिद्धः, ऊतौ च हिरण्यकशिपुवरदायकत्वेन ब्रह्मेति कथं सर्वत्र तथात्वमित्याकाङ्क्षायां चतुर्थस्कन्धे 'अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्। आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषण'

विष्णुर्ब्रह्मा महेशश्च सर्वत्रैवं हि कारणम् ।
एकमेकतराभावे न कार्यं जनयेत्क्वचित् ॥४७॥
बाधकं द्विविधं प्रोक्तं साधकासाधनक्षमा ।
मध्ये बाधकसम्बन्धस्तत्राद्ये हरिरीश्वरः ॥४८॥
साधकत्वं यतस्तस्य द्वितीये तु महेश्वरः ।
उभयोस्तोत्रमत्रोक्तं मतान्तरविभेदतः ॥४९॥
मूलासुरस्वभावत्वात्कालकूटं हरेः पुरा ।
अकृत्वैव तु कार्यं हि प्रजासु समुपागतम् ॥५०॥
उत्पत्तिः प्रथमं तस्य दोषाभावाय केवलम् ।

इति दर्शं प्रति भगवद्वाक्यात्कार्यमात्रं प्रति त्रयाणां कारणत्वेन तत्रापि त्रयाणां कारणत्वमनुसन्धेयमित्याशयेनाहुः–विष्णुर्ब्रह्मेत्यादि। उत्पत्त्यादीनां त्रयाणां परस्परापेक्षत्वात्तत्रापि त्रिभ्य एव कार्यसिद्धिरित्येवानुसन्धेयमित्यर्थः ॥४७॥

तृतीयेऽध्याये प्रतिबन्धनिवारकत्वेन हेतुत्वं विवक्षितमतः प्रतिबन्धं स्फुटीकुर्वन्ति–बाधकमित्यादि । तत्राद्ये हरिरीश्वर इति । तयोर्बाधकयोराद्ये निवर्तनीये हरिर्भगवान् ईश्वरः कूर्मवपुषा गिर्युद्धरणेन देवादिबलवीर्यैरणादिना च निवर्तनसमर्थः। तत्र हेतुः साधकत्वं स्थितिसाधकत्वं यतस्तस्य हरेरेवेति। स्फुटमन्यत्। ननु प्रथमे सर्वात्मकत्वादिना भगवत्स्तुतिरत्र तु तथा शिवस्तुतिरितिद्वयोस्तथात्वमेकस्मिन् कल्पे कथं सङ्गच्छेतेत्यत आहुः–उभयोरित्यादि। वेदाविरुद्धपाशुपतमते शिवस्य तथात्वेन सिद्धत्वात्तद्रूपबोधकं मतमादाय तथा स्तुतिरिति सुखेन सङ्गतिरित्यर्थः ॥४८॥४९॥ ननु कालकूटस्य कथमेवं सामर्थ्यमित्याकाङ्क्षायामाहुः मूलासुर इत्यादि। पुरा पूर्वकल्पे हरेः सकाशादुत्पन्नो मूलासुर आदिदैत्यो मधुकैटभान्यतरस्तत्समष्टिर्वा कालकूटम्। तत्र गमकं हि यतो हेतोः कार्यं प्रजानाशरूपमकृत्वा स्वभावत्वात् हन्तृस्वभावत्वात् प्रजासु हननायोपागतमिति। तथा च कल्पान्तरे यथा कर्णमलादिभ्य उत्पत्तिस्तथात्र समुद्रादिति तेन तथा सामर्थ्यमित्यर्थः ॥५०॥

एतदुत्पत्तेः प्राथम्ये हेतुमाहुः–उत्पत्तिरित्यादि। अन्यथा ततः पूर्वमुत्पन्नाः सदोषा एव स्युरतस्तथेत्यर्थः। नन्वेवं सति पूर्ववत्कुतो न नाशित एवं पानं च

महादेवोदरे सर्वे मुक्ता एव वसन्ति हि ॥५१॥
अतोऽयं सर्वदोषात्मा कालकूटाभिधासुरः।
मुच्यतामिति यत्नेन महादेवेन भक्षितः ॥५२॥
अग्नेर्मुखादपगतो दोषयुक्तो महान् यतः।
आसनेन निरुद्धस्तु कण्ठ एव व्यवस्थितः ॥५३॥
स दोषख्यापनार्थाय कण्ठो नीलो बभूव ह।
महाप्रलयसिद्ध्यर्थं तत्रैव स्थापितो महान् ॥५४॥
अत एव हरिः प्रीतो भवानी चान्वमोदत।
ततस्त्रिभिरिहाध्यायैर्दानरूपं निरूप्यते ॥५५॥
देयोत्पत्तिर्दानकर्म जीर्णवान्तं च तत्फलम्।
क्रमेणैतत्त्रयं प्रोक्तमध्यायात्रितयेन हि ॥५६॥
सच्चिदानन्दरूपं हि ब्रह्म पूर्वोक्तमुत्तमम्।

कुतः कारितमित्यत आहुः–महादेव इत्यादिचतुर्भिः। हरेरिति रूपान्तरमितिशेषः। सन्तीति वासनावशेनोत्पन्नाः सन्ति। अत इति मुक्तसमाजसंसर्गात्। अग्नेरिति वाडवात्। शेषं स्फुटम्। एवं सपादद्वादशभिस्तृतीयार्थ उक्तः ॥५१॥५२॥५३॥ ५४॥५५॥तेन पञ्चविंशतिभिराद्यमवान्तरप्रकरणं विचारितम्।

अतः परमूनविंशतिभिर्द्वितीयमवान्तरं रूपप्रकरणं विचारयन्तस्तद्ध्यायत्रयार्थमाहुः-देयेत्यादि। अत्र जीर्णवान्तमिति राहुशिरोहरणादिवाक्यानामर्थः शिरोऽमरत्वसूचितामृतजीर्णत्वस्य पिबतो नम्रमुखत्वेन शेषस्य मुखात्पात इति वान्तत्वस्य च भगवत्कार्यत्वादिति। ननु देयोत्पत्तिः प्रथमाध्यायार्थ इत्यमृतोत्पत्तिमात्रं वक्तव्यं कामधेन्वाद्युत्पत्तिकथायाः किं प्रयोजनमत आहुः–सदित्यादिद्वाभ्याम्। हि यतो हेतोः पूर्वोक्तं जगत्कारणभूतं ब्रह्म सच्चिदानन्दं किञ्चोत्तमम् 'एष ह्येवानन्दयाती'तिश्रुतेरेतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेश्च। ब्रह्मैवानन्ददायकं तदंश एव सर्वत्रानन्द इति। अतो हेतोः सदंशानां देहानां सर्वप्रकारकानन्दसिद्ध्यर्थं धेन्वादीनां रत्नानामिह लोके समुद्रमः प्राकट्यम्। हि

सदंशानां सर्वसिद्ध्यै धेन्वादीनामिहोद्गमः ॥५७॥
सदानन्दस्तादृशो हि मुख्यानन्दो रमा स्मृता ।
अमृतं तु चिदानन्दः स जीवार्थं हि युज्यते ॥५८॥
सर्वेष्टं यद्भवेल्लोके विभागं नैव गच्छति ।
तत्स्वेच्छयैव यद्गामी स भुङ्क्ते नापरः क्वचित् ॥५९॥
स्वयम्वरस्ततः प्रोक्तो लक्ष्म्यास्तस्यास्तथा मतिः ।
ब्रह्मानन्दस्वरूपा हि महद्ब्रह्मेति शब्दिता ॥६०॥
भोक्ता तस्य हरेर्नान्यो दोषयोगान्न चाऽन्यथा ।
आधिदैविकमेषा हि मध्यमं त्वमृतं मतम् ॥६१॥
समुद्रात्त्रितयं जातं तेन दाता स रूप्यते ।
हरणान्तामृतोत्पत्तिः स्वातन्त्र्यार्थं निरूपिता ॥६२॥
अन्यथा न भवेज्ज्ञानं गृहभोजनपाकवत् ।

यतो हेतोः सदानन्दः सद्धर्मरूप आनन्दस्तादृशो बहिः पदार्थसम्बन्धाभिव्यङ्ग्यः। स्फुटमग्रे ॥५६॥५७॥५८॥ तथा च त्रितयानन्ददानबोधनाय तदुत्पत्तिकथेत्यर्थः। लक्ष्मीस्वयम्वरकथातात्पर्यमाहुः—सर्वेष्टमित्यादि । तथा मतिरिति । प्रोक्तेति विपरिणामेनानुषङ्गो लक्ष्म्यास्तथा बुद्धौ हेतुं वक्तुं तत्स्वरूपमाहुः- ब्रह्मेत्यादि । तथा च ब्रह्मस्वरूपत्वात्तथा बुद्धिरित्यर्थः। भगवतो भोक्तृत्वे उपपत्तिमाहुः—भोक्तेत्यादि। अन्यो जीवो चस्त्वर्थः, दोषयोगादन्यथा अक्षरानन्दादपकृष्टः। तथा च 'अक्षरात्परतः पर' इति श्रुतेः । 'अक्षरादपि चोत्तम' इति वाक्याच्च तत उत्तम एव तद्भोक्तेति ज्ञापयितुं तत्स्वयम्वरकथेत्यर्थः । अमृतपदं मुख्यवृत्त्या ब्रह्मानन्दमेव वक्तीति ज्ञापनाय समुद्रोत्पन्नानां त्रिविधानां स्वरूपं वदन्तः समुद्रस्य दातृत्वे प्रयोजकमाहुः—आधिदैविकेत्यादि । अत्रोभयोः स्वरूपकथनेन धेन्वादीनामाधिभौतिकत्वं स्फुटीकृतम । ननु देयोत्पत्तिरध्यायार्थ इति तत्पर्यन्तं यन्निरूपितं तत्तदुपोद्घाततया तत्सङ्गतमिति युक्तम, हरणकथा तु तदसङ्गतेति सा कुत उच्यत इत्यत आहुः—हरणेत्यादि । स्वातन्त्र्यार्थमिति दातुः स्वातन्त्र्यार्थम । गृहे भोजनपाकवदिति । स्वगृहे भोजनार्थं या पाकक्रिया तत्र परिवेष्टुर्यथा न दातृत्वं तद्-

पितृतो हि यथोत्पत्तिस्तथा ज्ञापयितुं पुनः ॥६३॥
धन्वन्तरिस्वरूपेण घटहस्तो बभूव ह ।
मातृतस्तु यथोत्पत्तिस्तथा ज्ञापयितुं पुनः ॥६४॥
मायारूपेण भगवान् घटहस्तः पुनर्बभौ ।
एवं रूपद्वयेनेशोऽमृतमुत्पाद्य दुर्लभम् ॥६५॥
सत्पात्ररूपानखिलान् पाययामास गोपतिः ।
सर्वेणाऽपि कृतं दानं हरिणैव कृतं भवेत् ॥६६॥
इति दर्शयितुं कृष्णः स्वयं दाता बभूव ह ।
अपुत्रस्तु समुद्रो हि जामाता तु हरिः पुनः ॥६७॥
अतः श्वशुरकृत्यं हि स्वयं चक्रे तथाविधः ।
दैत्येभ्यो वारुणी दत्ता सा वृक्षाद्वेदिनिर्गता ॥६८॥
अमृतस्येव धाराऽभूद्यथापात्रं हि दीयते ।

दित्यर्थः । नन्वग्रे स्त्रीरूपेण दाने तेनैव रूपेणामृतं कुतो न समुद्रादानीतवानित्याकाङ्क्षायामाहुः–**पितृत** इत्यादित्रयम् । पुनरित्यनेन धन्वन्तरेरेव तथात्वं स्मारितम् । 'धान्वन्तरं द्वादशम'मित्यत्र प्रथमस्कन्धे तथा सिद्धत्वात् । **गोपतिरि**ति स्वर्गपतिः । एवं सार्द्धदशभिः प्रथमाध्यायार्थो विचारितः ॥ ५९॥६०॥६१॥६२॥६३॥६४॥६५॥

(अ० ९) अतः परं द्वितीयाध्यायार्थो विचारणीयः । [illegible] च दानकर्मात्मक इति तस्य येन केनापि सिद्धौ भगवत एव दातृत्वं कुत उच्यत इत्यपेक्षायामाहुः–**सर्वेणे**त्यादिद्वाभ्याम् । **तथाविध** इति पुत्रीरूपः । अस्मिन् कल्पे चन्द्रो न समुद्रपुत्र इति बोध्यम् । पात्रेषु प्रवेशेनामृतमयत्वाभावाच्च । तथा चैतज्ज्ञापनार्थं 'दाता दापयिता हरि'रिति शास्त्रार्थज्ञापनार्थं चोच्यत इत्यर्थः । नन्वेवं सति पुनर्वैषम्यापात इत्यत आहुः–**दैत्येभ्य** इत्यादि । तथा चात्रापि पात्रत्वस्य वासनाजन्यत्वात्तत्रापि न वैषम्यमित्यर्थः ॥६६॥६७॥६८॥

स्वर्भानुरेकस्तत्रत्यो ज्ञापनार्थं तु पायितः ॥६९॥
मारितोऽन्यानिवेशाय सूर्यचन्द्रौ हि कालगौ ।
सूचयामासतुर्यस्मादतो ग्रहणभागिनौ ॥७०॥
मुख्यत्वज्ञापनार्थाय ग्रहणं तेन रूप्यते ।
सुखरूपं फलं कृष्णात्सतामिति निरूपितम् ॥७१॥
अक्षयं त्वमृतं यस्मादतः पीतं पुनर्मुखात् ।
उद्धृत्य स्वस्य भोगार्थं कर्त्तव्यमिति निश्चयात् ॥७२॥
मथने तु यथायत्ता आहवेऽपि तथा सुराः ।

ननु यद्येवं तदा स्वर्भानुः कुतः पायितो मारितश्चेत्यत आहुः—**स्वर्भानु**रित्यादि, अन्यानिवेशायेति पुनरन्यस्य पङ्क्तावनुप्रवेशनार्थम्। तथा चामृतगुणज्ञापनाय **पायितो**ऽन्येषामयोग्यानां प्रवेशाभावाय **मारित** इति नैतेनापि वैषम्यमित्यर्थः। सूचनग्रहणयोः प्रयोजनं वदन्तस्तत्कथनतात्पर्यमाहुः—**सूर्यचंद्रावि**त्यादि। तथा च 'योऽसौ तपन्नुदेती'त्यादिश्रुतेः सूर्यस्य कालचक्रगामित्वेन चायुर्ग्राहकत्वाच्चन्द्रस्यापि तथात्वेन तथात्वात्ताभ्यां सूचनादेव दैत्यवैरमुख्यत्वस्य सर्वथानपनोद्यस्य ज्ञापनाय च ग्रहणमुच्यते। तेन 'भगवानसतः कालेन प्रतिबध्नाति सतामेव सुखरूपं फलं ददाती'ति सूच्यत इति द्वितीयाध्याये आध्यात्मिकामृतदानप्रकारतः सिद्धम्। तेनाधिदैविकामृतदाने कः प्रकारः सिद्ध्यति तमाहुः—**अक्षय**मित्यादि। इदं सपरिष्प्रभृतमन्त्रतावदेव तु पुनर्यन्मुख्यममृतं 'एतावदरे खल्वमृतत्व'मित्यादिश्रुतिसिद्धं तद्यस्मादक्षयमतस्तत्पीतं पुनः शुकादिवन्मुखादुद्धृत्य 'तदहं तेऽभिधास्यामि महापौरुषिको भवाने'त्यस्य द्वितीयव्याख्यान उक्तया रीत्या **निश्चयात्**। ल्यब्लोपे पञ्चमी, निश्चयं कृत्वा स्वभोगार्थं कर्तव्यमिति गूढं निरूपितमित्यर्थः ॥६९॥७०॥७१॥७२॥ **एवं सार्द्धैः षड्भिर्द्वितीयाध्यायो विचारितः॥**

तृतीयाध्यायं विचारयन्ति—**मथन** इत्यादि। 'हरिः पुरस्ताज्जगृह' इति वाक्यान्मथने यथेन्द्रादयो देवायत्तास्तथा आहवेऽपि वयं पीतामृता इत्यहङ्कारेण सन्नद्धा जाताः। तदुक्तं 'पीतया सुधयैधिता' इति। न तु भगवदुपकार-

अमृतं तु कृतघ्नत्वशङ्कया नोपकारकृत् ॥७३॥
ततः स्वयं हरिर्गत्वा जघानासुरपुङ्गवान्।
ततः कृतघ्नताशङ्का निवृत्तेत्यमृतं पुनः ॥७४॥
स्वकार्यं कृतवद्येन स्वयं युयुधिरेऽमराः।
दानस्य फलमेतद्धि सर्वं स्वर्गादिकं यतः ॥७५॥
बलिस्तु हत एवासीन्निवृत्ताश्च तथापराः।
वस्तुतः फलमेतावच्छङ्काभावाय रूप्यते ॥७६॥
महादेवस्य संमोहो ह्यन्यथा तं समाश्रिताः।
पुनर्दुःखप्रकर्त्तारो दैत्याः स्युः सर्वथाऽचिरात् ॥७७॥
तस्मिन्मन्वन्तरे जाते यदि दैत्याः पुनः सुरान्।

मनुसन्थितवन्तस्तदा अमृतं चिदानन्दरूपत्वाचेतनमिति तेषु कृतघ्नत्वं शङ्कितवत्। तया शङ्कया अजीर्यमाणं नोपकारकृज्जातम्। ततो देवानां जाते पराजयेऽहङ्कारनिवृत्त्या भगवन्तं ध्यातवन्तः। तदुक्तं–ध्यातः प्रादुरभूदिति। ततो भगवता दैत्यहनने कृते तदाऽहङ्कारनिवृत्त्याऽपगमेनामृतस्यापि सा आशङ्का निवृत्तेति अमृतं पुनः स्वकार्यं कृतवद्येन तेजितवन्त इति पुरःस्फूर्तिकम्। तथा चैतया कथया विद्योपदेशकानां विचारयितॄणां स्वाहङ्कारे श्रीभागवतादिरूपा विद्याऽपि नोपकरोतीति सर्वथा प्रतिक्षणं भगवत्कृतमेवोपदेशकैर्विचारयितृभिश्चिन्तनीयमिति सूच्यत इत्यर्थः। एवं त्रिभिस्तृतीयाध्यायार्थं विचार्यं विंशतिभी रूपप्रकरणार्थो निर्णीतः। अत्रापि देवोत्पत्तिः सात्त्विकी देवानां सुखरूपतया सात्त्विकत्वात्। दानकर्म राजसं कापट्यमिश्रणात्। जीर्णता हननान्ता तामसीति स्फुटमेव ॥७३॥७४॥७५॥

अतः परं तृतीयं फलप्रकरणं विचारयन्तोऽत्र तामसो राजसः सात्त्विक इत्येवं गुणक्रम इति बोधयितुमाहुः–बलिरित्यादि। अपरा इति तामस्यः क्रियाः। एतावदिति जीर्णताकार्यपर्यन्तम्। एवं मुख्यामृतफलमपि कैवल्यान्तमितिप्रश्नार्थः ॥७६॥ द्वितीयस्याहुः–महादेवस्येतिद्वाभ्याम्। अत्र मोहनं राजसं मुख्यफलमपि त्रिरुद्धंशत्रादिवादिनिराकरणपर्यन्तं बोधनीयमिति

अधिरन्नामृतस्याऽस्य पानं स्यात् व्यर्थमेव हि ॥७८॥
मन्वन्तराणि सर्वाणि ततः प्रोक्ताम्यनुक्रमात् ।
आवेशिनस्तु ते सर्वे देवा मन्वन्तरेषु हि ॥७९॥
षड्भिः सम्पद्यते धर्म इति सर्वकृतं पृथक् ।
निरूप्य हरिणा सर्वं सिद्ध्यतीति निरूप्यते ॥८०॥
एवं दशाभिरध्यायैः सर्वदानं निरूपितम् ।

(अथ प्रकरणं तृतीयम् अ. १५-२३)

स्वोक्तनिर्वाहधर्मं तु नवभिः प्रोच्यते गुणैः ॥८१॥
कथञ्चित्सम्पदि प्रोक्तं नाऽन्यथा कार्यमापदि ।
अशक्यं सर्वथा नास्ति यदि चित्तं तथा भवेत् ॥८२॥
बलिरत्र तथा धर्मप्रवर्तक उदीर्यते ।

तेनोपाख्यानेन बोधितम् ॥७७॥७८॥ तृतीयस्याहुः-मन्वन्तराणीति । तेन मुख्यफलमावेशेन ब्रह्मभावान्तं बोधितम् । सात्विकत्वं तु सुखजनकत्वादेव स्फुटम् । एवं चतुर्भिस्तृतीयमवान्तरप्रकरणं विचारितम् । तेन सार्द्धाष्टचत्वारिंशद्भिर्गुणप्रकरणं सिद्धम् । गुणातीते त्वेक एवाध्याय(अ. १४)इति तस्यार्थमाहुः- षड्भिरित्यादि । तथा च हरिणा सर्वसिद्धेरत्र निरूपणाद् गुणातीतत्वम् । 'ज्ञानं चानुयुगं ब्रूत' इत्यादिभिर्ज्ञानादिदानकथनाद्दानप्रकरणेऽन्तर्भाव इत्यर्थः ॥७९॥८०॥ उपसंहरन्ति-एवं दशभिरित्यादि । एवमेकपञ्चाशद्भिर्द्वितीयं महाप्रकरणं विचारितम् ।

(अ. १५-२३)अतः परं तृतीयं स्वोक्तनिर्वाहप्रकरणं सार्द्धैः षोडशभिर्विचारयन्ति स्वोक्तेत्यादि ॥८१॥ ननूक्तप्रकरण इवात्रापि दानमेव प्रतिपाद्यत इत्येतत्कथने को विशेष इत्यत आहुः-कथञ्चिदित्यादि । पूर्वप्रकरणे सम्पदि दानं कथञ्चित्कर्तव्यमन्यथाऽशक्यत्वे आपदि न कार्यमिति प्रोक्तम् । अत्र तु यदि चित्तं तथा भवेद्दानानुकूलं भवेत् तदा अशक्यं नास्तीति विशेषं ज्ञापयितुं तथा धर्मप्रवर्तको बलिरीर्यत इत्येष विशेष इत्यर्थः ॥८२॥ नन्वेवं सत्यत्रापि दानप्रतिपादनाद्द्विंशत्यध्यायात्मकमेव प्रकरणं वक्तव्यं न प्रकरणभेद इति शङ्कायामर्थभेदं

दातुरेकेन दानस्य सामर्थ्यमिह रूप्यते ॥८३॥
याचनार्थं भगवतः प्रसक्तिभिरुच्यते ।
ततो याचनमेकेन दानं चान्येन रूप्यते ॥८४॥
अन्यथाकरणाद्बन्ध एकेन प्रतिपादितः ।
यथार्थकरणान्मुक्तो वरान् लेभे सुदुर्लभान् ॥८५॥
अभीप्सितार्थसिद्ध्यर्थं स्थापनं चाऽपरेण हि ।
एवं नवभिरध्यायैः फलसाधनसंयुतम् ॥८६॥
सत्यवाक्यं हि सद्धर्मरूपमत्र निरूपितम् ।
राजसो राजसैर्युक्तः कर्ता राजस उच्यते ॥८७॥
व्रतं तु तामसं प्रोक्तं सत्त्वयुक्तं द्वितीयके ।
प्रसादः सात्त्विकः प्रोक्तो रजोयुक्तस्तृतीयके ॥८८॥
अवतारस्तथा मोक्षस्तमसाच्छलभावतः ।

यत्तु दानस्य साधनत्वेन प्रयोगस्य प्रकरणित्वमित्यध्यायेनाध्यायार्थानाहुः—दातुरि-
त्यादिभिश्चतुर्भिः । फलेत्यादि । फलं भगवत्प्रसादः साधनं दानं तदुभयसंयुतं
सत्यवाक्यं हि यतो हेतोः सद्धर्मरूपमत्र निरूपितम् । अतः प्रतिपाद्यभेदा-
दवतरणभेद इत्यर्थः । अन्यापि गुणैर्नानाविधत्वमुक्तं परन्तु न पूर्ववदिति ज्ञापनाय
प्रकारं निरूपयन्ति-राजस इत्यादि । राजसैरिति गुणैर्द्विरुक्तैर्युक्तः ॥८३॥८४॥
८५॥८६॥८७॥ व्रतमिति पुराणवचनम् । तस्य तामसत्वं मोहगुणापा-
करणात्सात्त्विकत्वं सुखजनकत्वात् । एवं प्रसादस्य सात्त्विकत्वं सुखदत्वात् . राजसत्वं
फलाकाङ्क्षाप्रयुक्तत्वात् । तथा मोक्ष इति राजसः मोक्षः । तत्र हेतुः, छलभावत
इति । ईश्वरभावं तिरोभाव्य याचकसमभावनेन छलभावः । तमसेति मोहकत्वा-
त्मकता युक्त इत्यर्थः । याचनं राजसं प्रोक्तमिति । छलभावत इति पदमिहापि
सम्बद्ध्यते । तथा च ऊनविंशेऽध्याये भगवता कृतं तत् छलभावेन फलाप्रापणा-
मित्यर्थः । वचनमिति छलवचनं तामसमित्यर्थः । एतस्य प्रकरणस्यार्थोऽपि
सम्पन्नः । तथा च विंशेऽध्याये उच्यमानं बलिवचनमात्मसमर्पणलक्षणं तामसं तदनु-

याचनं राजसं प्रोक्तं वचनं तामसं मतम् ॥८९॥
सत्वेन रजसा युक्तं षडध्याया इमे मताः।
दानं तु सात्त्विकं प्रोक्तं प्रतिबन्धस्तु तामसः ॥९०॥
कीर्त्तिसाहससंयुक्तं सराजसमिहोच्यते।
अन्यथाकरणाद् दुःखं यथावत् करणात्सुखम् ॥९१॥
पूर्वार्धस्याऽपि संसद्भिरुपपत्तिफले त्रिधा।
विप्रकर्महरीणां हि प्रसादः करणं त्रिधा ॥९२॥
अज्ञानज्ञानदाने हि बन्धनं फलमेतयोः।
त्रिभिर्दानमिह प्रोक्तं मुख्यं दानं फले मतम् ॥९३॥

तत्रात्सत्वेन शुर्वबज्ञानाद्रजसा च प्रयुक्तमित्यर्थः ॥८८॥८९॥ अध्यायान्तरेष्वपि गुणसाङ्कर्यत्वात्कुत्र क इत्यनिश्चयात्तन्निवृत्त्यर्थमाहुः—षडध्याया इम मता इति। सूक्ष्मविचारे ते य एवार्था मुख्यतया सम्मता इत्यर्थः। विंशे दानस्यैकविंशे बन्धनस्य चोक्तत्वात्तत्स्वरूपमाहुः—दानं त्विरयादि। कीर्तिसाहसाभ्यां संयुक्तं दानमिहाध्याये प्रकरणे वा सराजसं सात्त्विकमुच्यते। तु पुनरेकविंशे प्रतिबन्धः प्रतिकूलतया बलिनिग्रहस्तामस इतियोजना। एवं गुणविभागं प्रदर्श्यावान्तर-प्रकणानि विभेक्तुमध्यायार्थानाहुः—अन्यथेत्यादि। अत्रैकैकचरणोक्तः। क्रमेणैक-विंशादित्रयस्यार्थः। तेनैवमुपपत्तिरध्यायार्थः। फले तृतीयप्रकरणार्थः। प्रथमप्रकरणा-ध्यायार्थमाहुर्विप्रेत्यादि। विप्रा भृगवः कर्मादितिपयोव्रतं हरिर्भगवान् तेषां प्रसादः पञ्चदशादित्रयस्यार्थः। सद्धर्मप्रयोजकत्वात्त्रिधाकरणम्, तेन हेतुः प्रकरणा-र्थैस्तद्विधाध्यायार्थः इत्यर्थः ॥९०॥९१॥९२॥

द्वितीयस्याहुः-अज्ञानेत्यादि। अज्ञानेन दानं 'यद्यद्वटो वाञ्छसी'ति सार्द्धश्लोकोक्तमष्टादशेऽर्थः। ज्ञानेन त्रिपदमिता भूर्देयेति ज्ञानेन दानमित्युक्तः 'सहस्त्राहे'त्यनेनोक्तमूनविंशेऽर्थः। हि निश्चयेन दानं 'एवं शप्तः स गुरुणे'ति श्लोकोक्तं विंशेऽर्थः। वस्तुतस्त्वध्यायद्वयेन ज्ञानदानमेवोच्यते इति द्वे एव दाने। एतयोर्द्विविधदानयोः फलं बन्धनं विंशे उच्यत इति सफलं दानं द्वितीयप्रकरणार्थ-स्तत्प्रकारादिरध्यायार्थं इत्यर्थः। नन्वत्र तृतीये फलस्यैव मुख्यत्वात्कथं त्रिभिर्दान-मित्यत आहुः-मुख्यमित्यादि। 'पदं तृतीयं कुरु शीर्ष्णि मे निज'मित्यनेनोक्तं

हेतुर्दानं फलं चेति त्रिभिस्त्रिभिरिहोच्यते ।
विभज्य दानं पूर्वोक्तमसर्वस्वं च तत्पुनः ॥९४॥
एकस्मै सर्वदानं च ततः श्रेष्ठं तृतीयके ।
अयमेव हि सद्धर्मो यथाऽयं बलिना कृतः ॥९५॥
निर्वाहस्तस्य हरिणा तेन भक्तेः पुरोदितः ।
लक्ष्मीदानं यथा तत्तु मध्यमं परिकीर्त्तितम् ॥९६॥
शरणागतिरूपस्तु ततोऽपि प्रथमं मतम् ।
एवं सद्धर्मनिर्धारो हरये यदि सर्वदा ॥९७॥
सर्वथा शरणं गत्वा श्रेष्ठं तस्मै निवेद्य च ।
तदीयेभ्यो यथाकामं दत्वा तस्येच्छया पुनः ॥९८॥
कृष्णस्यैव तु कृष्णाय दद्यात्स्वं स्वात्मना सह ।
तृतीयस्यायमर्थस्तु यस्मै कस्मै यदा हरिः ॥९९॥

मुख्यमात्मनिवेदनरूपं फले फलप्रकरणे मतमतस्त्रिभिस्त्रिधेत्यर्थः ॥९३॥ सिद्धमाहुः–हेतुरित्यादि । प्रकरणक्रमतात्पर्यं वक्तुं प्रकरणद्वयोक्तयोर्दानयोस्तारतम्यमाहुः–विभज्येत्यादि ॥९४॥ द्वितीयस्य मुख्यत्वेऽन्यदपि हेतुद्वयमाहुः–अयमित्यादि ॥९५॥ तथा च भगवन्निर्वाहितत्वेन भक्तिजनकत्वेन चायं मुख्य इत्यर्थः । अन्ययोस्तारतम्ये हेतुमाहुः– लक्ष्मीत्यादि । तथा च प्रथमस्य स्वार्थत्वाद् द्वितीयस्य परार्थत्वेन तत उत्कर्षः । द्वितीये च दाता समुद्रो भगवांस्तु प्रतिनिधिरिति प्रागेवोक्तम् । तृतीयसन्दर्भतात्पर्यमाहुः–एवमित्यादि । एवं सार्द्धैः षोडशभिस्तृतीयं प्रकरणं विचारितम् ॥९६॥९७॥

अतः परं सार्द्धैः सप्तभिस्तुरीयं वक्तृप्रकरणं विचारयन्ति–तत्र तुरीयस्य वक्तृप्रकरणत्वाद्धरिकारि च ज्ञानस्यैव प्रयोजकत्वात्तत्र तद्बोधयितुं प्रकरणत्रयार्थमनुवदन्ति–सर्वथेत्यादि । अत्राद्यचरणे आद्यप्रकरणार्थस्ततश्चरणत्रयेण द्वितीयार्थः । अग्रिमे त्रिभिः पादैस्तृतीयस्य । ततः पादोनाभ्यां त्रिभिर्यत्सिद्धं निष्कृष्टमनूद्यते । तज्ज्ञातृत्वे मत्स्यावतार आहुः–एतदित्यादि । तेन मत्स्यपुराणस्यैतच्छेषत्वं बोधितम् । ज्ञाने गमकमाहुः–सप्तमस्येत्यादि । अष्टमस्कन्धे प्रकरण

आत्मानं वा विभजेत्तत्तथाऽस्त्विति।
अभिमानं परित्यज्य तत्तथेत्यनुमोदयेत् ॥१००॥
शत्रुभ्यः स्वस्य यद्दानं तदा सह्यं हि सर्वथा।
एतत्त्रयं हरिर्मत्स्यः स्वयं वेद न चापरः ॥१०१॥
सप्तमस्य मनोरर्थे यतोऽयं स्वयमागतः।
अस्मिन्मन्वन्तरे येन सद्धर्माद्वासनां दहेत् ॥१०२॥
नान्यथेति प्रसिद्ध्यर्थमत्र मत्स्यनिरूपणम्।
मत्स्यादन्यो धर्मसूक्ष्मं न वेदेति विनिश्चयः ॥१०३॥
वेदोद्धारो यतस्तेन कृतो नान्येन केनचित्।
एवं गुरूक्तमार्गेण सद्धर्मं यः समाचरेत् ॥१०४॥
दुर्वासनाः समस्ता हि दहेदिति विनिश्चयः ॥१०५॥

इति श्रीवल्लभदीक्षितविरचिते श्रीभागवततत्त्वदीपनिबन्धे
अष्टमस्कन्धविवरणे दशमं प्रकरणम्।

त्र्योत्तरं मत्स्यावतारप्रसङ्गोक्तिप्रयोजनमाहुः- अस्मिन्नित्यादि। ननु धर्मवक्तृत्वं कूर्मवराहावतारयोरप्यस्तीति को विशेषो मत्स्यावतार इत्यत आहुः-मत्स्यादित्यादि। एवं सर्वं स्कन्धार्थं निरूप्य स्वानुपदिशन्ति-एवमित्यादि। एवं चात्र स्कन्धत्रये प्रथमेनानुगृहीततया स्थितिर्द्वितीयेन तत्तद्वासनावत्तया स्थितिस्तृतीयेन निःशेषदुष्टवासनारहिततया स्थितिरिति त्रिविधस्थित्यर्थं त्रिविधलीलाबोधनात्, 'येन जातानि जीवन्ती'ति श्रुतौ त्रिविधं जीवनमभिप्रेतमिति बोधितम्, सर्ववेदेतिहाससारत्वाच्छ्रीभागवतस्येति ॥९८॥९९॥१००॥१०१॥१०२॥१०३॥१०४॥१०५॥

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य
दर्शिता अष्टमस्कन्धनिबन्ध-
योजना सम्पूर्णा ॥

## ॥अष्टमस्कन्धः समाप्तः॥

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# नवमस्कन्धविवरणम् ।

---

चतुर्विंशतिभिः प्रोक्तः सद्धर्मो वासनाक्षये ।
तथा चेत्क्रियमाणस्य कृष्णे चेद्वासना शुभा ॥१॥
जीवस्वभावतो जाता तदा भक्तिर्न चेतरत् ।
चतुर्विंशतिभिः प्रोक्ता नवमे भक्तिरुत्तमा ॥२॥

श्रीबालकृष्णाय नमः ।

## अथ नवमस्कन्धनिबन्धस्य योजना ।

अथ नवमस्कन्धार्थं निबध्नन्तोऽत्र कार्यकारणभावरूपा पूर्वेण सङ्गतिरिति बोधनाय सार्द्धेन पूर्वस्कन्धार्थमनुवदन्ति–चतुर्विंशतिभिः प्रोक्त इत्यादि । **प्रोक्त** इति दुर्वासनाक्षयार्थमुक्तः । 'स सर्वथा शरणं गत्वे'त्यादिनोक्तरीत्या चेत् क्रियते तदा चेद्भगवत्कृपाविषयमत्रानुग्रहस्य सहकारित्वात् । तदा भगवद्विषयिणी **शुभा वासना** भवति 'कृष्ण एवास्मत्प्रभुरि'ति, सापि चेद् 'वैष्णवत्वं हि सहजमि'ति, **पुष्टिप्रवाहमर्यादोक्तरीत्या** जीवस्वभावं प्राप्य जाता तदा भक्तिर्भवति । बीजस्वभाव इति पाठेऽप्ययमेवार्थः । जीवभावस्य बीजत्वादिति **न चेतरत्** । च पुनः, इतरल्लौकिकं मुक्तिर्वा न, यदि न कृपाविषयं तदा सामान्यकृपया मोक्षपर्यन्तं भवतीत्यर्थः । एतज्ज्ञापनायैव द्वितीयं चेत्पदकथनम् ॥१॥ एवमत्र कार्यकारण**भावरूपा सङ्गतिर्बोधिता** ।

अथ प्रस्तुतस्कन्धार्थं वदन्तः सामान्यलक्षणाद्विशेषबोधनपूर्वकमाहुः–**चतुरित्यादि** । 'वंशानुचरितं तेषां वृत्तं वंशधराश्च ये' इति द्वादशे (अ. ७) महापुराणानां

ईशस्याऽनुकथारूपा यया स्यात्पुरुषो हरेः।
सर्वप्रकृतिभावेन यदि कृष्णं स सेवते ॥३॥
लौकिकेन समस्तेन तल्लीलामनुसृत्य हि।
तदा लौकिकभावेषु कृष्णस्याऽनुप्रवेशतः ॥४॥
न निबन्धो मानसः स्यादितीशानुकथाऽधिका।
चतुर्विंशतिभिः प्रोक्ता सद्धर्माच्च विशिष्यते ॥५॥

सप्तमं लक्षणम्। द्वितीयस्कन्धे तु 'अवतारानुचरितं हरेरस्यानुवर्तिनाम्। पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिता' इतीशानुकथारूपं लक्षणं लक्षितम्। तदर्थस्तु ईशस्य हरेरिति विशेषणाद्दुःखदूरीकरणं सुखप्रापणं चाभिमेतम्। तत्र दुःखस्य नवधागुणभेदजत्वात्तन्निवारणे यदनुवर्त्तिनो गुणैर्नवविधाः, ज्ञानेनैकविधाः। चरित्रं ज्ञानकर्मभक्तिभिस्त्रिधा। एवं दुःखनिवारणे त्रयोदश। सुखप्रापणे दशेन्द्रियसुखदत्वादनुवर्त्तिनो दशधा एकश्च भगवानित्येकादशेति चतुर्विंशतिधेति। तथा सत्यस्य वंश्यवंशधरवृत्तत्वेऽपि तद्वंश्यावतीर्णहरिवृत्तत्वं तदनुवर्त्तिवृत्तत्वं च विशेषः, स चोक्तलक्षणकोत्तमभक्तिरूप इत्यर्थः ॥२॥

एवं चात्रत्रोत्तमपदेन वंश्यानुचरितविशेषत्वसूचनाद् द्वितीयस्कन्धोक्तलक्षणेऽतिव्याप्तिदोषोऽपि परिहृतः। कपिलादिमत्स्यान्तचरित्रेष्ववतारानुचरितत्वेऽपि राजवंश्यवृत्तत्वरूपविशेषणाभावात् पृथुप्रह्लादप्रियव्रतादिचरित्रेषु विवक्षितभक्तिरूपत्वाभावाच्चेति। तदेतन्मनसिकृत्य भक्तिप्रकारं विशिंषन्त ईशानुकथाया आधिक्यमाहुः— **सर्वेत्यादि** सपादाभ्यां द्वाभ्याम्। सजीवो यदि तल्लीलामनुसृत्यास्मत्प्रभुणैवं कृतमतस्तदनुवर्त्तिभिः सेवकैरस्माभिरपि तथैव कर्त्तव्यमित्यनुसन्धाय हि निश्चयपूर्वकं लौकिके पशुपुत्रादिना समस्तेन सहितः **सर्वप्रकृतिभावेन** सर्वोपादानकारणत्वेन कृष्णं सेवते तदोक्तरीत्या **मानसो** निर्बन्धो बलात्प्रवर्त्तनरूपो न स्यादिति हेतोरीशानुकथा रूपा भक्तिः पूर्वोक्तानां चरित्रेभ्यः पूर्वोक्तलक्षणेभ्यश्चाधिका। तथा च तेभ्यो भेदस्यात्र स्फुटत्वान्नैतल्लक्षणेऽतिव्याप्तिग्रास इत्यर्थः। ननु निर्बन्धाभावो बलिकृते सद्धर्मेऽप्यस्तीति तत्रातिव्याप्तिर्दुर्वारेत्यत आहुः—**सद्धर्मादि**त्यादि।

ईशानुसारिणी यस्माज्जन्माद्यप्यखिलाक्रिया ।
हरिः स्वयं तानादाय स्वकीयान् कर्त्तुमत्र हि ॥६॥
ज्ञानाज्ञानविभेदेन तज्ज्ञापयितुमत्र ह ।
अवतीर्णः सूर्यसोमवंशयोरुभयोस्तथा ॥७॥
द्वादशात्मा पूर्णगुणः पुराणः पुरुषो यतः ।
अतो द्वादशभिः प्रोक्तो वंशः पूर्वस्तथापरः ॥८॥
चन्द्रवंशकथा प्राह जघन्यत्वनिवृत्तये ।
जीवरूपेण सूर्यस्य ततो वंशनिरूपणम् ॥९॥
अतोऽध्यायाः समाः प्रोक्ता उभयोर्द्वादशैव हि ।
भक्तिर्नानाविधा स्वत्र कृष्णलीलानुसारतः ॥१०॥

विभेदेनेत्यन्तेन सार्द्धेन । हि यतो हेतोरत्रास्यां लीलायां तान् जीवान् स्वकीयान् कर्त्तुमादाय तिष्ठति न तु रूपभाङ्गिरन्नदातीति सा तथा । तथा च सद्धर्मे जन्मारभ्याखिलक्रियायां भगवदनुसारित्वाभावान्न तत्राप्यतिव्याप्तिरित्यर्थः ॥३॥४॥५॥६॥ एतदेव स्फुटीकुर्वन्ति–तज्ज्ञापयितुमित्यादि । हेति प्रसिद्धौ । अत्रास्यां लीलायां तत्स्वीकरणं ज्ञापयितुमुभयोः सोमसूर्यवंशयोस्तथा उद्धारकत्वेनावतीर्णः । तथा च 'य उत्तराननयत्कोसलान् दिवमि'ति । यत एतद्विमृश्यत इतिवाक्यात्सर्वोद्धारकमवतारचरित्रं नेतरत्रेति न तत्राप्यतिव्याप्तिरित्यर्थः ॥७॥८॥ एवमत्र सप्तभिः स्कन्धार्थो निर्णीतः ।

अतः प्रकरणार्थं विचारयन्ति–द्वादशात्मेति । ननु द्वादशस्वध्यायेषु भगवन्निरूपणं न स्फुटमिति भगवतो द्वादशात्मत्वं न प्रकरणाध्यायसङ्ख्यानियामक-मित्याशङ्क्याहुः–चन्द्रेत्यादि तथा च वंशबीजभूतस्य सूर्यस्य द्वादशात्मत्वात्तद्वंशनिरूपणे द्वादशसङ्ख्या आवश्यकी । ततो जघन्यत्वनिवृत्त्यर्थं सा सङ्ख्या चन्द्रवंशेऽप्याव-श्यकीत्यतस्तथेत्यर्थः । नन्वत्र वंशचरित्रे भगवदवतारचरित्रे च वक्तव्ये भक्तिर्मध्ये कुत उच्यत इत्याकाङ्क्षायां सार्द्धेन तदावश्यकत्वमनायाहुः–भक्तिरित्यादि । अत्रेति नवमस्कन्धे । तुरितरव्यवच्छेदार्थः । सर्वेषामिति सिद्ध्यतीति शेषः । तथा च त्रिप्रकारस्याभेदेन द्विविधफलार्थं मध्ये व्यापारत्वेन भक्तिः स्नेहरूपा आवश्य-

सर्वेषां तु फलं मोक्षो जीवतां हरिणा सह ।
लीलया परमं सौख्यं ततो भक्तिरिहोच्यते ॥११॥

यदा तु भगवान् साक्षादवतीर्णो रमापतिः ।
प्रमेयबलमासाद्य तदा मुक्ता भवन्ति हि ॥१२॥

अग्रे तत्कीर्त्तिसङ्कीर्त्या ततः पूर्वं तु ये नृपाः ।
मर्यादापुष्टिभेदेन वंशजाः सूर्यसोमयोः ॥१३॥

तत्र सूर्यप्रसूता हि गुणैर्नवविधा मताः ।
यथा यथा शुद्धभक्तास्तथा दोषवियोगतः ॥१४॥

महानुभावा जायन्ते इति तेषां कथोच्यते ।
मोक्षे तुल्येऽपि सर्वेषामनुभावोऽधिकः स्मृतः ॥१५॥

कीत्यत उच्यत इत्यर्थः ॥९॥१०॥ नन्वीशानुकथा द्विविधा, अवतारचरितरूपा तदनुवर्तिचरितरूपा च। तत्र द्विविधायाः कथमेको व्यापारः? किञ्चाग्रमुक्त्य-धिकारिणः कालत्रयस्था उच्यन्त इत्यनवतारकालीनानां कथं व्यापारसम्पत्तिरित्यत आहुः-यदेत्यादिद्वयम् । तत्कीर्त्तिसङ्कीर्त्येति । भगवद्गुणानां भगवदीयगुणानां च कीर्त्तनेन । मर्यादापुष्टिभेदेनेति । सूर्यवंशे मर्यादया सोमवंशे पुष्ट्येत्यर्थः । भक्ता भवन्तीतियोजना । तथा च सत्कार्यन्तरप्रदेशास्सर्वोपपत्तिरित्यर्थः । एवं च 'यतो वे'ति श्रुतौ 'यत्प्रयत्यभिसंविशन्ती'ति मुक्त्यद्वैविध्यं यच्छ्रावितं तन्मोक्षसौख्याभ्यां समर्थितं ज्ञेयम्, 'न कर्मबन्धनं जन्म वैष्णवानां च विद्यते । विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण' इति पाद्मवाक्यात् ॥११॥१२॥१३॥ नन्ववतारचरित्रेणैव भक्त्युत्पत्तेर्मोक्षाद्यात्मककार्य-सिद्धौ किं तदनुवर्त्तिकथयेत्यत आहुः—तत्रेत्यादिद्वयम् । तथा चावतारपूर्वकालेऽपि जातानां या मर्यादया पुष्ट्या वा जाता भक्तिः सापि सानुभावेति तेषामपि कीर्त्ति-श्रवणेन भक्त्युत्पत्त्याऽन्यस्य कार्यं सेत्स्यति भक्तिश्च दृढा भविष्यतीत्येतदर्थं तदुक्तिरित्यर्थः ॥१४॥१५॥ एवं प्रकरणार्थोऽष्टभिर्निरूपितः ।

तत्र सूर्यवंशप्रकरणं सार्द्धचतुर्नवतिभिर्वक्तव्यम् । तस्मिन् पूर्वं नवाध्यायया

वैराग्यज्ञानसहिता आद्याः शास्त्रोत्तमा मताः ।
द्वितीया वेदनिष्ठेभ्योऽप्यधिका लोकतोऽपि च ॥१६॥
लोकोद्धारप्रयत्नास्तु तृतीयाः सर्वमोचकाः ।
सुद्युम्नकविशर्यातिप्रमुखाः प्रथमा मताः ॥१७॥
नाभागश्चाम्बरीषश्च शशादाद्याश्च मध्यमाः ।
हरिश्चन्द्रश्च सगरो भगीरथमुखाः परे ॥१८॥
स्त्रीपुम्भावं गतस्त्वाद्यः सर्वकामनिवृत्तये ।
ब्रह्मणा स्त्रीत्वमापन्नो विष्णुना पुरुषोऽभवत् ॥१९॥
उभयं तु महादेवाद्विरक्तोऽभूत्त्रिभिस्तथा ।
वंशद्वयस्य जनको मूलभूतस्तनुर्हरेः ॥२०॥

कर्मणा दुःखदूरीकर्तॄणामीशानुवर्तिनां कथा, ततो द्वाभ्यामीशकथा। ततो द्वाभ्यां ज्ञाननिष्ठेशानुवर्तिकथेति तासु पूर्वमूनपञ्चिभिर्नवाध्यायीं विचारयन्तोऽनुवर्तिनां नवविधत्वं साधयितुं पूर्वं त्रैविध्यमाहुस्त्रिभिः-वैराग्येत्यादिभिः । शास्त्रोत्तमा इति शास्त्ररीत्योत्तमाः शास्त्रोत्तमत्वमग्रेऽप्यनुवर्तते । सविशेषश्चाधिक इत्यनुभावाधिक्यादाधिक्यम् । एकैकस्यां विधायां त्रिविधान् गणयन्ति-सुद्युम्नेत्यादिसार्द्धेन । तथा चैवमुदाहृतास्तथेत्यर्थः ॥१६॥१७॥१८॥ एवमाद्येऽवान्तरप्रकरणार्थो निर्णीतः।

( अ. १ ) अतः परं मोक्षात्मकं फलं पुष्टया वदन्तः प्रथमाध्यायार्थमाहुः-स्त्रीत्यादिसार्द्धाभ्याम । अत्र ब्रह्मणेत्यादिना पूर्वं मर्यादांश उक्तः, अग्रे पुष्ट्यंशः । *अत्र कार्यं ब्रह्मादिभिरित्यपि सूचितम् । वंशद्वयस्य जनक इत्यनेनाप्यध्यायो* मुख्यतः सोमवंश एव सम्बन्धं प्राप्स्यते, एतदीयसूर्यवंशस्यातिप्रसिद्ध्यभावात् पुरुरवस एवातिप्रसिद्धत्वादिति। मूले द्वितीयसुबोधिन्यां च यदेकादशविधत्वं सोमवंशस्य त्रयोदशविधत्वं सूर्यवंशस्योक्तं यच्चात्रोभयोर्द्वादशाध्याया इत्युक्तं तदुभयमपि समर्थितम्, उपक्रमविचारेण पूर्वानुपसंहारविचारेणेतरेति । अत्रोपसंहारस्याऽप्यसञ्जातविरोधत्वात्रोपक्रमेण बाध इति साम्यात्सर्वमेवात्र सुस्थम । 'तनुर्हरेरि'त्यनेन जीवद्दशायामेकस्यैव मातापितृभावादन्ते सायुज्याच्च तथात्वमिति बोधितम् । एवमग्रेऽपि फलं बोध्यम् । अस्य तामसकक्षानिवेशः प्रमादबाहुल्याद्बोध्यः ॥२०॥ एवं सार्द्धाभ्यां प्रथमाध्यायो विचारितः ।

नानाभावत्वमापन्नस्तेनाऽऽश्यः स उदीर्यते।
पृषध्रश्च कविश्चैव करूषो धृष्ट एव च ॥२१॥
नृगश्चैव नरिष्यन्तो दिष्टाद्याश्च ततः परे।
मरुत्तः सप्तमः प्रोक्तो भगवान् सप्तरूपधृक् ॥२२॥
कर्मणा शापतो हीनो ज्ञानात्मा मुक्तिमेयिवान्।
कविर्वैराग्यरूपस्तु करूषः कीर्तिरूपधृक् ॥२३॥
धृष्टो वीर्यस्वरूपस्तु ब्राह्मणा अभवन् यतः।
नृगः श्रीः स्त्रीकथा चान्ते नरिष्यन्तस्तथेश्वरः ॥२४॥
मरुत्तस्तु हरिर्धर्मास्तस्मादेते तु राजसाः।
शर्यातिः सात्विकः प्रोक्तः स्वतो धर्मप्रवर्त्तकः ॥२५॥
यज्ञप्रवर्त्तकानां च सर्वकामप्रपूरकः।
ब्रह्माद्यनुग्रहयुतो भगवद्भावसंयुतः ॥२६॥
वेदवद्यज्ञकर्ता च त्रिविधाः प्रथमा मताः।

(अ. २) द्वितीयं विचारयन्ति-पृषध्र इत्यादि। अत्र करूषस्य कीर्तिरूपत्वं तत्कुलीनानां 'ब्रह्मण्या धर्मवत्सला' इति विशेषणाज्ज्ञेयम्। स्त्रीकथेति ओघवतीकथा। चकारेण दानानुमितश्रीबाहुल्यं सङ्गृहीतं ज्ञेयम्। नरिष्यन्तस्यैश्वर्यरूपत्वं तत्कुलेऽग्निप्राकट्यात्। मरुत्तोदिष्टवंशे चक्रवर्तीति धर्मिरूपः। एतेषां राजसत्वं क्रियापरत्वात्। लोके तथा भक्तिप्रसिद्ध्यभावाच्च। एतेषां मर्यादयाऽनुग्रहः पुष्टिकार्यविशेषाभावान्मुक्तिश्चारम्भे पृषध्रकव्योर्मुक्तिकथनाद्बोध्या। एवं द्वितीयो विचारितः ॥२१॥२२॥२३॥२४॥

(अ. ३) तृतीयं विचारयन्ति-शर्यातिरित्यादिद्वाभ्याम्। भगवद्भावसंयुत इति। अन्यथा तत्कुले भगवतो बलदेवस्य विवाहो न स्यादिति। वेदवद्यज्ञकर्तेति। लुप्तस्याश्विनग्रहस्य प्रवर्त्तने प्रयोजकत्वाज्ज्ञेयम्। एवं तृतीयो विचारितः, प्रथमकक्षा च पूर्णा सार्द्धाष्टभिर्विचारिता।

भक्तिश्चेत्स्वानुभावं हि न प्रकाशयते यदा ॥२७॥
तदा धर्मत्वमापन्ना न भक्तित्वं प्रपद्यते ।
देवप्रसादयुक्तत्वं देवत्वं देवपोषणम् ॥२८॥
उत्तरोत्तरमुत्कृष्टं तस्मादेवं निरूपितम् ।
मन्त्रद्रष्टा शम्भुसमस्तस्याऽपि परितोषकृत् ॥२९॥
मध्यमे प्रथमः प्रोक्तो द्वितीयो भगवत्समः ।
अक्षरादुत्तमः कृष्णः स एवाक्षरवीर्यनुत् ॥३०॥
स एव ब्रह्मशापस्य निराकर्त्ता न चापरः ।
कालात्मा सेवितस्तेन व्रतेन न ततः परः ॥३१॥
अतो व्रतेन सेवार्थं तथा चक्रे हरिः परः ।
अशनाभाव एवैको विष्णुव्रतमुदीर्यते ॥३२॥
एकादशी ततः पुण्या व्रतानामुत्तमोत्तमा ।
उभयात्मकमब्भक्षस्तेनासौ मध्यमो मतः ॥३३॥

(अ० ४) द्वितीयां कक्षां सार्द्धद्वाविंशतिभिर्विचारयन्ति—तत्र प्रथमेऽध्याये नाभागाम्बरीषौ । द्वितीयेऽम्बरीषः । तृतीये तद्वंश इक्ष्वाकुवंशो मान्धातृतः सौभरिश्चोक्तः । तेषां मध्यमकक्षत्वं तत्रापि त्रैविध्यं तद्धेतुं च द्वाभ्यां स्फुटीकुर्वन्ति-भक्तिरित्यादि । स्वानुभावमिति । भविष्यसर्वजनशोचनरूपं स्वानुभवम्, तथा च भक्तेर्धर्मरूपत्वान्मध्यमत्वम्, देवेत्यादिनोक्तरूपत्वाच्च त्रैविध्यमित्यर्थः ॥२५॥२६॥ ॥२७॥२८॥ त्रैविध्यं निरूपयन्ति—मन्त्रेत्यादिभिः । प्रोक्त इति नाभागः प्रोक्तः । अयमेव तैत्तिरीयादिश्रुतौ नाभानेदिष्टनाम्ना व्यपदिश्यते । द्वितीय इति अम्बरीषः । तस्य देवत्वं व्युत्पादयन्ति—भगवत्सम इत्यादि । तर्हि मध्यमत्वं कुत इत्यत आहुः-कालात्मेत्यादिसार्द्धाभ्याम् । कालातीत ईश्वररूपः । तथा चक्र इति कालात्मकं सुदर्शनं रक्षकं चक्रे । उभयात्मकमिति । 'आपो वा अशितमनशितं चे'ति श्रुतेरशनानशनात्मकम् । तेनेति उभयकरणेन ॥२९॥३३॥ मध्यमत्वेऽ-

ब्रह्मशापः कायिकस्तु तस्मात्प्रतिहतोऽभवत् ।
तेषां वाचनिको मुख्यो यो न प्रतिहतः क्वचित् ॥३४॥
ईश्वराज्ञावशात्ते तु वाचिकं हि प्रयुञ्जते ।
सर्पेण मारणं लोके न तथा व्यथते क्वचित् ॥३५॥
यथा दंशस्तथा विप्रा एकोऽपि यदि सम्मतः ।
न समर्थस्तथा वाचि ब्राह्मणोऽन्यः कथञ्चन ॥३६॥
मानसो दोषभावस्तु ब्राह्मणे न भवेत्क्वचित् ।
ब्राह्मणत्वं तदा न स्याज्जगन्मित्रं यतः स्मृतः ॥३७॥
वागेका सर्वविप्राणां काय एव विभिद्यते ।
बहूनां सम्मतिर्मुख्या तत्राऽपीति विनिश्चयः ॥३८॥
शिवस्य त्रीणि रूपाणि दुर्वासास्त्वाधिभौतिकः ।
चक्रमाध्यात्मिकं प्रोक्तमधिदैवस्तु तद्वशे ॥३९॥
ब्राह्मणोक्तस्य करणान्न ब्रह्मामोचयन्मुनिम् ।
ब्रह्मण्योऽपि हरिस्तस्य व्रतार्थं न व्यमोचयत् ॥४०॥

वचनात्पाक्षिकदोषस्यापि सम्भवात्कथं शापप्रतिघात इत्यत आहुः-ब्रह्मशाप इत्यादि सार्द्धचतुष्टयम । कथञ्चनेति न समर्थ इत्यनुषङ्गः । अन्यासामर्थ्ये हेतुः मानस इत्यादि । एकेति भगवदाज्ञारूपा । तथा च शापस्य जटोत्कृत्तिजन्यत्वेन कायिकत्वात् । तस्य च भगवदनाज्ञप्तत्वेन निर्बलत्वात् । तेषां मानसदोषाभावाच्च प्रतिघात इत्यर्थः । ननु तथापि पाक्षिकदोषः कुतो नाभूदित्यत आहुः-बहूनामित्यादि । तथा चानेनेत्यर्थः ॥३४॥३५॥३६॥३७॥३८॥ ननु तथापि दुर्वासाः शङ्करावतार इति चक्रेण कथं तस्योपद्रव इत्यत आहुः-शिवस्येत्यादि । तद्वशे इति भगवद्वशे । तथा च न्यूनत्वात्सापराधत्वाच्चोपद्रव इत्यर्थः । त्रिभिर्दैवैररक्षणे हेतुमाहुर्ब्राह्मणोक्तेत्यादि । तस्य व्रतार्थमिति अम्बरीषस्याब्भक्षणव्रतनिवृत्तये । (अब्भक्षणस्य ब्राह्मणोक्तद्वादशीपारणसाधकत्वात्) । अर्थभङ्गो निवृत्तौ ॥३९॥४०॥

सेवायास्तु प्रशंसा तु मुनेर्गर्वापनुत्तये ।
अन्यथा मोचने तस्य भक्तानां का क्षतिर्भवेत् ॥४१॥
वैषम्यं चेद्भगवति न शुद्धाः स्युस्तदा तथा ।
परीक्षार्थं च भक्तानां गर्वे न स्यात्तथा भजिः ॥४२॥
त्रिलोक्यां ब्राह्मणाः श्रेष्ठा भक्तानां न प्रयोजकाः ।
ब्रह्मभावात्तु भक्तिर्हि विशिष्टेत्यत्र निर्णयः ॥४३॥
सुदर्शनपुरस्कारः काल एव तथा भवेत् ।
भक्तौ न भगवान् मृग्यः सेवकश्च भवेद् ध्रुवम् ॥४४॥
सुदर्शनेन तु कृतः सेवाधर्मो न चान्यथा ।

ननु सेवाप्रशंसनं कुत इत्यत आहुः-सेवाया इत्यादि पूर्वस्तुः पुनरर्थः। द्वितीयः वैयर्थ्यशङ्कानिवृत्त्यर्थः। ब्रह्मवैवर्त्ते दुर्वाससः श्वसुरेण गालवेन तव गर्वध्वंसो भविष्यतीति दुर्वाससः शप्तत्वात्। ननु भगवद्व्यवायेषु भक्तानामुपरि कृपैव प्रतीयत इत्येतदंशे वैषम्यमेव कुतो नाद्रियत इत्यत आहुः-वैषम्यमित्यादि। तदा विषमस्वामिभक्तत्वे भक्ताः शुद्धा न स्युः। तथा च तेषु तदभावाद्भगवति न तदित्यर्थः। अमोचने हेत्वन्तरं. समुच्चिन्वन्ति-तथेत्यादि। किं परीक्षणीयमित्यत आहुः-गर्व इत्यादि। न प्रयोजका इति न श्रैष्ठ्यप्रयोजकाः। स्वोत्कर्षाभिमानेन भक्तश्रैष्ठ्यासहिष्णव इत्यर्थः। ब्रह्मभावादिति ब्राह्मण्यात्। अत्र निर्णयः। तथा चैकं भगवतः कार्यमिति न्यायादेतत्सर्वबोधनायामोचनं सेवाप्रशंसा चेत्यर्थः ॥४१॥४२॥४३॥४४ एवं प्रथमाध्यायार्थ उक्तः।

(अ०५) द्वितीयस्याहुः- सुदर्शनेत्यादि। सुदर्शनस्य यः पुरस्कारः। स सुदर्शनस्य 'यदा विसृष्टस्त्वमनञ्जनेने'तिवाक्येन भगवच्चेष्टाधीनत्वाद्भगवच्चेष्टात्मके काल एव तथा भवेत् पर्यवसितो भवेत्। भक्तौ स्वानुभावानुभावनेन प्रत्यक्षकल्पत्वात्क्वचित्प्रत्यक्षत्वाच्च न मृग्यः, च पुनः सेवक एव ध्रुवं मृग्यः। तु पुनः सुदर्शनेन यत्कृत्यादाहादिकं कृतं स सेवारूपः स्वस्य धर्मः कृतः। न चान्यथा न स्वम्परीयपक्षपातेन। 'मादिष्टं भृत्यरक्षाया'मिति वाक्यात्। यतस्तद्भवकरणं भक्तौ बाधकमतो स्वस्य भक्तिगर्वप्रणाशबोधनाय सुदर्शनस्तोत्रम्। तथा चैतच्चतुष्टयबोधनाय द्वितीयाध्याय इत्यर्थः। ( भगवतोऽमृग्यत्वं सेवकस्यैव मृग्यत्वं सुदर्शने सेवाधर्म-

स्तोत्रं गर्वप्रणाशाय भक्तौ तद्बाधकं यतः ॥४५॥
मतान्तरकथा त्वत्र वाक्शाप इति केचन ।
तदा निरोधलीलायां प्रवेश इति निश्चयः ॥४६॥
वरदानं वाचनिकं भगवत्कार्यमेव तत् ।
शशादस्य कथा त्वत्र निरपेक्षत्वबोधने ॥४७॥
हरेर्निवेदनं चात्र तेन राज्ये व्यवस्थितिः ।
भक्तिश्च कर्मतः श्रेष्ठा यथा ब्राह्मणभावतः ॥४८॥

एव न तु वैषम्यमम्बरीषे ब्राह्मणभक्तिर्गर्वाभावेतिचतुष्टयमित्यर्थः) सेवाप्रशंसाया गर्वापनोदार्थत्वे स्वार्थे तात्पर्यराहित्याद्गौणी वक्तव्या, सा त्वनुपपन्ना, गौणीहेतूनां तत्सिद्ध्यादीनामत्राशक्यवचनत्वात् । तथा सति स्वार्थे तात्पर्यं तस्याः सिद्धम् । वैषम्यपरिहारस्तु दुर्वाससोवासनाकृतोपेक्षया आत्मस्पृहया वा उपपत्स्यते । अतोऽनया भक्तोपरि कृपैव सिद्ध्यति । तथा सति वर्षपर्यन्तमम्बरीषोपेक्षा । तस्यानशनक्लेशश्च कथं युज्यत इत्याकाङ्क्षायामाहुः-मतान्तरकथा त्वत्रेति । तुः शङ्कानिरासे । अत्रास्मिन्नंशे मतान्तरकथा उक्तयुक्त्या निश्चेयेति शेषः । अतस्तावतोऽशस्य भक्तमाहात्म्यबोधनार्थत्वं 'त्रिलोकीं तृणमिवामंस्ते'तिवदम्बरीषस्य तथाकरणेऽप्युपेक्षाभावस्य शक्यवचनत्वान्न दोष इत्यर्थः । अत्र पूर्वाध्यायेन 'अस्पृष्टब्रह्मशापोऽपी'त्यत्र शापपदात्तस्य च वाचनिक एवापकारविशेषे प्रयोगदर्शनात्केचनात्र वाक्शापमप्यङ्गीकुर्वन्ति । तन्मतमनुवदन्तस्तत्र विशेषमाहुः--वागित्यादि । तदेति दुरत्ययब्रह्मदण्डरूपवाक्शापप्रतिघाते । तथा च निरोधेऽनुक्तत्वान्नात्र तथाङ्गीकर्तुं शक्यमिति कायिक एवाङ्गीकार्य इत्यर्थः ॥४५॥४६॥ एवं चाग्रिमा वंशकथाऽप्येतस्यैव शेष इति सार्द्धैस्त्रिभिर्द्वितीयाध्यायो विचारितः ।

(अ. ६) तृतीयं विचारयन्ति त्रिभिः-शशादेत्यादि । निरपेक्षत्वबोधन इति । तद्वंश्यानां संसारनिरपेक्षत्वबोधनार्थम् । च पुनः अत्र इक्ष्वाकुवंशे हरेर्निवेदनं क्रियाकलापादेर्भवति निवेदनमम्बरीषचरित्रे । 'एवं सदा कर्मकलापमात्मन' इति वाक्योक्तमप्यनुवर्त्तते । एतेषां भक्तिरपि कर्मत उत्कृष्टा । यथाम्बरीषस्य ब्राह्मण्यादुत्कृष्टा एतद्बोधनाय शशादकथेत्यर्थः ॥४७॥४८॥ नन्वेतादृशत्वं तस्य मूले स्फुटं

तस्य सर्वोत्तमत्वाय ककुत्स्थसुत ईरितः ।
धुन्धुमारादिवंशस्य कर्त्ता विप्रे प्रतिष्ठितः ॥४९॥
एवं त्रयो मध्यमा हि भक्तिमार्गे निरूपिताः ।
धैर्ययुक्तो हरिश्चन्द्र उत्तमे प्रथमो मतः ॥५०॥
तस्य भक्तिप्रशंसार्थं पितुश्चण्डालतोच्यते ।
नैरपेक्ष्यं च तस्यापि दोषः प्राक्तन एव सः ॥५१॥
भक्त्यैव तादृशो जातः पुत्रद्वारा विमोचितः ।
सत्यव्रत इति ख्यातस्त्रिशङ्कुरिति विश्रुतः ॥५२॥
विश्वामित्रः पुष्टिकर्त्ता नान्यथा तं भजेत्कचित् ।
अतिसाहसकर्त्तात्र हरिश्चन्द्रो निरूप्यते ॥५३॥

न भवतीति कथमवगन्तव्यमित्याकाङ्क्षायामाहुः–तस्येत्यादि । विप्रे प्रतिष्ठित इति तस्य वंशो विप्रे सौभरौ प्रतिष्ठां प्राप्त इति । शशादो वा जापकेन सम्वदन् तद्धर्मे प्रत्यतिष्ठदिति । तथा चारम्भे तस्य निरपेक्षत्वबोधनादग्रे चैवंविधवंशबोधनात्तस्य विप्रे प्रतिष्ठाबोधनाच्च स सर्वेभ्य उत्तम इत्यर्थः ॥४९॥५०॥ एवं त्रिभिस्तृतीयार्धमुक्त्वा मध्यप्रकरणं सार्द्धद्वाविंशतिभिर्विचारितम् ।

(अ. ७) अतः परं तृतीयं सार्द्धत्रयोविंशतिभिर्विचारयन्ति धैर्येत्यादि । उत्तम इति तृतीये सर्वमोचकप्रकरणे । अत्र तस्य प्राथम्यकथनेनेतः पूर्वेषां द्वितीये व्याख्यातप्रकरणे निवेशः सूचितः । तथा सति तस्मान्त उत्कर्षेतत्पितुश्चाण्डालता कथं युज्यत इत्याकाङ्क्षायां तद्व्यवस्थां सार्द्धाभ्यामाहुः–तस्येत्यादि । तथा च तस्या अन्यार्थत्वान्न दोषावहत्वं वास्तवदोषस्य तस्मिन्नभावात् । तथा सति हरिश्चन्द्रस्य तत उत्पत्तिर्न स्यादित्यतः सोऽप्युत्तम इत्यर्थः । गमकान्तरमाहुः–नैरपेक्ष्यं च तस्यापीति । सशरीरस्वर्गगमनेच्छया सूचितमैहिकनैरपेक्ष्यमप्येतस्यैव गमकमित्यर्थः ॥५१॥ तर्हि कथमेवं भाव इत्यत आहुः–दोष इत्यादि । अजामिलादेरिव पूर्ववासनाजन्यो दोषो भक्त्यैव निवृत्त्यर्थमुद्भूतो जात इत्यर्थः । उभयत्रापि गमकमाहुः-सत्येत्यादि । मूले विश्रुतत्वस्योभयत्रान्वयाद् द्विधा ख्यातिरेव तद्गमिकेत्यर्थः । सत्यव्रतत्वख्यातौ गमकं न स्पष्टमिति तर्केण तं स्फुटीकुर्वन्ति–विश्वामित्रेत्यादि । हरिश्चन्द्रस्य प्राथम्यं कुत इत्यपेक्षायामाहुः–अतीत्यादि । अतिसाहसकर्तृत्वं मार्कण्डेय-

लोकापवादशान्त्यर्थं पुत्रार्थं तस्य चोद्यमः।
ऋणत्रयनिवृत्तिर्हि ततः कार्यं न चापरम् ॥५४॥
इति दर्शयितुं तेन यज इत्याह नान्यथा।
ततः सिद्धस्य दानं हि तस्मै युक्तं हि सर्वथा ॥५५॥
अनेन सर्वे विषया हरिदत्ता हरौ परे।
निवेशनीया भक्तानामित्यर्थो विनिरूप्यते ॥५६॥
वरुणो दैत्यराजो हि क्रूरं कर्म तथाविधम्।
तथापि भक्तपुत्रत्वान्न मारणमुपागतः ॥५७॥
तेनाऽपि यो गृहीतोऽत्र सोऽपि कृष्णेन मोचितः।
अभक्तहृदयं क्रूरमिति ज्ञापयितुं तथा ॥५८॥

पुराणादौ प्रसिद्धम्। धर्मपरीक्षकचण्डालदासत्वदशायां मृतककर्पटग्रहणार्थं पुत्रमपि यो दग्धुं न दत्तवान् स्वामिकार्यकर्तृतयेति। नन्वेतादृशस्य कथं पुत्रार्थं पुरुषमेधोद्यम इत्यत आहुः–लोकेत्यादि। पितुस्तादृशत्वात्प्रतिबन्धकत्वरूपापवादशान्त्यर्थमित्यर्थः। ननु वरुणोक्त्युपनिबन्धनस्य किं प्रयोजनमत आहुः–ऋणेत्यादि। न चापरमिति न लोकरूपम् ॥५२॥५३॥५४॥ नान्यथेति कामनावाक्ये 'यदि वीरो महाराजे'तिकथनेनानिर्देशादिष्ववस्थासु वीरत्वाभावेन तदवस्थासु यागस्याप्राप्तावसरत्वादिति। तत इति वरुणात्। तथा चायमर्थः, 'न कर्मणा न प्रजये'ति। तद्बोधक आहुः 'ऋषयः कावषेयाः किं प्रजया करिष्याम' इत्यादिश्रुत्या 'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुत' इत्यादिस्मृतिबाधे प्राप्तेऽपि सावकाशनिरवकाशन्यायेन तद्बाधाव्यवस्था आवश्यकीति भगवता यत्र ते दीयन्ते तत्र तथा, यत्र न दीयन्ते (तत्र तथा न दीयन्ते) तत्र ते न लोकप्रयोजका इति नेष्टव्याः। यदि निर्बन्धेन सम्पादितास्तदा तेषामुक्तातिरिक्तं फलं नेति न स्थाप्या इति दर्शयितुं तदुपनिबन्धनमित्यर्थः। एतेन सिद्धं तात्पर्यमाहुः–अनेनेत्यादि। ननु युक्तमेतत्कथोपनिबन्धनं तथापि देवस्य वरुणस्य कथमेवं क्रूरकर्मणि निर्बन्ध इत्यत आहुः–वरुण इत्यादि। निर्बद्धवानितिशेषः। एतेन सद्भावोऽधिकारस्य सत्त्वाख्यानामप्याग्रहजनक इति। ततः सावधानैर्भाव्यमिति बोध्यत इत्यर्थः ॥५५॥५६॥५७॥५८॥ विश्वामित्रेण शुनः–

अजीगर्त्तकथा प्रोक्ता विश्वामित्रस्तु पुष्टिगः ।
यजनं दोषनिर्हृत्यै विसर्गे स विचारितः ॥५९॥
ऋत्विजस्तु ततः पुष्टाः सर्व एव निरूपिताः ।
सगरस्तु ततः श्रेष्ठः सागरो यत्सुतैः कृतः ॥६०॥
स्थिरकार्यस्य कर्त्ता यः स श्रेष्ठोऽत्र निरूप्यते ।
पुत्रापराधो गरता योगभ्रष्टजनेस्तथा ॥६१॥
असमञ्जस इत्युक्तो वंशकर्त्ता पितुः सुखे ।
कर्मज्ञानादिकं तत्र प्रक्रियाया विरोधतः ॥६२॥

शेफमोचनस्य तात्पर्यमाहुः विश्वामित्रस्तु पुष्टिग इति । एतज्ज्ञापयितुं विश्वामित्रान्मोचनं तथा चोपलक्षणविधयाऽन्यदपि तत्कृतमेवं ज्ञातव्यमित्यर्थः । दोषनिर्हृत्या इति सत्यप्रमाददोषनिवारणाय । विसर्गे स विचारित इति प्रमादादन्यकर्तृकमित्यनेन विचारितः । तथा चाक्रमवादेन यथा वेनो दुष्टोभूत्तथा रोहितो दुष्येतेति तन्निवृत्त्यर्थं याग इत्यर्थः ॥५९॥ उक्तोपष्टम्भाय यागनिवर्त्तकानां स्वरूपमाहुः–ऋत्विज इत्यादि । पुष्टा इति भगवदनुगृहीतत्वादितरानुग्राहकाः । तथा च किञ्चिदपचारेऽपि ततः पूर्त्तिरित्यर्थः । एवं दशभिः प्रथमाध्यायविचारे शुनःशेफमोचकत्वं हरिश्चन्द्रस्योत्तमकक्षानिवेशाय विचारितम् ॥

(अ. ८) अतः परं त्रिभिर्द्वितीयाध्यायं विचारयन्तो हरिश्चन्द्रात्सगरोत्कर्षमाहुः–सगर इत्यादि ॥६०॥ सुतैः सागरकरणे हरिश्चन्द्रात्कथमुत्कर्षमित्यत आहुः-स्थिरेत्यादि । पूर्वं दैत्यानामर्णवे वसतामुपद्रवेण देवप्रार्थनया समुद्रोऽगस्त्येन पीतः । ततः शुष्कीभावे द्वीपान्तरेऽन्नत्यानां गमनादिभिर्मर्यादाभङ्गोऽन्यत्र पुराणे प्रतिपादितः स जायमानः सागरकरणेन वारित इति चिरकालस्थायिकार्यकर्तृत्वेन पूर्वस्मादधिक इत्यर्थः । गरतेति कालकूटविषस्य दैत्यत्वं पूर्वस्कन्धे प्रतिपादितमिति तदंशभूतगरसाहित्येन सगरस्योत्पत्तेस्तस्याऽयं भाव इत्यर्थः । द्वितीयमुत्कर्षमाहुः–योगेत्यादि ॥६१॥ सुख इति सुखार्थम् । तथा च ‘ शुचीनां श्रीमतां गेहे ’ इति गीतावाक्यात्तादृशजन्मनाऽप्येतस्योत्कर्ष इत्यर्थः । ननु चक्रवर्तित्वादिना मरुत्तस्यवास्यापि श्रैष्ठ्यं कुतोऽत्र नाङ्गीक्रियत इत्यत आहुः–कर्मेत्यादि । अस्मिन् प्रकरणे परोपकृत्यैवोत्कर्षो विवक्षितत्वात्तथेत्यर्थः ॥६२॥ एवं द्वितीयो विचारितः ।

न मुख्यं भवितुं युक्तं महत्त्वख्यापकं परम् ।
अंशुमांश्च दिलीपश्च बीजशुद्ध्यै निरूपितौ ॥६३॥
भगीरथस्त्वत्र मुख्यो भागीरथ्याः प्रवर्त्तकः ।
भागीरथ्याः स्वरूपं तु प्रथमे टीकयोदितम् ॥६४॥
तादृशार्थप्रवृत्तिर्हि भक्तेः कार्यमिहोत्तमम् ।
मर्यादाभक्तिमार्गस्य काष्ठा गङ्गा परा मता ॥६५॥
ग्राहिका शक्तिरस्यां हि तेन पापस्य सङ्ग्रहः ।
भक्तेभ्य एव तद्दानं तेन पूर्वं निवारितम् ॥६६॥

(अ. ९) अतः परं सार्द्धैकादशभिस्तृतीयाध्यायं विचारयन्ति अंशुमानित्यादि । बीजशुद्ध्या इत्यनेनैतयोर्भगीरथशेषत्वसूचनेन स्वरूपं द्वितीयाध्यायोक्तवदिति ज्ञापितम् । प्रथम इति प्रथमस्कन्धे । 'या वै लसच्छ्रीतुलसीविमिश्रे'ति श्लोके ॥६३॥६४॥ तादृशार्थप्रवृत्तिरिति भगवच्चरणरेणुविमिश्रजलात्मकसकललोकपावनार्थं प्रवृत्तिः । इहेति भगीरथे । ननु 'या वै लस'दित्यादौ गङ्गायाः सर्वपावनत्वस्य सुप्रसिद्धत्वात् । किञ्च 'अहं न सुत्रं यास्ये नरा मय्यामृजन्त्यघम् । मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यता'मिति पापसंसर्गबोधनवाक्यं कुत इत्यत आहुः—ग्राहिकेत्यादि, जले द्रव्यग्राहिकाशक्तिः प्रत्यक्षसिद्धा, तथा तस्याध्यात्मिकाधिदैविकयोर्गुणकर्मग्राहकत्वमभिप्रेत्य गङ्गया तथोक्तमित्यर्थः । ननु तथापि भगीरथोक्तौ वैपरीत्येन कथमुत्तरमित्याकाङ्क्षायामाहुः—भक्तेभ्य इत्यादि । अयमर्थः, गङ्गया हि स्वजलस्योपचीयमानतया भूभेदकत्वं राज्ञोऽनिष्टरूपं पूर्वमुक्तम् । ततः स्वस्मिन् सकृच्चरणसम्बन्धात्परपापहरणसामर्थ्ये पुनस्तत्सम्बन्धाभावात्तस्य पापस्यानिर्गमे मम शक्तिकौण्ठ्यमिति स्वानिष्टमुक्तम् । तत्र शक्तिकौण्ठ्ये राज्ञोऽपि नेष्टसिद्धिरिति स दोषः प्रबल इति तत्परिहारार्थं चरणस्य साक्षात्सम्बन्धाभावेऽपि सर्वदा तत्सम्बन्धेनानायासादेव भावीत्यभिप्रेत्य 'हरन्त्यघं तेऽङ्गसङ्गा'दिति कथनात्तेषु भक्तेषु तद्दत्वा मृजेति तस्या हितार्थं पूर्वं तन्निवारितम् । एवं तदानुकूल्ये जाते पश्चाद्धरेः कपिलात्मस्याज्ञां गङ्गाम्भोऽहन्तीत्यव्यभिचरितविपर्यां ज्ञात्वा तत्रोपायमात्रं चिन्तनीयमनुसन्धाय 'धारयिष्यति ते वेग'मित्यनेन भूभेदनं निवारितमिति योजना । तथा च दोषगुरुत्वलघुत्वविचारेण वैपरीत्यमित्यर्थः ॥६५॥६६॥

**पश्चाज्ज्ञात्वा हरेराज्ञां सतामिच्छा प्रवर्तिता ।**
**मूलभूतो जीवराशेस्ततः सर्वार्थमेव हि ॥६७॥**

ननु शिवाभिप्रायमविज्ञाय कथमेवं राजोक्तवानित्यत आहुः–सतामित्यादि । स शिवो भगवदाज्ञानुमितयेच्छया प्रवर्तितो धारयिष्यति । किञ्च जीवराशेर्मूलभूतस्ततः सर्वार्थं च धारयिष्यतीति तत्स्वरूपं ज्ञात्वा स्वभावनिश्चयेन तथोक्तवानित्यर्थः । जीवराशिमूलभूतत्वं च 'यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु'त्योतप्रोतत्वकथनाज्ज्ञेयम् । अत्र गमकमाहुः–सर्वार्थमेव हीत्यादि । हि यतो हेतोर्मूले 'सर्वलोकहितः शिवः । दधारावहितो गङ्गा'मित्युक्तम्, येन हेतुना सर्वे सागरा विमोचिताः । अतः सर्वहितार्थमेव धारणमित्यर्थः ॥६७॥

**का. ६६-६७ निबन्धकठिनांशविवेचनम् ।**

(का ६६) नवमस्कन्धे नवमाध्याये भक्तेभ्य एव तद्दानमित्यादि पूर्वश्लोके गङ्गाया जलरूपत्वात् ग्राहिका शक्तिरस्ति न तु दाहिका, तेन अन्येषां पापं स्वयं सङ्गृह्णाति तान् नि पापान् कर्तुमितिनिरूपितम्, इदं च गङ्गाया अनिष्टं भगीरथेन पूर्वं निवारितं 'साधवो न्यासिनं' इतिश्लोकेन तन्निबन्धे विवृतं भक्तेभ्य एव तद्दानमित्यनेन, भक्तास्त्वयि स्नास्यन्ति तदा भक्तेभ्यो हेतुभूतेभ्यस्तव पापखण्डनं भविष्यतीति, मूलेवक्तव्य यस्य यत् तद् राज्ञ अनिष्टं, तत् तु कपिलाख्यस्य हरेराज्ञां ज्ञात्वा भगीरथेन पश्चात् निवारितमित्यर्थ, ज्ञात्वा हरेराज्ञामितिपदत्रय अग्रिमश्लोकेपि सम्बध्यते, तथा च शिवोपि हरेराज्ञां ज्ञात्वा गङ्गां धारयामास एवमर्थं सम्पद्यते, तत्र मूले भगीरथेन शिवस्य विशेषणमुक्तं गङ्गाधारणे हेतुभूतशरीरिणामात्मेति, आत्मत्वात् हितकारीति धारयिष्यतीत्यभिप्रेत्य तद्विशेषणं निबन्धे विवृतं सतामिच्छाप्रवर्तिता इत्यनेन, यद्यपि साधारणेन सर्वलोकहितकरस्तथापि सतां तु इच्छया प्रवर्तते, असतामपि स्वेच्छया हितं करोति न तु तेषामिच्छया प्रवर्तते असतां विरुद्धेच्छावत्त्वात्, सतां तु अविरुद्धेच्छावत्त्वात् तेषामिच्छया तद्धितार्थं प्रवर्तते इत्यर्थ, इयं व्यवस्था अन्येषु कार्येषु, गङ्गाधारणकार्ये तु स्वस्यापि हितमस्तीत्यभिप्रायेण भगीरथेन उत्तरार्धमुक्तं 'यस्मिन्नोत'-मित्यादि, तत् निबन्धे विवृतं मूलभूतो जीवराशेरित्यादिपादत्रयेण, जीवराशेर्ब्रह्माण्डस्य मूलभूतः, अत भगवच्चरणजलरूपा पवित्रा गङ्गा सर्वार्थमेव स्वार्थं परार्थं च धारयामासेत्यर्थ, येन सर्वे विमोचिता इति स्वयमपि दोषान् मुक्तं 'शिवः शिवोऽभू'दितिवाक्यात्, अन्येपि विमोचिता दोषराहित्येन यथाधिकारं स्वर्गं भगवत्पदं च प्रापिता इत्यर्थ, तदेतत् सर्वं शुकेनाप्यनूदितं, 'तथेति राजाभिहितमि'त्यनेन सतामिच्छा प्रवर्तितत्वं, 'सर्वलोकहितं अवहित' इत्यनेन अन्येषां हितकर्तृत्वरूपं सर्वार्थत्वं, 'हरेः पादपूतजलं'मित्यनेन स्वहितकर्तृत्वं चेति ।

धारयामास तां गङ्गां येन सर्वे विमोचिताः ।
अन्यथा देहसम्बन्धेनाऽऽत्मगामि भवेज्जलम् ॥६८॥
अविद्यां जीवसम्बद्धां कथमेव विमोचयेत् ॥
विद्यया चेतिवाक्येन गङ्गाऽविद्याविमोचिका ॥६९॥
देहभावे दृढे तु स्याद्भक्तानां कृष्णदासता ।
सायुज्यमन्यथा तस्मिन् गङ्गातीरे न संशयः ॥७०॥
दैत्यानामूर्ध्वगमनं विचित्रं कार्यमुच्यते ।
अतः सर्वगतिः प्रोक्ता नैतावदिह कारणम् ॥७१॥
सौदासस्य कथा त्वत्र भक्तिमुख्यत्वसिद्धये ।

नतु धारणवाक्ये अवधानकथनस्य किं प्रयोजनमत आहुः—अन्यथेत्यादि । तथा च यद्यनवहितो भवेत्, जलं देहसम्बन्धि भवेत्, तेन च नात्मगामिशिवैकहितं जलं भवेत् । ततस्तस्य शिवनिर्माल्यत्वे तज्जलं जीवसम्बद्धामविद्यां कथमेव मोचयेत् । तथा च यथा बहूनामुपयोगार्थं किञ्चिन्महद्वस्तु शिरसि धृत्वा सावधानतया आनीयते न तु तत्स्वयं भुज्यते तथा धारणार्थमवधानकथनमित्यर्थः । इयानेव भागीरथ्यां गोदावरीतो भेदः । गोदावरी शिवनिर्माल्यतामापन्ना, पुनर्वराहतीर्थे वराहसम्बन्धेन मुक्तदोषाऽभूत् । भागीरथी तु निर्माल्यभावमनापन्नैवेति । इदं च गोदामाहात्म्यादवगन्तव्यम् ॥६८॥ अवहितपदेन सिद्धमर्थमाहुः—विद्ययेत्यादि । तथा च शिवसम्बन्धसत्त्वेऽपि भोग्यत्वेनासम्बन्धाद्यथा विद्या शिवदत्ता पवित्रत्वान्मोचिका, तथा गङ्गाऽपीत्येतद्बोधनायावहितपदमित्यर्थः । अधिकारिभेदेन गङ्गायाः फलद्वयमाहुः—देहेत्यादि ॥६९॥७०॥ ननु यदर्थं गङ्गा भगीरथेनाऽऽनीता तेषां तु 'दिवं जग्मु'रिति वाक्ये स्वर्गगमनमात्रं फलमुच्यत इति कथं पूर्वोक्तफलदत्वमित्यत आहुः—दैत्यानामित्यादि । नैतावदिह कारणमिति । इह गङ्गायां कारणं भावप्रधानो निर्देशः, कारणत्वमेतावन्न किन्तूक्तमर्थमेव तत्कार्यमिति तत्कारणत्वमपि । 'न चैतत्परमाश्चर्य'मिति वाक्याभ्यामत्र तथैव बोधनादित्यर्थः ॥७१॥

एवमुत्कर्षो भगीरथकथायां विचारितः । अग्रे कल्माषपादखट्वाङ्गयोः कथायां तदभावात्तयोः किं प्रयोजनमत आहुः—सौदासस्येत्यादि । तथा च ज्ञानयुक्तभक्तिमुख्यत्वज्ञापनाय सौदासकथा तदुभयं खट्वाङ्गे फलितमिति ज्ञापनाय

स्त्रीप्राधान्यं भक्तियोगो ज्ञानयुक्तत्वसिद्धये ॥७२॥
ब्रह्मबीजाद्वंशकथा खट्वाङ्गे हि द्वयं स्थितम्।
क्षणात्कृष्णस्मृतौ तस्य मुक्तिरुक्ताऽनपायिनी ॥७३॥
परमा भक्तिमार्गस्य काष्ठेयमिति निश्चयः।
ईशानुरूपभक्तानां कथेयं विनिरूपिता ॥७४॥
ईशस्य चेत्कथा न स्यात्तदनुत्वं न वै भवेत्।
तत ईशकथां प्राह द्वाभ्यां ज्ञानेन संयुताम् ॥७५॥
क्रियाशक्तिर्भक्तिनिष्ठा ज्ञानं चेति त्रिभिः क्रमात्।
जनकाज्ञानरूपा हि भक्तिरूपा तथोन्नतिः ॥७६॥
क्रियारूपं चरित्रं हि तदादौ सुनिरूपितम्।
मध्यन्दिने हरेर्जन्म सूर्यवंशे तदा रविः ॥७७॥
अत्यन्तं तपतीत्यस्य स्वास्मिन् तेज उपाददे।
यावन्तो धर्मसचिवास्ततो नाशमुपागताः ॥७८॥
नवम्यां भगवज्जन्म नवग्रहबलाय हि।
पुष्ये षड्गुणसंयुक्तश्चतुमूर्त्तिर्हरिर्विभौ ॥७९॥

खट्वाङ्गकथेत्यर्थः ॥७१॥७२॥७३॥७४॥ एवं सार्द्धैकादशभिस्तृतीयाध्यायो विचारितः। तेनैकोनषष्टिभिर्नवाध्यायीस्था ईशानुवर्त्तिकथा विचारिता।

(अ. १०) अतः परमष्टाविंशतिभिरीशकथां विचारयन्ति-ईशस्येत्यादि। एतेनेशानुकथेशकथयोर्निर्वाह्यनिर्वाहकभावः सङ्गतिरित्युक्तम्। ज्ञानेन संयुतमिति तदग्रिमाध्यायस्यार्थः ॥७५॥ अध्यायार्थानाहुः-क्रियेत्यादि। एतदेव विविच्य दर्शयन्ति जनक इत्यादि। जनका वंशजनकाः कुशादयः। उन्नतिर्वंशवृद्धिः। आदावितिप्रथमं द्वाभ्याम्, तत्र पूर्वं प्रमाणान्तरोक्तानां जन्मसमयतिथिनक्षत्राणां तात्पर्यमाहुः-मध्यंदिनेतिसार्द्धाभ्याम्, अस्येति रवेः। तत इति तेजसः सकाशात्। पुष्य इति 'सिंहो यथा सर्वचतुष्पदानां तथैव पुष्यो बलवानुडूना'मिति ज्योतिर्वाक्ये तस्य बलवत्त्वोक्ते तस्मिन्नित्यर्थः। अगस्त्यसंहितायां यद्यपि पुनर्वसौ जन्मोक्तं तथापि तत्कल्पान्तराभिप्रायं ज्ञेयम्। भविष्योत्तर एकादश्यां वामनावतारवदिति ॥७६॥७७॥७८॥

दोषाभावाय नारीणां लङ्कास्थानान्निरूप्यते ॥९१॥
भाषा तु लौकिकी त्वन्या तथा स्यात्कृतार्थता।
इति दर्शयितुं रामचरितं तादृशं जगौ ॥९२॥
वैदिकं चापि सुमहदश्वमेधादिकं तथा।
सहस्रं च शतं चैवमश्वमेधांश्चकार ह ॥९३॥
लौकिकं भावमापन्नो लौकिकानां विमोक्षणे।
सर्ववेदसयज्ञेन राम एवेष्टवान् भुवि ॥९४॥
ज्ञानाधिकारिविप्रेभ्यो ज्ञानं चैवाऽतुलं ददौ।
ऊतिन्यायेन भगवान् सीतां निःसारयन् क्वचित् ॥९५॥
लौकिकीं स्थापयन् भाषां लोकवार्तामथाऽशृणोत्।
भक्तिमार्गप्रभुर्यर्हि लौकिकं चेत्प्रकाशयेत् ॥९६॥

सेतुबन्धनप्रयोजनमाहुः—दोषाभावायेत्यादि। यदि भगवान् सेतुं न बध्नीयात्तदाऽन्यत्र रावणमारणे तासां भगवद्दर्शनाभावेन माहात्म्याज्ञानेन च दोषो नापैयादतस्तदर्थं तथेर्थः ॥९१॥ लौकिकरीतिकान्यचरितकथनतात्पर्यमाहुः—भाषेत्यादि। तथा च यथा गोप्यः कामाद्भयात्कंस' इत्याद्युक्त्वाऽग्रे तस्मात्केनाऽप्युपायेन 'मनः कृष्णे निवेशये'दिति कृतार्थतायोक्तम्, तथा चात्रापि लौकिकवैदिकरीतिकं चरित्रं नानाजगत्कृतार्थतायोक्तमित्यर्थः ॥९२॥९३॥ विमोक्षण इति। विशेषेण मोक्षणार्थम्। सर्ववेदसयज्ञेनेति सर्वस्वदक्षिणेन। ननु सन्तु सर्वा लीलास्तथापि निरपराधसीतानिःसारणप्रयोजकलोकवार्ताश्रवणलीला किमर्थेत्यत आहुः—ऊतिन्यायेनेति। देवीरूपाया रमाया अयं मत्स्यपुराणे 'लक्ष्मीर्नारायणं त्यक्त्वे'त्यनेनोक्तम्। पाद्मे पातालखण्डे रामाश्वमेधे शुकमिथुनं सीतया निरुद्धं धाल्ये, तयोः शुकी मृता, तदा शुकः शप्तवान् 'त्वं भर्त्रा वियोक्ष्यस' इति स एव शुको मृतः पुनर्धावको भूत्वोत्पन्नस्तादृशीं वार्तामुक्तवानित्युक्तम्। तत्सूचितवासनानिवारणीयेति तदर्थं सा लीला। तथा चैवं भक्तक्लेशदायकतया प्रतीयमानाऽपि सा परिणामसुखदत्वेन गूढेति न दोषलेश इत्यर्थः। एवं लक्ष्मणत्यागलीलाऽपि ज्ञातव्या ॥९४॥९५॥ कपिसङ्ख्यादिलीलातात्पर्यमाहुः—भक्तिमार्गप्रभुरित्यादि।

तदैव लौकिकैर्भक्तिः कर्तुं शक्या न चान्यथा ।
इति निश्चित्य रामो हि स्थानभक्तौ निरूपितः ॥९७॥
चतुर्मूर्तेश्चरित्रं हि वंशश्चापि निरूप्यते ।
वंशेऽपि चरितं तस्य तेनाध्यायत्रयं मतम् ॥९८॥
भक्तिमार्गे स्वामिधर्मः सुकृतज्ञत्वलक्षणः ।
रघुनाथे स नाऽन्यत्र तेनेशोऽत्र निरूपितः ॥९९॥
लौकिकोऽत्र गुणः शुद्धो गृहीतो न तु दोषयुक् ।
अतो भ्रातृकथाप्रश्नो भ्रातृसौख्यस्वमुत्तरम् ॥१००॥
गृहे स्थितस्य राज्ञो हि सन्मानं न तु लौकिके ।
अतो लोकस्य सम्मानमन्ते आह विशेषतः ॥१०१॥

भरतलक्ष्मणशत्रुघ्नचरित्राणां श्रोतव्यतायाहुः-चतुर्मूर्तेश्चरित्रं हीति । हिर्हेतौ । तेन तदपि श्रीरामचरित्रत्वेनैव श्रोतव्यमित्यर्थः ।

(अ. १२) ननु भगवच्चरित्रमत्र द्वाभ्यामुक्तं तृतीये वंश्या[1] वंशश्चोक्त इति तस्येशानुकथात्वमेव न लीलाकथात्वमित्यत आहुः-वंशोऽपीत्यादि । तथा च सर्गो लीला तथा वंशोऽपीति तस्यापि चरितत्वात्तथेत्यर्थः । नन्वीशानुकथाया लक्षणम-'वतारानुचरितं तद्यस्मिन्कस्मिन्नवतारचरित्रे निरूपिते सिद्धं भवतीति रामचरित्रमेव कुत उक्तमित्य आहुः-भक्तिमार्ग इत्यादि । अन्यत्रेति अवतारे । ईश इति पुरुषोत्तमः ॥९६॥९७॥९८॥९९॥ ननु राज्ञा कथं स भगवान् राम इति प्रश्नः किमभिप्रेत्य कृत इत्याकाङ्क्षायामाहुः--लौकिक इत्यादि । अत्र श्रीरघुनाथे लौकिको गुणो राजत्वलक्षणः शुद्ध एकरसः सर्वसाधारणो गृहीतः, न तु दोषयुक् कादाचित्कः, अतो यदि पूर्णः प्रादुर्भूतः स्यात् सर्वानेवाविशेषेण रञ्जयेत् सर्वे चाविशेषेण रक्ताः स्युः । भ्रातरोऽपि दायादा न भियेरन्निति ज्ञातुं प्रश्नस्तत्र प्रकृतिसौख्यं स्यादपि न तु भ्रातृसौख्यं सति तस्मिन्नन्यदनुक्तसिद्धमेवेति ज्ञापयितुं भ्रातृसौख्यत्वमुत्तरं, सौख्यपदं सुख एव शक्तम्, प्रियतापदं प्रेम्णीव । तेन भ्रातृसुखभावस्तत्रोत्तरम् । मुख्यत्वमिति पाठे तु तेषामेव मुख्यत्वमिति तदेव प्रजानामपि सौख्य उत्तरम् । तथा च लौकिकधर्मविचारेणाऽपि पुरुषोत्तमत्वनिर्द्धारार्थं प्रश्न उत्तरं चेत्यर्थः ॥१००॥ प्रजानां भगवत्यत्यनुरागस्यान्ते यत्कथनं तत्तात्पर्यमाहुः--गृह इत्यादि । तथा चेदमपि ईशत्वस्यैव ज्ञापकमित्यर्थः । ननु स्वयं भगवान् यत्र प्रादुर्भवति तत्र सेवार्थं देवाः प्रादुर्भवन्ति यथा श्रीकृष्णावतारे

[1] वंशस्या ।

योगिनां ध्यानविषयः सोऽवतारो न चाऽपरः।
इति दर्शयितुं पूर्वं नत्वा चरितमुक्तवान् ॥८०॥
योगिनां रक्षकं रूपं तदैवेति तथा वचः।
मोहकं बहुलं तत्र तेन वीर्यप्रकाशकम् ॥८१॥
भक्त्यर्थं संहितायां हि तवैव विनिरूपितम्।
ताडकाया वधो नोक्तः स्त्रीत्वान्नास्त्यत्र पौरुषम् ॥८२॥
मारीचरूपस्तत्रैव विश्वामित्राध्वरे हतः।
रूपान्तरेण पश्चात्तु कारणार्थं तथाऽऽकृतिः ॥८३॥
धनुःसज्जीकृतौ तुल्यो हरेण न ततोधिकः।
अतो बभञ्ज सीतायै जितः कन्यां हरो ददौ ॥८४॥
विवाहादिसुखं लोके क्षत्रियाणां विशेषतः।
अतः क्षत्रियभावाय सीतार्थं भार्गवैर्मृधः ॥८५॥
अवतारेण युद्धं हि मोहनार्थं विनिश्चयः।

नमनपूर्वकं चरित्रकथनस्य तात्पर्यमाहुः—योगिनामित्यादि। 'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते' इति श्रुतेस्तथेत्यर्थः। तथा वच इति 'अवतारः' इति योगिरक्षणवचः। चरित्रस्वरूपमाहुः—मोहकमित्यादि ॥८०॥८१॥८२॥ ननु 'मारीचाद्या निशाचरा' श्लो. ९ हता इत्युक्त्वा पुन'र्मारीचमाशु विशिखेने'ति पुनर्हननं यदुक्तं तत्कथं युज्यते तस्यैवाभावादित्यत आहुः—रूपान्तरेत्यादि। पश्चाद्रूपान्तरेण हरिणरूपेण तथाकृतिः, आश्रमतो भगवदपकर्षण-कारणार्थं सीतावियोगरूपमोहकलीलोत्पादनार्थम्। तथा च सैव (एवं) तत्करणमपि मायिकमित्यर्थः ॥८३॥८४॥ ननु भार्गवो रामो हरशिष्यो हरे जिते जितप्राय एवेति किं तन्मृधलीलयेत्याकाङ्क्षायामाहुः—विवाहादीत्यादि। तथा च गांधर्वो राक्षसश्च विवाहः क्षत्रियाणामुत्कृष्टौ। तत्रैकपत्नीव्रतस्य भगवतो विवाहे जनकदानेन जाते गान्धर्वाभावेनोत्कर्षो न जात इति तदुत्कर्षार्थं राक्षसत्वाय मृध इत्यर्थः ॥८५॥ ननु भृगुवर्यस्यावतारत्वात्सौख्यमेवोचितं न तु मृध इत्यत आहुः अवतारेणेत्यादि। मोह-

लोके प्राकृतभावश्चेत्तच्छौर्यं स्नेहबोधकम् ॥८६॥
देहरक्षत्वसिद्ध्यर्थमुभयोः कलहः परः ।
अथवा रघुनाथो हि पुरुषोत्तम उच्यते ॥८७॥
गुणावतारसम्मत्यै विश्वामित्रात्तथा शिवात् ।
भार्गवादपि यत्तेजः स्वस्मिन्नेव निरूपितम् ॥८८॥
वनवासादिलीला तु कार्यार्थं मोहनाय हि ।
सीताया हरणं नास्ति नर्येण सान्तिकं कृता ॥८९॥
तेनैव निर्मिता माया तामग्नौ विनिवेश्य तु ।
हत्वा रावणमत्युग्रं स्वां गृहीत्वा पुरं ययौ ॥९०॥
सेतुबन्धनमत्रैकं चरितं परमं मतम् ।

नार्थमिति स्वस्यावतारत्वगोपनार्थम् । ननु लोके प्राकृतभावस्याधुनापि प्रकटनादेव मोहनसिद्धेर्न तु जये इति युद्धस्य तादर्थ्यं न शक्यवचनमित्यत आहुः-लोक इत्यादि। स्नेहबोधकमिति । स्नेहेन स्वरूपगुप्तिनिवारणेनावतारज्ञापनफलकमित्यर्थः ॥८६॥ ननु स्नेहार्थत्वे वाग्वादो न सङ्गच्छत इत्यत आहुः-देहेत्यादि । एवं द्वितीयस्कन्धानुसारेणावतारत्वमङ्गीकृत्योक्तम् । श्रुत्यनुसारेणाहुः-अथवेत्यादि यत्तेजः स्वस्मिन्नेव निरूपितमिति, यत्तेजोऽधिकं निरूपितं तत्पुरुषोत्तमत्वे गुणावतारसम्मत्यै स्वस्मिन् श्रीरघुनाथ एव निरूपितम् । तथा च तेन सर्वसामञ्जस्यमिति भावः ॥८७॥॥८८॥ ननु पुरुषोत्तमत्वे वनवाससीताहरणादिलीलानामसङ्गतिरित्यत आहुः कार्यार्थमिति । अहल्याशबर्याद्युद्धारसेतुबन्धरक्षोवधादिकार्यार्थम् । कथं मोहनायेत्यपेक्षायां तथात्वमुपपादयन्ति-सीताया इत्यादि । नर्येणेति गार्हपत्येन । नराणां हितो नर्यः, 'नर्यं प्रजां मे गोपाय'ति गार्हपत्यस्तुतेर्वेदभाष्ये तथा व्याख्यानात् । अन्तिकं कृतेति स्वनिकटे स्थापिता ॥८९॥ तेनेति गार्हपत्येन, इदं सर्वं ब्रह्मवैवर्ते प्रकृतिखण्डे उक्तम् । अग्निरुवाच 'भगवन् मयि विन्यस्य छायां रक्षान्तिकेऽधुना । दास्यामि सीतां तुभ्यं च परीक्षासमये पुनः । देवैः प्रस्थापितोऽहं च न विप्रोऽहं हुताशनः । रामस्तद्वचनं श्रुत्वा न प्रकाश्य च लक्ष्मणम् । स्वीचकार च स्वच्छन्दहृदयेन विदूयता, वह्नियोगेन सीताया मायासीतां चकार ह । तत्तुल्यगुणसर्वाङ्गीं ददौ रामाय नारद । सीतां गृहीत्वा प्रययौ गोप्यं वक्तुं निषिध्य चे'त्यादि ॥९०॥

कुशप्रभृतिभूपालास्त्रिंशच्चाव्यास्तदन्वये ।
एकाधिका देवगणास्ततो जाता इतीरितम् ॥१०२॥
तत्रोक्ता योगनिष्ठा हि बोधनात्करणादपि ।
ज्ञानशक्तिस्तु सीता हि जनकान्वय सम्भवा ॥१०३॥
ज्ञानशक्तिर्हरेरुक्तं जनकान्वय उच्यते ।
ज्ञानमिश्रा तु या भक्तिः सा मुख्येति निरूप्यते ॥१०४॥
निमेः कथा ततः प्रोक्ता ज्ञानवैराग्यसंयुता ।
गुरुवाक्यातिरेकेण यज्ञः सिद्ध्यति नैव हि ॥१०५॥
अतः शापप्रसङ्गो हि ज्ञानित्वात्तस्य चोच्यते ।
भक्तेः प्रकरणार्थत्वाद्वसिष्ठोऽपि विमुच्यते ॥१०६॥
तथा निमिर्ददौ शापं भक्तौ सर्वमबाधकम् ।
अतो गतिर्निमेः श्रेष्ठा न वशिष्ठस्य कर्हिचित् ॥१०७॥
भक्तिमार्गस्य मुख्यत्वाद्वेश्यापुत्रो न दुष्यति ।

यदुक्तित्याकाङ्क्षायामाहुः–कुशप्रभृतीत्यादि। (अ. १२) तृतीयाध्याये ज्ञानमुच्यत इति यदुक्तं तन्निगमयन्ति–तत्रोक्ता इत्यादि। ननु वंश्यानां ज्ञानप्राधान्यं कुत इत्यपेक्षायामाहुः–ज्ञानेत्यादि ॥१०१॥१०२॥१०३॥

(अ. १३) अतः परं त्रयोदशाध्यायतात्पर्यमाहुः–ज्ञानशक्तिं हरेरित्यादि। तत्र पूर्वं निमित्तकथाया विशेषतः कथनस्य तात्पर्यमाहुः–ज्ञानमिश्रेत्यादि। निरूपण इति निरूपणार्थम्। ज्ञानवैराग्यसंयुतत्वं दर्शयन्ति–गुर्वित्यादि। तथा चासिद्धिं ज्ञात्वापि यज्ञकरणोन्मया तस्य वैधत्वमात्रेण यज्ञकरणं नत्वासक्त्येति वैराग्यं सूचितम्। ज्ञानित्वं प्रसिद्धमेव एकादशस्कन्धे योगीश्वरसम्वादे तस्य भक्तत्वमपि स्फुटम्। अतो ज्ञानमिश्रभक्तिनिरूपणार्थं ज्ञानवैराग्यसंयुता तत्कथोच्यत इति युक्तमित्यर्थः ॥१०४॥१०५॥ नन्वीदृशत्वे निमेर्वसिष्ठः कमिति शप्तवानित्यत आहुः भक्तेरित्यादि। तथा च भक्तत्वमननुसन्धायैव शप्तवानित्यर्थः। वसिष्ठमोहे भक्तेः कर्मापेक्षया बलवत्त्वे च फलं गमकमाहुः–अतो गतिरित्यादि। ननु यदि वसिष्ठस्यैवं निकर्षस्तदा तत्कुले कथं व्यासावतारः। कर्मापेक्षया च यदि भक्तेरेव प्रबलत्वं तदा भक्तानामुत्कृष्टकुलत्वापत्तिश्चेत्यत आहुः–भक्तिमार्गस्येत्यादि। वेश्यापुत्र इति

भगवद्दर्शने दोषो निमेश्चापि भविष्यति ॥१०८॥
ज्ञानस्य च व्यवच्छेदस्तस्माद्व्राह्मण उत्तमः।
लौकिकाः कर्मनिष्ठाश्च पश्चादीशानुगाः स्मृताः ॥१०९॥
ज्ञाननिष्ठास्त्वग्रतो हि तस्मादेवं निरूपिताः।
पुष्टिमार्गस्थितान् भक्तान् वक्तुं सोमान्वयो मतः॥११०॥
जन्मना कर्मणा शुद्धा यदि भक्ता भवन्ति हि।
सानुभावास्तदा पुष्टाः सेवका मुरवैरिणः ॥१११॥
सोमो ज्ञानांशसम्भूतो ह्यत्रिनेत्रसमुद्भवः।

उर्वशीपुत्रः। तथा च वसिष्ठोऽपि भक्तिमार्गीय एवेति न तस्यापि निकर्षः। किन्त्वज्ञानेन भक्तद्वेषाद्गतिमात्रं सकृदपकृष्टं न तु तदग्रे कश्चित्प्रतिबन्धः। भक्त्या निमेरुत्तमगतावप्यज्ञानेन ब्राह्मणद्वेषात्रिमेरपि लोकलोचनवास्तव्यतया निमेषप्रयोजकत्वेनाग्रे भगवद्दर्शन इत्यादिनाक्तो दोषो भविष्यतीति भक्तैर्न भक्ता द्वेष्टव्या नाप्युच्छृङ्खलैर्भाव्यमेतद्बोधनायैव ज्ञानवैराग्यवती शापकथोक्ता न तु सा भक्तिपुरस्कृता तस्माद्ब्राह्मणो ब्रह्मज्ञो वसिष्ठ उत्तम एवेति न पूर्वोक्तो दोष इत्यर्थः ॥१०६॥१०७॥१०८॥ तद्वंश्येषु व्यवस्थामाहुः–लौकिका इत्यादि। पश्चादिति निमेरनन्तरं ह्रस्वरोमान्ताः। अग्रत इति अवतारोत्तरं सीरध्वजमारभ्य कृतिपर्यन्ताः। एवं निरूपिता इति यज्ञरूपेण कर्मणाऽवतारात्पूर्वं योगरूपेण कर्मणा च ततः परे, ज्ञाननिष्ठा द्वन्द्वमुक्ता ईशानुवर्तिनः सूर्यवंशे इक्ष्वाकुमारभ्य कृत्यन्ता उक्ता इत्यर्थः ॥१०९॥ एवं सार्द्धचतुर्नवतिभिः सूर्यवंशनिरूपिका त्रयोदशाध्यायी विवृता, तेनैकं महाप्रकरणं सम्पूर्णम्।

अतः परं सार्द्धसप्तषष्ठिभिर्द्वितीयं महाप्रकरणं विचारयन्ति–पुष्टिमार्गेत्यादि। अत्र पुष्टिः पूर्णा ग्राह्या। 'पुष्टिः स्वार्था परार्था तु भक्तिः सा नवमे मते'ति षष्ठस्कन्धनिबन्धे कथनात्। ननु पूर्णभक्तौ तुल्यायां मोक्षरूपे फले लीलया परमसौख्ये च सर्वेषां तुल्ये मर्यादाभक्तेभ्यः पुष्टिभक्तेषु को वा विशेष इत्यत आहुः जन्मनेत्यादि॥११०॥१११॥ लक्षणाभूतं विशेषमुक्त्वोदाहरन्ति सोम इत्यादिद्वाभ्याम्। एतद्वंशे सोमस्य प्राथम्ये हेतुमाहुः–सोम इति। 'सोमोभूद्ब्रह्मणोंशेने'ति वाक्यात्, स ब्रह्मणोंश इति सृष्टिकर्तृत्वाद्वंशे प्रथम इति न, किन्तु भाविज्ञानं तस्यास्तीत्यतः

पुष्टिमार्गस्थितो यस्मात्प्रथमं विषमोऽभवत् ॥११२॥
कलङ्कभावस्तेनासीद्वस्तुतो यज्ञरूपधृक् ।
तस्माद् बुधादयो भक्ताः सानुभावाः प्रकीर्त्तिताः ॥११३॥
अत्राऽपि नवधा भक्ता द्वाभ्यां भार्गव उच्यते ।
दोषं बलात्तु भक्तानां यो नाशयति सर्वथा ॥११४॥
सोमवंशोद्भवायाश्च पुत्रो रामस्तु भार्गवः ।
मन्त्रैरपि क्षत्रियाणां मन्त्रिताच्च चरोरभूत् ॥११५॥
विपरीता गतिः पुष्टौ तत एकः पुरोच्यते ।

स तथेत्याहुः–ज्ञानांशेत्यादि । अन्यथा 'तस्माद् दृग्भ्योऽभवदि'तिचतुर्थस्कन्धोक्ताद्विलक्षणं तस्य जन्म न वदेदित्यर्थः । ननु ज्ञानांशत्वे कथं तस्य कलङ्कित्वमित्यत आहुः–प्रथममित्यादि । विषम इति 'प्रजापतेस्त्रयस्त्रिंशद्दुहितर आसन्नित्यु'पाख्याने तस्य रोहिण्यां प्रीत्या, सोमस्य वैराज्ञ इत्युपाख्याने अमावास्यायां पौर्णिमास्यां चाप्रीत्या वैषम्यनिरूपणात्स तथा । तथा च स तस्यागन्तुको दोषो न तु वास्तव इत्यर्थः । वास्तवं रूपमाहुः–यज्ञेत्यादि । अनुभावस्त्वनुपदमग्रे वाच्यः ॥११२॥ ॥११३॥ अथैकाध्यायस्य पूर्वं सुद्युम्नप्रसङ्गेनोक्तत्वादेकादशाध्याय्यामवान्तरप्रकरणानि विभजन्ते–अत्रापीत्यादि । तथा च चत्वारि प्रकरणानीत्यर्थः । तत्र भार्गवोत्तंसे क्षत्रियहननरूपातिक्रूरकार्यातिरिक्तकार्यादर्शनात्किं तत्रेशचरित्रम् येन प्रकरणभेदो, ब्राह्मणत्वेन च वंश्यत्वाभावात्तच्चरित्रस्य सामान्यलक्षणानाक्रान्तत्वेन कथं च स्कन्धार्थे निवेश इत्याकाङ्क्षायामाहुः–दोषं बलादित्यादि । तद्द्वयं पूर्वपक्षनिरासे ॥११४॥ ननु मातृविचारेण लक्षणे समन्वेतव्ये प्रियव्रतसुतायामूर्जस्वत्यां जातायां देवयान्यां जातानां यदुप्रभृतीनामपि तद्वंश्यत्वं स्यादिति नेदमतिव्याप्त्यादिनिवारकमित्याकाङ्क्षायामाहुः–मन्त्रैरपीत्यादि । तथा च ब्राह्मणक्षत्रियत्वादीनां देवत्वात्तस्य द्वितीयस्कन्धसुबोधिन्यामुपपादितत्वादत्र मन्त्रितचरुद्वारा क्षत्रियत्वनिवेशे पुत्रिकापुत्रन्यायेन 'अथ तर्हि भवेत्पौत्र' इतिवाक्याद् गाधिपुत्रार्थकक्षत्रियत्वस्यात्र प्राप्तौ सुखेन तद्वंश्यत्वे दोषपरिहार इत्यर्थः ॥११५॥ एवं करणे हेतुमाहुः–विपरितेत्यादि, तत एव हेतोः एकोऽध्याय ईशानुकथाबोधकः पुरोच्यते मध्ये द्वाभ्यां हरेः कथा ईशकथा प्रकरणं निदार्यच्यते, अग्रे च प्रकरणमनुसन्धायाष्टावध्याया वक्तव्याः,

अष्टौ चाग्रे तु वक्तव्या मध्ये द्वाभ्यां हरेः कथा ॥११६॥
अत्राऽऽविष्टो हरिश्चक्रे वंशं सरसमुत्तमम् ।
लक्ष्मीनारायणोत्पन्नो बुधोऽत्र विनिरूपितः ॥११७॥
अन्यथा सर्वदेवानां सम्मतिर्न भवेदिह ।
शुक्राचार्यस्य च तथा शिवस्याऽपि विशेषतः ॥११८॥
स्वकीयायां रसो नैव नापि तस्याः स्वभर्तरि ।
अतो रसमयं द्वन्द्वं ताराचन्द्रमसौ कृतम् ॥११९॥
सर्वेषां सम्मतिं ज्ञात्वा गुरुर्बाले स्पृहायुतः ।

नैवमन्यत्र । तस्मान्मर्यादावैपरीत्यज्ञापनमेवैवङ्करणे हेतुरित्यर्थः॥११६॥(अ.१४)एवम-वान्तरप्रकरणानि विभज्य वंशोत्कर्षं भक्तत्वमहानुभावत्वाभ्यां वक्तुं तत्र बीजमाहुः--अत्रेत्यादि । अत्र विनिरूपित इति सारस्ये मूलत्वेन निरूपितः । ननु ताराग्रहस्य दर्पमूलकत्वात्कथं तत्र लक्ष्मीनारायणावेश इतिशङ्कायां ताराग्रहस्य तथात्वेऽपि ताराचन्द्रमसोस्तदाविष्टत्वे गमकमाहुः-अन्यथेत्यादि । यदि तयोस्तदाविष्टत्वं न स्यात्तदा स पश्चे देवगुरुणा याचित इति लिङ्गाद् यज्ञ एव तद्ग्रहणेन यज्ञसचिवानां तत्कारयितुः शुक्राचार्यस्य मेधपतिमिति पाविश्यपतित्वेन श्रावितस्य शिवस्य च सम्मतिर्न स्यात् । न च सम्मतौ मानाभावः शङ्कयः, यज्ञनिष्पत्तेरेव मानत्वात् । न च देवेषु पापाभावात्सम्मतिरिति वाच्यम् । देवेष्वपि पापसम्भवस्य विश्वरूपादि-हत्यायां श्रुतिसिद्धत्वात् । 'न ह वै देवानां पापं गच्छती' त्यादिश्रुतिस्तु विराडवयव-भूतदेवपरेति तस्या एतदविषयत्वात् । अन्यथा तस्याञ्जलिना ब्रह्महत्यामुपागृह्णादित्यादि-श्रुतिबाधापत्तेः । अतोत्र भगवदावेश एवास्थेयः । एवञ्च मात्स्योक्तमन्यदपि समर्थितं भवति ॥११८॥ ननु पुष्टावेवं करणे किं बीजमित्याकाङ्क्षायां बीजक्षेत्रयोर्दोषाभाव-पूर्वकसारस्येन वंशस्य तथात्वकरणं बीजमितिबोधयितुं दोषाभावमुपपाद्य सारस्य-माहुः-स्वकीयायामित्यादि । एवं चन्द्रस्यानुभावभक्ती उक्ते । ननु सारस्यस्य दोषाभावपूर्वकत्वं नोक्तयुक्तिभिः शक्यवचनम्, अग्रे तारकामयसङ्ग्रामादिकथनात् । सम्मतौ च तदसम्भवादितिशङ्कायां गर्भाधानपर्यन्तमेवावेशेन तावत्पर्यन्तमेव सम्मतिर्न त्वग्रेऽपीत्याशयेन सम्मतेस्तावदन्तत्वे गमकमाहुः सर्वेषामित्यादि । तथा च गुरुस्पृहाऽन्यथानुपपत्त्या सम्मतिः सङ्ग्रामाद्यन्यथानुपपत्त्या च तावत्पर्यन्ततेति न सङ्ग्रा-

अतः पूर्वोक्तिभिः साकं विरोधो न भवेद् ध्रुवम् ॥१२०॥
भक्तिर्न ब्राह्मणे पुष्टा तेन राजसुतो बुधः ।
बुद्ध्या चात्यन्तसम्पन्नो निर्व्यलीकस्ततो मतः ॥१२१॥
मातरं च तथा प्राह तस्माज्जातः पुरूरवाः ।
तस्य वेदोद्भवत्वाय ब्रह्मावेशो निरूपितः ॥१२२॥
विष्णुर्बुधस्ततो जातो ब्रह्मात्मा हि पुरूरवाः ।
नारायणाद्भक्तिशक्तिरुर्वशी विनिरूपिता ॥१२३॥
मित्रश्च वरुणश्चैव भोगस्थानाधिदैविकौ ।
तयोरासक्तहृदया भक्तिभोगपरा भवेत् ॥१२४॥
देवानां परमा भक्तिः परं भोगविवर्धिनी ।

माद्युक्तिभिर्विरोध इत्यर्थः ॥११९॥१२०॥ ननु चन्द्रस्यात्रिनेत्रोत्पन्नत्वेन विप्रराजत्वेन च तत्सुतस्य बुधस्य कथं क्षत्रवंशोत्पादकत्वमित्यत आहुः भक्तिरित्यादि । चन्द्रे ह्यस्ति द्वयम्, उक्तयुक्तिभिर्ब्राह्मण्यम् । 'राजा राजसूयेन स्वाराज्यकामो यजेते'ति क्षत्रियकर्तृकयागकरणेन भुवनत्रयजयेन च क्षत्रियत्वम् । तत्र ताराग्रहणे दर्पस्य हेतुत्वेन कथनाद्दर्पस्य चैकादशे क्षत्रप्रकृतिषु गणनात्क्षत्रभावापन्नस्यैवेन्दोर्निषेकृत्वम् । किञ्चायं भक्तिस्कन्धः, पूर्णानुग्रहरूपाऽत्र भक्तिर्वक्तव्या, सा च न ब्राह्मणे पञ्चाग्निविद्यायाः क्षत्रिय एव छान्दोग्ये श्रावणात् । तेन हेतुना बुधो राजभावोपगूढस्यैव सुत इति तादृशवंशोत्पादक इत्यर्थः । बुधस्यानुभावमक्ती आहुः—बुद्ध्या चेत्यादिपादत्रयेण, पुरूरवसस्ते आहुः—तस्मादित्यादिभिः सपादैर्दशभिः, वेदोद्भवत्वाय वेदानामुद्भवः पुरूरवस एवासीत्, 'त्रयी त्रेतामुखे नृपे'त्यनेनोक्तो यस्मादसौ वेदोद्भवस्तादृशत्वाय । ब्रह्मावेश इति चतुर्मुखावेशः ॥१२१॥१२२॥ क्षेत्रोत्कर्षायोर्वश्युत्कर्षमाहुः—नारायणादिति । उत्पन्नेति शेषः । भक्तिशक्तिरिति । भगवत्सेवार्थाऽनुग्रहरूपा शक्तिः । नन्वेतादृशत्वे तस्याः कथं शापभागित्वमित्यत आहुः—मित्रश्चेत्यादिभिः सार्द्धैश्चतुर्भिः । मित्रो गुदस्याधिदैविक इन्द्रियदेवतासु प्रसिद्धः । वरुणस्तु रसनदेवोऽपि रेतसा शिश्नमापस्तिर्कापल्यावाय्यादपां पतित्वेन 'वरुणस्य स्कम्भनमसी'ति मृत्तिकास्नानीयमन्त्रप्रकाश्यत्वेन च शिश्नाधिदैविकः । 'वृषणौ च मित्रा'विति पायये विराड्वृषणत्वेन वा भोगस्थानाधिदैविकौ । परमा भक्तिरिति वामनपुराणे

अतो वै सा प्रशस्ता हि मानुषेषु ततः परा ॥१२५॥
अतो यत्र भवेद्भोगो भक्त्या सा न परा मता ।
शुद्धां वक्तुं तयोः शापो जात इत्यभिधीयते ॥१२६॥
सकृत्प्रवृत्ता देवत्वरक्षायै नाऽन्यथा क्वचित् ।
रसाधिक्यात्पुनस्ताभ्यां प्रार्थिता नाऽभ्यनन्दत ॥१२७॥
अतः शप्ता नरत्वाय ताभ्यां भोगनिवृत्तये ।
ऐश्वर्यादिगुणान् प्राप्तुं गर्भषट्कमधारयत् ॥१२८॥
भोगार्थं न प्रवृत्ता सा ततो निष्ठुरभाषिणी ।
गर्भमात्रं त्वभिप्रेतं तेन द्वयमुवाच ह ॥१२९॥
भोगाभावाय नैष्ठुर्यं गर्भाय ज्ञानसंस्थितिम् ।
तस्यामासक्तहृदयो मुक्तिमेप्यत्यसंशयम् ॥१३०॥
अतो मुक्तिप्रक्रियायां तन्मुक्तिर्विनिरूप्यते ।
भक्तिसामर्थ्यसिद्ध्यर्थं वेदोद्गम इहोच्यते ॥१३१॥

देवस्वभावे गणितत्वात् । परेति भगवत्कृपाजन्यत्वेन स्वाभाविक्याः सकाशादुत्कृष्टा । शुद्धामिति भोगाशक्तिनिवारिकाम् । देवत्वरक्षाया इति स्वाभाविकं स्वस्मिन् यद्देवत्वं तद्रक्षार्थम् । नरत्वायेति नरलोकतापदस्यार्थः । तथा च सा स्वजाति-स्वभावादिकं पिङ्गलावदवगत्य तयोः स्वभावं चावगत्य सकृत्प्रवृत्ता, न तु कामादिना, ताभ्यां तत्स्वभावं लौकिकवदवगत्य तस्यां रसाधिक्यात्सा भोगार्थं प्रार्थिताऽपि विरक्तत्वान्न पुनरङ्गीकृतवती तदा ताभ्यां स्वस्य भोगे तया निवारिते तद्भोगनिवृत्तये नरत्वार्थं शप्तेति तस्याः शापभागित्वमिन्द्रद्युम्नवत् न तु दोषादिति तदुत्कर्षो न तेन क्षीण इत्यर्थः । नन्वेवं स्वतो विरक्तत्वे शापेनोपोद्बलिते कथं पुनर्भोग इत्यत आहुः—ऐश्वर्येत्यादि ॥१२३॥१२४॥१२५॥१२६॥१२७॥१२८॥१२९॥

ज्ञानसंस्थितिमिति । 'तेजो वै घृत'मितिश्रुतेस्तस्य प्रकाशकत्वेन ज्ञानस्थापकत्वात्तस्य भक्ष्यत्वकथनेन ज्ञानस्य सम्यक् स्थितिम् । नान्वदं द्वयं क्रमेण वेश्यात्वाद्देवत्वाच्चापि सम्भवतीति न वैराग्यगमकमित्यत आहुः—तस्यामित्यादि । तथा चैकादशे तदासक्तस्य पुरूरवसो मुक्तिबोधनादत्र च तयाऽस्मै वैराग्योपदेशाच्च सा वैराग्यवत्येवेति तस्या उत्कर्षो निर्बाध इत्यर्थः ॥१३०॥१३१॥ एवं तद्वृत्तान्तकथनेन

एवं पुरूरवा भक्तः प्रथमं सुनिरूपितः।
गाधिपर्यन्तमेतस्य वंशो रामप्रसिद्धये ॥१३२॥
तद्वंशोत्पत्तिकथया भक्तत्वं सिद्धमेव हि।
पुष्टिमार्गे यदोर्वंशो ब्राह्मणानां च घातकः ॥१३३॥
भक्तिमार्गे तथा पुष्टिर्न युक्तेति हरेर्मतम्।
दैत्येषु तादृशी पुष्टिर्न देवेष्विति निर्णयः ॥१३४॥
देवांशास्तत्र वक्तव्या दोषनाशार्थमीश्वरः।
अर्जुनं तस्य पुत्राँश्च तत्सङ्गादितरानपि ॥१३५॥
मुख्यगौणप्रभेदेन द्वयं हन्ति महाबलः।
भक्तानां गर्वनाशाय दैत्यानां निधनाय च ॥१३६॥
गुणरूपावतरणपर्यन्तं हन्ति बाहुजान्।
विप्रे मन्त्रा हविर्धेनौ यज्ञात्मा भार्गवो हरिः ॥१३७॥

पुरूरवसोऽपि भक्तत्वं निगमयन्ति एवं पुरूरवा इत्यादि। परिणामे वैराग्यान्मुक्तिरूप-फलस्याऽग्रे कथनाच्च स तथेत्यर्थः॥

(अ. १५) एवं पुरूरवसोऽनुभावभक्तो प्रथमाध्याये निरूप्याऽग्रे ईशकथां वक्तुं द्विती-याध्याये तद्वंशे तथात्वं बोधयन्ति गाधीत्यादि॥१३२॥ ननु पुरूरवःपुत्रस्य विजयस्य वंशो यथा रामप्रसिद्धयेऽनुभावभक्तियुक्त उक्तस्तथाऽग्रे कृष्णावतारार्थं यदुवंशोऽपि तादृशो वक्तव्यस्तथा सति भगवतोऽपराधस्ततः कथं युज्यते भगवता तद्धननं चेत्या-काङ्क्षायामाहुः—पुष्टिमार्ग इत्यादिकारिकात्रयम्। पुष्टिमार्ग इति। पुष्टिः स्वार्था-नुग्रहः मार्गो भगवत्प्राप्त्युपायो यत्र तादृशः। भक्तिमार्गे परार्थानुग्रहरूपे तथा पुष्टिः सन्मार्गघातकोऽनुग्रहो न युक्त इति हरेर्मतम्। तत्र हेतुः—दैत्येष्वित्यादि। तत्र यदुवंशे देवांशा वक्तव्या अतो दोषनाशार्थं तथा हन्तीत्यर्थः। हेतुपूर्वकं तस्योत्तरा-वधिमाहुः—भक्तानामित्यादि। तथा चान्तरो दोषो बाह्यसंसर्गश्च श्रीरघुनाथप्रादु-र्भावावधिरिति तत्पर्यन्तं तन्नाशयित्वा भोगराहित्यं भक्तौ दृढीकरोतीत्यर्थः॥१३३॥ ॥१३६॥ (अ. १६) मुख्यगौणभेदेनोभयहनने हेतुं स्फुटीकुर्वन्ति—विप्र इत्यादि।

१ "घातक" इतिपाठान्तरम्

हविर्नाशे पुरा हन्ता मन्त्रनाशे तत परम् ।
क्षत्रियत्वाय युक्तोऽपि प्रार्थनाद्ब्राह्मणोऽभवत् ॥१३८॥
उभयात्मा न युक्तो हि तेन वध्योऽभवद्रिपोः ।
रेणुका चाऽपि भार्याऽस्य भक्तिरूपाऽऽधिदैविकी ॥१३९॥
उभयात्मकेन सन्तुष्टः पद्ममाली हरेः प्रियः ।
गन्धर्वो नैव दोषाय द्वितीयः स पतिर्यतः ॥१४०॥
भक्त्यर्थं पूर्वभावं सा कृष्णावेशं विबुध्य हि ।
कर्मासक्तिं परित्यज्य कृष्णासक्ता बभूव ॥१४१॥
दुष्टा चेद्भगवान् रामः कथं तस्यां भविष्यति ।
द्विरूपत्वान्मुनेश्चापि क्षान्तिः क्रोधोऽपि जायते ॥१४२॥
क्षान्त्या पुत्रोपदेशस्तु क्रोधो दारेषु संस्थितः ।
क्रोधः क्षत्रियभावो हि तद्रूपो राम उच्यते ॥१४३॥
अतो हता सपुत्रा हि माताऽपि पितृवाक्यतः ।
तत क्रोधपरित्यागं वव्रे राम इति क्वचित् ॥१४४॥
वधार्थो दोषजननं मुख्यार्थो मम सम्मतः ।

ननु यद्गृहे भगवज्जन्म तादृशस्य जमदग्नेः कथमेवं वध इत्याकाङ्क्षायामाहुः–क्षत्रियत्वायेत्यादि । ननु रेणुकाया मनोदोषस्य मूल उक्तत्वात्तत्र कथं भगवत्प्रादुर्भाव इत्याकाङ्क्षायामाहुः–रेणुका चेत्यादि । हरेः प्रिय इति 'गन्धर्वाणां चित्ररथ' इति विभूतिमध्ये पाठात्तथेत्यर्थः । द्वितीयः सपत्निरिति 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तर' इति श्रुतेस्तथा ॥१३७॥१३८॥१३९॥१४०॥१४१॥

नन्वदुष्टत्वे मुनेः कुतः क्रोध इत्यत आहुः–द्विरूपत्वादित्यादि । तथा च स क्षत्रभावः कृत इति न विचारपूर्वक इत्यर्थः ॥१४२॥ ननु यद्येवं निरपराधता तदा रामः कथं हतवानित्यत आहुः–क्रोध इत्यादि, तथा च तत्रापि क्षत्रियभाव एव प्रयोजक इत्यर्थः । अत्राग्रे वरप्रार्थनमुक्तम्, 'वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वध' इति । एतदग्रे क्रोधपरित्यागं वव्रे इति पुराणान्तरेऽस्ति तदनुवदन्ति–तत इत्यादि । अत्र घ्नतैनामित्यस्य ताडनाद्यपमानेनादोषां कुर्वित्यर्थमाहुस्तदनूद्य दूषयन्ति–वधार्थ इत्यादि । एवमर्थोक्तौ मुख्यार्थत्यागः स्यात्, स च तदैव युक्तो

सोमवंशेऽवतीर्णस्य तथा न स्यात्पराक्रमः ॥१४५॥
इति शङ्कां निराकर्तुं रावणस्य पराजयः।
अर्जुनं तादृशं योगैः सिद्धं रावणमोचकम् ॥१४६॥
यो जिग्ये लीलयैवैकः क्षत्रियाणां विनाशकः।
तत्तुल्यः कोऽपरो लोक इति वक्तुं तथोच्यते ॥१४७॥
षड्गुणैर्धर्मिणा चैव तामसाः प्रथमं हताः।
तथैव राजसाः पश्चात्सात्विकाश्च तथैव हि ॥१४८॥
सगुणेषु विनष्टेषु सर्वभावेषु सर्वशः।
निर्गुणा भक्तिरुत्कृष्टा लोके ख्यातिं गमिष्यति ॥१४९॥
तत उर्वरिता भक्ता इति ख्यापयितुं भुवम्।
शूरसेनो महाभक्तो मथुरायां निरूप्यते ॥१५०॥
तादृशाः सर्व एवाग्रे क्षत्रिया इति बोधितम्।
पूर्ववद्यज्ञसम्पत्ती रामस्याऽत्रापि वर्ण्यते ॥१५१॥

यद्यन्वयस्य वा तात्पर्यस्यवाऽनुपपत्तिः स्यात्, प्रकृते तु नश्वरभावत्वेन योग्यतयाऽन्वयानुपपत्त्यभावात्। 'यत्रे हतानां रामोऽपि जीवितं चास्मृति वध' इति जीवितवधास्मरणपरमार्थनलिङ्गेन तात्पर्याऽनुपपत्तेरप्यभावाच्च न मुख्यार्थौ बाधितुं शक्य इति मम मुख्यार्थः सम्मतस्तथा सति वधस्यार्थः प्रयोजनमदोषजननं निर्दुष्टत्वसम्पादनम्, तथा चार्जुनरीत्यार्थसिद्धौ फले लक्षणा न युक्तेत्यर्थः। ननु क्षत्रियकुलनाशहेतुभूतदोषे दृष्टे अर्जुनपराक्रमवर्णनस्य कुत्रोपयोग इत्याकाङ्क्षायामाहु-सोमेत्यादिसार्द्धद्वयम्। अर्थस्तु प्रकटः। तथा चार्जुनदर्पकथनमात्रे न प्रयोजनमपि तु रामवीर्यप्रकटनमित्यर्थः ॥१४३॥१४४॥१४५॥१४६॥१४७॥

ननु सकृद्वधेनाऽपि पितृवधनिर्वेशे त्रिःसप्तकृत्वो वधकरणस्य किं प्रयोजनमत आहुः-षड्गुणैरित्यादिद्वयम। तथा च षड्गुणसहितधर्मिकार्यबोधिका सप्तसङ्ख्या, वध्यानां त्रैविध्यबोधिका त्रित्वसङ्ख्या। तथा च पूर्वं तामसतामसेषु तदुत्तरमुत्पद्यमानास्तामसराजसा इत्येवं क्रमेण षड्गुणो भगवांस्तान्निहतवानिति ज्ञापनं प्रयोजनम्। ततस्तेषु सदोषेषु नष्टेषु निर्गुणभक्तिख्यापनं च प्रयोजनमित्यर्थः। एतदेव फलेन निगमयन्ति-तत इत्यादिसार्द्धेन। सर्वचेदस्य करणतात्पर्यमाहुः-पूर्ववदित्यादि, अत्रापीति सोमवंशेऽपि ॥१४८॥१४९॥१५०॥१५१॥

सर्वदानं भक्तिमार्गं बोधयन् पृथिवीं ददौ ।
भारात्मकाः क्षत्रिया हि तन्नाश उपसंहृतिः ॥१५२॥
विश्वामित्रः परावृत्तौ रामस्येत्युच्यते कथा ।
पुत्राणां च परित्यागः शुनःशेफस्य सङ्ग्रहः ॥१५३॥
ब्राह्मणस्य प्रतिष्ठार्थं विश्वामित्रे निरूपितम् ।
गोत्राणां बहुधावृत्तिरतोऽस्माद्विनिरूपिता ॥१५४॥

'एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः । अवतीर्य परं भारं भुवोऽहन् बहुशो नृपा'निति (श्लो. २७) वाक्यविचारेण क्षत्रियहननस्य प्रयोजनान्तरमाहुः-भारेत्यादि, उपसंहृतिरिति । भारस्येतिशेषः । विष्णुधर्मोत्तरे एवं कथाऽस्ति । भूमिस्ता-वरस्थावरजङ्गमयोरुभयाप्यतिभवनेनोभयभाराक्रान्ता ब्रह्माणं तदभावाय विज्ञापितवती तदैवाग्निरपि मत्तस्यान्यस्य वा कस्यचिद्यज्ञेऽत्यन्तमिष्टोऽजीर्णनिवृत्तये विज्ञा-पितवान् । तदा ब्रह्मावधार्य एकेनैव कार्यद्वयं साधयिष्यन् तं मत्यर्जुनं प्रार्थ्य तच्छरेषु प्रविश्य वनेषु धक्ष्यमाणेषु तवाजीर्णं नङ्क्ष्यतीत्युक्तवान्, ततोऽग्निस्तं प्रार्थिते-नार्जुनेन रथमारुह्य शरेषु मुच्यमानेषु दैवयोगाद्वसिष्ठवने शराः पेतुस्तदा तद्वने दह्यमाने वसिष्ठोऽर्जुनं शशाप तव बाहुच्छेदो भविष्यतीति । तदुत्तरं कतिपयाहस्तु तस्य जमदग्निहविर्धान्यभिलाषो दैवैरुत्पादितस्तेनेदं सर्वक्षत्रनाशनमभूदिति । अत इदं प्रासङ्गिकं देवादिकार्यम्, मुख्यं तु भक्तक्लेशनिवृत्तिर्निर्गुणभक्तिस्थापनमिति पूर्वोक्त-मेव स्कन्धार्थोपयुक्तत्वादित्यर्थः ॥१५२॥ एवमीशानुकथयोर्मध्ये ईशकथा निरूपिता ॥

अतः परमीशानुकथारूपे वंश्यानुचरिते क्षत्रियाणां वक्तव्ये विश्वामित्रब्राह्मण्यादिकथा कुत उक्तेत्याकाङ्क्षायामाहुः-विश्वामित्र इत्यादि, परावृत्ताविति वधात्परावृत्तौ, हेतुरिति शेषः, तेन तत्कथोच्यत इत्यर्थः । एतेन राजधर्मेषु युधिष्ठिरं प्रति भगवता यद्विश्वामित्रपौत्रेण परावसुनाम्ना 'वृथात्वं कत्थसे रामे'त्यादिना ययातिपत्तने यज्ञकर्तॄणां क्षत्रियाणां प्रदर्शनेन पुनः क्षत्रवधार्थं शस्त्रग्रहणमुक्तं तत्कल्पान्तरीयमिति ज्ञापितम् । नन्वस्त्वेवं तत्कथा तथापि कथान्तरं तदीयं त्यक्त्वा पुत्रत्यागकथैव कुत उक्तेत्यत आहुः-पुत्राणामित्यादिसार्द्धम् । अत इति ब्राह्म-ण्यप्रतिष्ठातः । तथा च विश्वामित्रकथाया एव शेषः । यथा पूर्वाध्यायस्था सत्यव्र-तान्ता कथा, तेन मध्ये ब्राह्मणीशकथेति पूर्वोक्तं समर्थितम्॥१५३॥१५४॥

भक्ता अत्रापि द्विविधा वैदिका भोगतत्पराः।
पुरूरवा अलर्कश्च रजिश्च प्रथमा मताः ॥१५५॥
धन्वन्तरेरत्र जन्म दोषाभावाय पूर्ववत्।
नहुषश्च ययातिश्च पुरुश्चाऽप्यत्र मध्यमाः ॥१५६॥
वीर्याधिक्याच्च नहुषः पूर्वस्माद्धि विशिष्यते।
पुष्टिभक्तपदे स्थित्वा दोषयोगाच्च मध्यमः ॥१५७॥
ययातेर्मानसं शुद्धं प्रमाणं सर्ववस्तुषु।
ब्राह्मणानां च जामाता वयोऽपर्यासतस्तथा ॥१५८॥
मध्यमानां मध्यमस्य बन्धमोक्षौ निरूपितौ।
तेन सर्वत्र ये भक्तास्तादृशा इति बुद्ध्यताम् ॥१५९॥
शुक्राचार्यः पुष्टिकर्त्ता मर्यादायां समन्ततः।

अतः परं पुनरीशानुकथामेव वदन्तोऽवान्तरप्रकरणानि विभजन्ते-भक्ता अत्रापीत्यादि। अत्रेति प्राथमिक्यां विधायां सोमवंशे वा। पूर्ववदिति भार्गवरामवत्। तेन येषामत्रोद्देशमात्रं कृतं तेऽप्युक्तसमानकक्षा एव भक्ता बोध्या इति धन्वन्तर्यवतारोक्त्या ज्ञापितम्। एवमेकेन सप्तदशाध्यायेनेतः पूर्वं चतुर्दशेन चेति द्वाभ्यां प्रथमकक्षोक्त्यध्यायद्वयात्मकमाद्यं प्रकरणम्। द्वितीयमाहुः-नहुष इत्यादिचतुर्दशभिः ॥१५५॥१५६॥ एतेषु किमाधिक्यं येन मध्यमकक्षत्वमित्याकाङ्क्षायां क्रमेण त्रिष्वपि तदुपपादयन्ति-वीर्याधिक्यादित्यादि। नहुषे वीर्यं विद्यातपोयोगबलानां चतुर्णां ग्राह्यम्, 'तावत्त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभाव' इतिषष्ठस्कन्धवाक्यात्। केवलबलात्मकवीर्यग्रहणे रजेरपि मध्यमकक्षत्वापातात्। तर्ह्युत्तमत्वं कुतो नेत्यत आहुः-पुष्टीत्यादि। नहुषस्य परमवैष्णवत्वं ब्रह्मवैवर्त्ते स्फुटम् ॥१५७॥

ययातेस्तथात्वमुपपादयन्ति-ययातेरित्यादि। तथा च चत्वार एते धर्माः पूर्वकक्षास्थेभ्योऽधिका इत्यतस्तस्य मध्यमत्वमित्यर्थः। तर्ह्युत्तमत्वमेव कुतो नेत्यत आहुः-मध्यमानामित्यादि, य इति तुर्वसुप्रभृतयः। तथा च पूर्वं बद्धावस्थात्वान्नोत्तमकक्षायां निवेश इत्यर्थः ॥१५८॥१५९॥ ननु मोक्षस्त्वन्ततः सर्वेषामेव

ययातिर्द्विविधः प्रोक्तस्तद्वाक्यं तन्न मन्यते ॥१६०॥
कामो वा कामधर्मो वा हेतुर्नाऽत्र कथञ्चन ।
कृष्णेच्छा दिष्टमत्रेति पौरवान्वयशुद्धये ॥१६१॥
बाह्याभ्यन्तरभेदेन द्विविधौ भक्तिमार्गगौ ।
मर्यादायां तु त्रिविधौ तेषु पूरुर्महात्मनः ॥१६२॥
राज्यस्यानर्पणाद्वाक्यं पितुराग्रहसंयुतम् ।
तथाऽपि मातृसम्बन्धे वयोदानात्तु मध्यमः ॥१६३॥
बोधनीयः परं युक्त्या ब्राह्मणः प्रार्थ्यते परम् ।

भक्तसाङ्गावीति सोऽत्र नाधिकप्रयोजकतया शक्यवचन इत्याकाङ्क्षायां तदर्थं हेत्वन्तरमाहुः द्वाभ्यां--शुक्रेत्यादि। द्विविध इति पुष्टौ मर्यादायां च सम्मतः। अत्र सर्वत्र पुष्टिपदेन भगवत्कार्यार्थानुग्रहरूपा भक्तिर्बोध्या। तदिति लुप्तपञ्चम्यन्त-मव्ययम्। ननु शुक्राचार्यवाक्यानङ्गीकारे कामो वा कामधर्मो वा प्रयोजकौ। तत्राद्ये लौकिकत्वैव द्वितीये मार्यादिकत्वैवेति कथं द्वैविध्यमित्याकाङ्क्षायामाहुः--कामो वेत्यादि ऋतौ सकामागमनं धर्मः, कामसहितो धर्मः कामधर्मः। कथञ्चनेति। 'धर्मी चापेक्ष्ये'-त्यनेनोक्तोऽपि। तथा च मूले 'दिष्टमेवानपद्यते'ति कथनेन गमने तदुभयहेतुफलस्य निवारणात्तदुभयमपि शुक्रवाक्यानङ्गीकारे हेतुर्न, किन्तु दिष्टं हेतुः, दिष्टं च दैवम्। तच्चात्र पूर्वान्वयजननत्रिपया भगवदिच्छैवेति तत्र भारनिक्षेपाच्च ययातेः पुष्टत्वहानि-रतस्तथेत्यर्थः ॥१६०॥१६१॥ ननु पञ्चस्वपि ययातिपुत्रेषु पूरोरेव पित्राज्ञानुवर्तित्वा-त्तस्योत्तमत्वं युक्तं वयसो न गुणाधिकमिति मूले तथोक्तेश्च तदुभयाभावाद्यदोश्च मध्यम-त्वमित्यत आहुः--बाह्येत्यादित्रयम्। ननु ययातेरेवं गुणकत्वे कथं भोगासक्तिः किमर्थं चैतत्कथोपक्षेप इत्यत आहुः ययातिरित्यादि। तत्र गमकमाहुः-भोगा इत्यादि। प्रतिबन्धनिवृत्तये इति। 'त्रिमस्य वै संन्यसत' इतिवाक्यात्तद्रूपेण देवकृतप्रतिबन्धनिवृत्तये, यत्पृथिव्यामित्यादेस्तात्पर्यमाहुः यदित्यादि। तथा चायमप्येक आसङ्गत्यागप्रकार इति बोधनायोपक्षेप इत्यर्थः॥१६२॥१६७॥ मासक्तिष्वपि सद्वार्ता भक्तानां मुक्तिमेव जनयतीतिज्ञापनाय देवयानीमुक्तिकथेत्याशयेनाहुः-बोधेत्यादि।

भक्तसङ्गात्तु नहुषो मोक्षं प्राप्स्यति निश्चितम् ॥१६४॥
ययातिर्वासनाशान्त्यै कामसम्पूरणाय च।
अन्यतारुण्यमादाय भोगान् भुङ्क्तेऽविचार्य हि ॥१६५॥
भोगा दोषात्मका नित्यमिति वक्तुमजाकथा।
भार्यायाः कामशान्त्यर्थं प्रतिबन्धनिवृत्तये ॥१६६॥
वैराग्यं जनयन् प्राह वस्तुतत्त्वं च बोधयन्।
यत्पृथिव्यां व्रीहियवमित्यादिवचनं हृदि ॥१६७॥
स्वार्थं प्राह स्वविज्ञानदार्ढ्यं सम्यक् प्रबोधयन्।
बाधाभावाय भत्रैव बोधिताऽपि व्यमुच्यत ॥१६८॥
ययातेः कार्यसंसिद्धिर्बोधनाय निरूपिता।
पूरोर्मुक्तिस्तु सिद्धैव वंशशुद्ध्या निरूप्यते ॥१६९॥
वैष्णवा ब्राह्मणाश्चैव जायन्ते यत्र सर्वदा।

(तृतीयमवान्तरप्रकरणम्)

भरतो रन्तिदेवश्च यदुश्चाऽप्युत्तमास्त्रयः ॥१७०॥
सामर्थ्यधैर्यभक्तीनां येषु काष्ठा पुरा स्थिता।
उत्तरावधिराजानः पूर्वधर्मसभा इह ॥१७१॥
तेन सर्वे नवस्वेव प्रविशन्ति नरोत्तमाः।

-सिद्धमाहुः--ययातेरित्यादि। बोधनायेति अत्रोक्तानामनुक्तानां चैवं मुक्तिबोधनाय। ननु पूरुमुक्तिः कुतो नोक्तेत्यतो गमकपूर्वकम् आहुः--पूरोरित्यादि ॥१६८॥१६९॥ एवं चतुर्दशभिर्द्वितीयं प्रकरणं विचारितम्।

(अ. २१) तृतीयं विचारयन्ति--सार्द्धैः सप्तभिः--भरत इत्यादि। नन्वधरावधिस्था राजानो येऽग्रे वाच्या एतत्प्रकरणे तेषामेव तत्तुल्यसामर्थ्याभावात्तत्प्रकरणमन्यदत्र वक्तव्यमित्यत आहुः--उत्तरावधीत्यादि। नन्वत्र समाप्तौ वज्रादयः कुतो नोक्ता भगवानेव कुत उक्त इत्यत आहुः--भक्तयन्त इत्यादि। भक्त्या हि

भक्त्यन्ते भगवान् साक्षादाविरासीदितीर्यते ॥१७२॥
भक्तिवद्रूपसम्पत्त्या सर्वान् मोचयितुं क्षमः ।
उपाख्यानानि सर्वाणि तत्तद्भक्तेषु राजसु ॥१७३॥
दोषनिर्हरणार्थानि वैदर्भादीनुवाच ह ।
रूपे चरित्रसम्बन्धस्तथा तच्छ्रवणादिकम् ॥१७४॥

अहन्ताममतानाशरूपा मलयलीलाऽत्र निरूप्यते, सा चाच्युतात्मानुभवावस्थानान्ता। तत्र स्वयमेव चेदाविर्भूतस्तदा रूपेण तं करिष्यतीति फलसम्पत्तिज्ञापनाय तेऽत्र नोक्ता, अग्रिमवंशस्य चरित्रलाभावात् । मुक्त्यर्थमेव तत्र प्राकट्यकथनात् । अतो भगवानेवान्ते उक्त इत्यर्थः । नन्वीशानुकथामुपाख्यानोपबृंहणस्य किं प्रयोजनमत आहुः–उपाख्यानानीत्यादि ॥१७०॥१७१॥१७२॥१७३॥

तर्हि भगवच्चरित्रं गुणाधानार्थमवश्यं वक्तव्यमित्यत आहुः–रूपेत्यादि ।

## का.-१७२ निबन्धकठिनांशविवेचनम् ।

अग्रे चतुर्विंशाध्यायार्थोक्तौ 'तेन सर्वे नवस्वेव प्रविशन्ति नरोत्तमा' एतावदन्तेन त्रयोविंशाध्यायार्थ उक्तः । अतः परं चतुर्विंशाध्यायार्थमाहुः 'भक्त्यन्ते भगवानि'त्यादि यावत्समाप्ति, तथा च भक्तिफलरूपस्य साक्षाद् भगवतः प्राकट्यं चतुर्विंशाध्यायार्थ इत्युक्तम्, ननु अत्रापि विदर्भादिवसुदेवान्तानां निरूपणदर्शनात् कथं भगवत्प्रादुर्भाव एवाध्यायार्थस्तत्राहुः उपाख्यानानीत्यादि, रूपे इत्यन्तम्, त्रयोविंशाध्यायपर्यन्तं ये भक्ता उक्तास्ते राजान उक्तास्तेषु राजत्वप्रयुक्तं दोषं सम्भाव्य तत्तदुपाख्यानैः सानुभावत्वसूचनात् स दोषो निवार्यते, एवं सति ते सर्वे निर्दोषा इत्युक्तम्, अत्राध्याये तु गुणवन्तो भगवत्समा भगवदवतारार्थं उपलक्षणविधया उच्यन्ते तेन ज्यामघपर्यन्तं निर्दोषपरमभक्तिमद्भक्तकथा येषां भयादप्युक्तं वचनं असम्भावितमपि देवपितृसम्मतं सत्यमभूदितिभक्तेरनुभावो ज्ञापितः, विदर्भस्तु स्वजन्मनः पूर्वं जातायाः स्वार्थमेव स्थितायाः भोक्ता, यथा भगवान् कृष्णः स्वप्रादुर्भावात् पूर्वं जातानां स्वार्थमेव स्थितानां गोपिकादीनां भोक्तेतिज्ञापनार्थं विदर्भान् रूपकाध्याये शुक उवाचेतिपद-सम्बन्धः, रूपे इति पदमग्रेपि सम्बद्ध्यते । तथा च रूपे चरित्रसम्बन्धो वर्तते, परं रूपे प्रादुर्भूते दर्शनस्पर्शनसेवनादिकं यथा उपयुक्तं तथा चरित्रश्रवणादिकं नोपयुक्तम् इति निश्चित्य चरित्र-सम्बद्धां रूपसम्पत्तिं सङ्क्षेपेण शुक आहेत्यर्थः । इति कठिनांशविवेचनम् ।

केषाञ्चिदत्र सन्देहः स्कन्धार्थे प्रकटो महान् ॥२॥
तन्निवृत्त्यर्थमधुना सर्वनिर्णयपूर्वकम्।
दशमार्थः प्रकरणाध्यायार्थश्च विचार्यते ॥३॥
नवलक्षणलक्ष्यो हि कृष्णस्तस्य निरूपणात्।
आश्रयः क्रमभावित्वान्निरोधो वेति संशयः ॥४॥
लीलानिर्धारको ह्यर्थः क्रममात्रं तु दुर्लभम्।
यथाकथञ्चिच्छ्रवणं सफलत्वाय कल्पते ॥५॥
निरोधः प्रलयो लोके प्रसिद्धः प्रकृते न सः।
प्रतीतो द्वादशे चैव महत्वाच्छुद्धलीलया ॥६॥
सहितो ह्याश्रयः स्कन्धे प्रतिपाद्य इतीति चेत्।
न हि सापेक्षरूपस्य प्रथमं सुनिरूपणम् ॥७॥
नवलक्षणसापेक्षो ह्याश्रयो रूप्यते कथम्।

ते च सुबोधिन्यां स्फुटाः। अत्र दशमस्कन्धार्थः श्रीधरमते आश्रयो, बोपदेवमते तुष्टभूभुक्मलयस्तदुभयं न व्याससम्मतमिति दूषणीयं तेनाहुः-केषाञ्चिदित्यादि-सार्द्धम् ॥२॥३॥४॥ श्रीधरमतेन सन्देहं तन्मतं चाहुः-लीलेत्यादिसार्द्धत्रयेण। अत्र सन्देहस्तु स्फुटः। पूर्वपक्षे तु यथा ह्यग्निहोत्रं जुहोति यवागूं पचतीत्यत्राग्निहोत्रहोमः पूर्वमुक्तोऽपि नाद्रियते, आर्थक्रमाच्छान्दस्य क्रमे दुर्बलत्वात्, तथात्रापि लीला येन निर्द्धार्यते स एवार्थः। न च क्रमत्यागे श्रवणफलाभावः शङ्क्यः। ऊतिमन्वन्तरयोरिवाऽत्रापि वैपरीत्ये दोषाभावस्य शक्यवचनत्वात्। न च विरोधाङ्गीकारे किं बाधकमिति शङ्क्यम्, लोकप्रसिद्धतदर्थप्रतीतेरेव बाधकत्वात्। इतिर्हेतौ। अतो हेतोर्द्वादशार्थो निरोधो, दशमार्थः शुद्धलीलया गुणातीतया सहितो धर्मी आश्रय इति चेदित्यर्थः। एतद्दूषयन्ति-न हीत्यादिचतुर्भिः ॥५॥६॥७॥

• कथं सापेक्षत्वावगम इत्यत आहुः-नवेत्यादि। ननु यथा स्वरूपलक्षणेनावगते ब्रह्मणि ततः कार्यलक्षणं पश्चादग्रिमपाठेन श्राव्यते, यथा च लोके समवायिकारणत्वेनावगते द्रव्ये गुणाश्रयत्वमुच्यते तथाऽत्रापि सप्तभिर्ज्ञाते भगवत्यग्रे-. द्वयं

अग्रे लीलाद्वयकथा फलसिद्धौ मृषा भवेत् ॥८॥
पूर्वोत्तरस्कन्धयोश्च नश्येत्कारणकार्यता ।
अर्थस्त्वेकादशेऽप्यस्ति क्रमश्च स्वीकृतो भवेत् ॥९॥
चरित्रं दशमे मुख्यं रूपं पूर्वत्र वर्णितम् ।
निरोधार्थं तथा भक्तिसिद्ध्यर्थं च हरिर्विभौ ॥१०॥
आश्रयो यादृशो ह्यत्र तदर्थं न बभूव ह ।
आश्रयो यादृशो ह्यत्र स वाच्यो द्वादशे स्फुटः ॥११॥
भूभारस्य निरोधो वा तत्कर्तुर्वा न सम्मतः ।
आद्यन्तयोरिहाभावान्मुक्तावप्यनुवृत्तितः ॥१२॥

परिचायनार्थमुच्यत इति चेत्तत्राहुः–अग्र इत्यादि । तथा च यद्येवं स्यात्तर्हि व्यासः सप्तैव लक्षणानि वदेत्, पश्चात्तदुक्तौ बीजाभावात् । न च राजप्रश्नकृतः प्रतिबन्ध एव बीजमितिवाच्यम् । यत्प्रवेशात् स्त्रीभावस्तदुत्तरत्राभिधास्य इत्यादिलिङ्गेन ग्रन्थानुक्रमस्य पूर्वमेव कृतत्वावगमात् ॥८॥ अथ श्रुतार्थविचारेऽपि न दोष इति चेत्तत्राहुः–पूर्वेत्यादि । मध्य आश्रयेण विच्छेदेऽग्रे हेतुहेतुमद्भावगमकस्याभावात्स नश्येदतोऽत्र श्रौतन्यायो न वक्तुं शक्य इत्यर्थः । नन्वत्रार्थरूपो भगवानत्र प्रतीयत इति तस्य का गतिरित्यत आहुः–अर्थस्त्वित्यादि । तथा चाश्रयस्यार्थत्वाङ्गीकारेऽतिव्याप्तिदोषः स्कन्धैक्यापत्तिर्वा स्यादतस्तन्मतमसङ्गतमित्यर्थः । तन्मतमपाकृत्य सिद्धान्त उपपत्तिमाहुः क्रम इत्यादि । चकाराल्लीला सङ्गृह्यते । तदाहुः–चरित्रमित्यादि । मुख्यमिति । तथा च यथा आलोको धर्म्यविच्छन्न एव धर्मिप्रमितिजनकस्तथा प्रलयलीलाप्यावरणं भजन्ती भगवत्प्रमितिं जनयतीति नवमादित्रयेऽपि *रूपसम्बन्ध इति न तस्य मुख्यत्वं किन्तु चरित्रस्यैवेत्यर्थः । चकारान्मुक्तिसिद्ध्यर्थश्च ॥९॥१०॥ ननु द्वादशे प्रलय एव स्फुटो नाश्रय इति सोऽनिरूपित एव तिष्ठेदित्यत आहुः–आश्रय इत्यादि ॥

एवं श्रीधरीयं मतं निरस्य बोपदेवीयं निरस्यन्ति–भूभारस्येत्यादि । तत्कर्तुरिति दुष्टभूभुक्समूहस्य । असमन्तत्वे हेतुमाहुः आदि इत्यादि । आद्यन्तयोरितिप्रकरणयोः । नन्वाद्यस्योपोद्घातत्वेन तत्र तदभावेऽप्यदोषात् । अन्ते च वृकवधस्य सत्त्वान्न दोष इति चेत्तत्राहुः–मुक्तावित्यादि । तथा च वृकस्य

* त्रिष्वपि रूपसम्बन्धः । परं नवमे रूपं मुख्यम्, दशमे चरित्रमेकादशे ज्ञानमितिविवेकः ।

नोपयुक्तं विनिश्चित्य सङ्क्षेपेणाऽऽह तं बुधः।
अग्रे विस्तारकथनं निरोधार्थं भविष्यति ॥१७५॥

वस्तुतः सकला भक्तिः पुष्टावेवोपयुज्यते।
पुष्टौ रूपं पराकाष्ठा तेनान्ते रूपवर्णनम् ॥१७६॥

क्रियाशक्तिर्ज्ञानशक्तिर्लौकिकं वैदिकं तथा।
मनःसङ्कल्पसिद्ध्यर्थं सङ्क्षेपेण द्वयं जगौ ॥१७७॥

इति श्रीवल्लभदीक्षितविरचिते श्रीभागवततत्त्वदीपनिबन्धे
नवमस्कन्धविवरणे दशमं प्रकरणम्।

तामिति रूपलीलाम्। तर्ह्यग्रिमस्कन्धे किमिति तत्कथनमत आहुः--अग्रे इत्यादि। तया चाहन्तादितो मोक्तव्यानां तावदेवापेक्षितमित्यतोऽत्र न विस्तारितम्। निरोद्धव्यानां तु तदपेक्षितमतस्तत्र तथेत्यर्थः। ननु ये निरोद्धव्या अवतारकालीनास्तेऽप्यत्रोक्ता इति मोक्तव्यार्थमेव रूपवर्णनमित्ययुक्तमित्यरुच्या सिद्धान्तमाहुः-वस्तुत इत्यादि। पुष्टाविति जीवार्थेऽनुग्रहे। नन्वेवं सति सङ्क्षेपेणापि चरित्रं कुत उच्यत इत्यत आहुः-क्रियेत्यादि। तथा च राजाधिकारपरीक्षार्थं तदित्यर्थः। एवं प्रकरणं तृतीयं विचारितम् ॥

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य
दर्शिता नवमस्कन्धनिबन्ध-
योजना सम्पूर्णा ॥

**नवमस्कन्धः समाप्तः**

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# दशमस्कन्धविवरणम् ।

---

चतुर्विंशतिधा भिन्ना भक्तिरुक्ताऽतिदुर्लभा ।
सप्ताशीतिरथाध्याया निरोधे दशमे मताः ॥१॥
नवत्यध्यायसन्दर्भो जातः कृत्रिमभावतः ।

श्रीबालकृष्णाय नमः ।

## अथ दशमस्कन्धनिबन्धस्य योजना ।

अथ दशमस्कन्धार्थं निबध्नन्तो विशेषबोधनाय व्यापाररूपं तदर्थमनुवदन्तः पूर्वस्कन्धे यथासङ्ख्या सतात्पर्या, तथात्रापीत्याशयेनाध्यायसङ्ख्याकथनपूर्वकं दशमार्थमाहुः- चतुर्विंशतीत्यादि । यद्यपि पूर्वस्कन्धे भगवदवतारस्य तदनुवर्तिनां चानुचरितमर्थस्तथापि प्रलयलीलासात्फलोपहितस्यैव तस्यार्थता । फलं चाहन्तादिप्रलयरूपं न परार्थानुग्रहरूपभक्तिं विनेति, सा च भगवदधीनेत्यतिदुर्लभा । अतः सैव तन्मुखेनोक्ता । अत्र चार्थो निरोधः स च संस्थाविशेषरूपः, संस्था च 'नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः, संस्थेति कविभिः प्रोक्तश्चतुर्धाऽस्य स्वभावत' इति द्वादशस्कन्धे लक्षिता । तदर्थस्तु निमित्तादिस्वभावजन्यश्चतुर्विधः प्रलयः संस्थेति । अत्र तु निमित्तादिजनकभगवल्लीलाजन्यः संघातप्रलयरूपो विशेषो निरोधत्वेन विवक्षित इति दशमे तस्मिन्वक्तव्येऽथ भिन्नप्रक्रमेणाध्यायाः सप्ताशीतिर्मता देहशक्तयो द्वासप्ततिनाडीरूपा भगवतः शक्तयश्चादयो द्वादशैवं चतुरशीतिः, शयनं जाग्रदादिभेदेन त्रिधेत्येवं सप्ताशीतिर्विचारिता इत्यर्थः ॥१॥

नन्वत्र सन्दर्भो नवतीनां दृश्यत इति कथं सप्ताशीतिरित्यत आहुः- नवतीत्यादि । तथा च त्रयः कृत्रिमा इति तेऽत्र न सङ्गृहीता इति तथेत्यर्थः ।

लक्षणस्याप्रवेशश्च लीलाधिक्यं तथा भवेत्।
तदर्थे जन्मकथनं पृथास्तोत्रविरोधि हि ॥१३॥
पूर्वोत्तरस्कन्धयोश्च नड्येरकारणकार्यता।
निरोधोस्यानुशयनं प्रपञ्चे क्रीडनं हरेः ॥१४॥
शक्तिभिर्दुर्विभाव्याभिः कृष्णस्येति हि लक्षणम्।
निरोधो यौगिकश्चात्र रोधनात्मा सतां मतः ॥१५॥
भक्ताः पूर्वत्र निर्दिष्टास्ते रोद्धव्या विमुक्तये।
कृष्णे निरुद्धकरणाद्भक्ता मुक्ता भवन्ति हि ॥१६॥
भक्तेश्च शुद्ध्यतासिद्ध्यै प्रपञ्चाद्विनिवारणम्।

भूभारकर्तृष्वप्रवेशेनाव्याप्तिपरिहारस्यासङ्गतत्वेऽपि तुष्यतु दुर्जनन्यायेन तदङ्गीकारेऽप्यग्रिमस्कन्धेऽतिव्याप्तिस्तु दुर्वारैवेत्यर्थः ॥१२॥

ननु दुष्टभूभृन्निरोधस्य विवक्षितत्वेन नातिव्याप्तिरित्यत आहुः लक्षणेत्यादि। निरोधस्य लक्षणं हि शक्तिशयनानन्तरशयनात्मकं तच्च न दुष्टभूभुङ्निरोधोत्तरं दृश्यत इति मूलोक्तलक्षणासम्भवः। किञ्च, 'अत्र सर्गो विसर्ग' इत्यत्र दशलीलाः प्रक्रान्ताः प्रत्येकं लक्षिताश्चातो लक्षिता एवात्राभिमेतास्तास्वलक्षिताया अस्यास्तत्र (अ)प्रवेशो लीलाधिक्यं भवेत्, तत उक्तवाक्यविरोधश्चेत्यर्थः। किञ्च, 'तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगवितानार्थ'मित्यत्र प्रथमस्कन्धे पृथास्तोत्रेऽवतारप्रयोजनमुक्तम्। भूभारहरणार्थं जन्मकथने तद्विरोधः। किञ्च, द्वितीयस्कन्धविवृतौ नवानां लीलानिरूपकाणां स्कन्धानां कार्यकारणभाव उपपादितस्तेष्वत्र पूर्वस्कन्धे भक्तिरुक्ता, अत्र च निरोध इत्यादिनोक्तरीतिको यौगिक एव निरोधो ग्राह्यः, रूढस्योक्तलक्षणरहितत्वात्। अतोऽपि न पूर्वोक्तो निरोधः शक्यवचनः। किञ्च, अग्रिमे मुक्तिर्मध्येत्र निरोधस्तथा च भक्ता एव मोचनीया इति सन्देशेन मुक्त्यर्थमत्र भक्ता एव निरोद्धव्या इत्यायाति, ते च भगवति निरुद्धकरणा एव मुच्यन्ते करणनिरोधश्च भक्तेः शुद्ध्या, सा चेतरसङ्गराहित्येन, तच्च प्रपञ्चविस्मृतौ तस्माद्धेतोरत्र प्रपञ्चाद्विरुद्धमेवात्र निरूपणम्, विनिवारणमिति वा पाठः। तथा भगवत्यासक्तिरपि करणनिरोधार्थमेवेत्यत्र न संशयः। सर्वत्रैव स्कन्धे तन्निरूपणस्यैव दर्शनात्। तस्माच्च भूभारस्य तत्कर्तुर्वा निरोधो वात्र विवक्षित इत्यर्थः॥१३॥१७॥ सिद्धान्तमाहुर्द्वाभ्यां

आसक्तिरात्मनि तथा निरोधार्थं न संशयः ॥१७॥
प्रपञ्चविस्मृतिस्तस्मात् कृष्णासक्तिश्च वर्ण्यते।
'शय्यासनाटनालाप'श्लोके फलितमीरितम् ॥१८॥
रूपान्तरं तु नटवत्स्वीकृत्य त्रिविधान्निजान्।
प्रपञ्चाभावकरणादुज्जहारेति निश्चयः ॥१९॥
समुदायो जन्मवाची क्रीडायुक्तस्य वै हरेः।
प्रपञ्चविस्मृतिसक्तिर्भक्तानां चापि योगतः ॥२०॥

प्रपञ्चेत्यादिभ्याम्। तथा चायमर्थः। अत्र भगवत्क्रीडनं करणम्, तेन कृष्णासक्तिस्तया प्रपञ्चविस्मृतिरिति द्वयं वा विशिष्टं वा व्यापारः, स एव 'शय्यासनाटनालापक्रीडास्नानाशनादिषु, न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस' इत्यन्ते निगम्यते। तदुत्तरं प्रपञ्चाभावः फलं, स च 'तीर्थं चक्रे नृपोन'मित्यनेन निगम्यते, एवं तत्तत्प्रकरणेऽपि ज्ञातव्यम्। अत्र भक्तानां त्रैगुण्यव्याप्तत्वात्तत्स्वभावपरावर्तने तेषां क्लेशास्तस्य च श्रमबाहुल्याच्च क्लिष्टकर्मता स्यादिति तदभावाय मायया नटवद्रूपान्तरस्य मानुषभावस्य स्वीकरणम्। तेन तेषां प्रपञ्चविलयात्तत उद्धार इत्येवं प्रकारेण भक्तप्रपञ्चप्रलय एव स्कन्धार्थ इति निश्चय इत्यर्थः। नन्वेतस्यापि निरोधस्य स्कान्धार्थत्वे प्रथमे प्रकरणेऽव्याप्तिर्दुर्वारा क्रीडायास्तस्मिन्नभावादित्याकाङ्क्षायामाहुः—समुदाय इत्यादि। तथाऽपि क्रीडाविशेषत्वात्तत्रापि शक्तिसाह्याच्च समुदायशक्त्या तस्यापि ग्रहणान्नाव्याप्तिरित्यर्थः। ननु करणरूपः स्कन्धार्थः समुदायशक्त्या फलरूपः प्रकरणाद्यनुगृहीतया तथा लभ्यते, परं व्यापारलाभोऽत्र कथमित्याकाङ्क्षायामाहुः—प्रपञ्चेत्यादि ॥१८॥१९॥२०॥ एवं सार्धैकोनविंशतिभिः स्कन्धार्थो निर्णीतः।

### का. २० निबन्धकठिनांशविवेचनम्।

दशमस्कन्धार्थनिर्णये समुदायो जन्मवाचीत्यादि, पूर्वकारिकायां नटवद्रूपान्तरं जन्मापरपर्यायं स्वीकृत्य त्रिविधानां भक्तानां प्रपञ्चं निवार्य निरोधात्मकमुद्धारं करोतीति निश्चितो दशमस्कन्धार्थ उक्तः, तथा सत्यवतारसामयिकानामेव निरोधो भविष्यति नानवतारसामयिकानां तदानीं रूपान्तरस्वीकरणात्मकजन्माभावादित्याशङ्कायामाहुः **समुदायो जन्मवाचीत्ये**केन, भगवान् हि सर्वभक्तसम्बन्धिनीः सर्वाः लीलाः कुर्वन् सदा विराजते, न तु तस्य स्वाभाविकं जन्मास्ति, नापि लीलानां कादाचित्कत्वमितिसिद्धान्तात् **सर्वक्रीडायुक्तस्य हरेः** सर्वलोकदर्शनार्थं समुदाय एकीभावो बहिर्यः सोऽवतारसमये जन्मोच्यते,

प्रक्रियापञ्चकं ह्यत्र जन्मार्थं प्रथमा मता ।
तामसानां तु भक्तानमुद्धृत्यै तु ततः परा ॥२१॥
राजसानां तृतीया तु चतुर्थी सात्त्विकी मता ।
अन्तर्याम्यधिदैवादिन्यायेनात्राऽपि वै हरेः ॥२२॥
भगस्य व्यपदेशः स्यादतस्तस्य निवृत्तये ।
भगस्य सहजत्वाय पञ्चमी प्रक्रिया मता ॥२३॥
चतुर्भिश्च तथा तत्त्वैस्तत्त्वैर्विंशतिभिस्तथा ।
एकाधिकैस्तथा षड्भिरध्यायैः क्रमशो मताः ॥२४॥
चतुर्मूर्तिर्हरिर्जातस्तेनाध्यायचतुष्टयम् ।
प्रथमे वासुदेवोऽभूद्वसुदेवहृदि स्थितः ॥२५॥
मृत्युवारणसामर्थ्यमन्यथा न भवेत् क्वचित् ।

अतः परं त्रिभिः प्रकरणार्थं विभजन्तस्तदर्थमप्याहुः-प्रक्रियेत्यादि । प्रथमप्रकरणेऽध्यायविभागक्रमेण तेषामर्थं सार्द्धैः पञ्चदशभिराहुः-चतुरित्यादि । ननु जन्म तृतीय एव दृश्यत इति कथं चतुर्मूर्त्तिजन्मावगन्तुं शक्यमित्यत उपपादयन्ति-प्रथम इत्यादि । 'यत्तत्सत्त्वगुणं स्वच्छम्,' 'सत्त्वं विशुद्धं वसुदेवशब्दित'मित्यादिषु शुद्धस्य चित्तस्य सत्त्वस्य च वासुदेवाविर्भावस्थानत्वकथनाद्धृदीत्युक्तम् । स्थितोऽभूदिति अवतीर्णः । अवतारोऽत्र मूलस्थानादागमनम्, न त्वलौकिकतेजसः सङ्क्रमणमात्रमिति कार्यतः स्फुटीभविष्यति । स्थितौ गमकमाहुः-मृत्य्वित्यादि ।

तादृशे आसक्त्या तदानीन्तनानां यथा प्रपञ्चविस्मृत्योद्धारः, एवमनवतारसमये यस्य भक्तस्य निरोधश्चिकीर्षितस्तद्धृदये तस्यैव दर्शनार्थं सर्वक्रीडायुक्तस्य हरेः समुद्गमो जन्म वस्तीत्यर्थः, ततो हृदि प्रादुर्भूतरूपस्यैव सर्वलीलायुतस्य यदा निरन्तरचिन्तनध्यानादिना योगारूढत्वम्, तदा तस्य रूपस्य समुद्रायो भक्तेन सहैकीभवनं, स एव प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपो निरोध उच्यते, तथा च निरुक्तमायामनेकैकविषयत्वकृतो दर्शने च बाह्याभ्यन्तरकृतश्चैव विशेषोऽवतारानवतारदशायां नान्योऽपि कश्चिदिति न कोऽपि शङ्कालेशः, एवं सति भगवतोऽन्यलीलावज् जन्माप्येका लीला, सापि नित्यैवेति जन्माष्टम्यां तदभिनयः सुष्ठ्वेवेति ज्ञेयम् । इति निबन्धकठिनांशविवेचनम् ।

सङ्कर्षणो द्वितीये तु स्फुटो दैत्यवधाय हि ॥२६॥
तथा तृतीये प्रद्युम्नश्चतुर्थो तुर्य उच्यते ।
न निवद्धो यतः कैश्चिदतः सर्वे विमोचिताः ॥२७॥
धर्मरक्षार्थहेतूक्त्यै धर्मवाधश्च वर्ण्यते ।
वसुदेवाद्देवकीतो मथुरातश्च गोकुलात् ॥२८॥
प्रादुर्भूतश्चतुर्मूर्तिर्भगवान्नाऽत्र संशयः ।
रूपान्तरस्वीकरणमध्यायत्रितयेन हि ॥२९॥
नटभावश्चतुर्थेन हेतुराद्ये निरूपितः ।
त्रिविधानां त्रिधा दुःखं हेतुर्जन्मनि वै हरेः ॥३०॥

क्वचिदिति। बुद्धौ क्रियायां च, तथा च फलोपहितावुद्धिः क्रिया च तद्वगमिके-त्यर्थः। तयेति वंशरूपकार्यार्थम् ॥२१॥२२॥२३॥२४॥२५॥२६॥२७॥

विमोचनं रूपान्तरेणाऽपि सम्भवतीत्यैकान्तिकं तद्गमकमाहुः-धर्मेत्यादि। तथा चैतद्दर्शनाद्विमोचनमपि तत्कार्यत्वेन ज्ञातव्यमित्यर्थः। नन्वेवं ततस्तत्र चतुर्णां भवत्वन्तः प्राकट्यम्, तथापि वहिः प्राकट्यं तु रूपद्वयेनैव दृश्यत इति चतुर्मूर्तिरेको हरिर्वहिः प्रकट इति कथमायातीत्याकाङ्क्षायामाहुः-वसुदेवादित्यादि। यो हृदि स्थितोऽभूत्स एव गर्भसङ्कर्षणोत्तरं वन्हययोगोलकन्यायेन श्रीवसुदेवध्यातदेवक्यां तत आविष्टस्तयोरेको वलभद्रो वभूवेतिवाक्यात्कृष्णकेशो देवकीतः सृष्टिहेतुषु सर्वतत्त्वेषु यः प्रविष्टः सः प्रद्युम्नो मथुरातो यः कैश्चिदपि न निरुद्धः स गोकुलात्, एवं प्रकारेण चतुर्मूर्तिर्यः स सर्वत एकीभूय प्रादुर्भूतः स भगवानेव, 'वसुदेवगृहे साक्षाद् भगवान् पुरुषः पर' इतिवाक्यात्संशयो नेत्यर्थः। एतेषु पुरुषोत्तमस्तु प्रकट एव, न तु तस्य जन्मेति सूचितम्। अत एव 'सिश्चन्त्यो जनमुज्जगु'रित्यत्र भक्तानामजातत्वज्ञानं वक्ष्यते सुबोधिन्याम्। तृतीयस्कन्धे च 'कृष्णद्युमणी'त्यत्र 'स्वशान्तरूपेष्वि'त्यत्र च श्रीमदुद्धवैरपि तथैवोक्तम् ॥२८॥

एवं सार्द्धैश्चतुर्भिराद्येऽध्यायचतुष्टयस्य तात्पर्यमुक्तं तस्मिन्नवान्तर-प्रकरणद्वयं पादोनेनाहुः-रूपान्तरेत्यादि। आद्याध्यायार्थमाहुः सपादैस्त्रिभिः-हेतु-रित्यादि। त्रिविधानामिति। सात्विकादिभेदेन त्रिविधानाम्। तद्गतमिति। भक्तनि-

भूमिर्माता तथा चाऽन्ये दुःखभाजो हरेः प्रियाः ।
कंसादेः कालतोऽज्ञानात्त्रिधा दुःखं तु तद्गतम् ॥३१॥
कालजं प्रभुसम्बन्धात्कंसजं हेतुवारणात् ।
वाक्यैरज्ञानसम्भूतं शक्यं तन्नितयं हरेः ॥३२॥
प्रश्नेन सहिताः पूर्वं चतस्रः प्रक्रिया मताः ।
उद्यमश्च तथा प्रोक्तः सामग्रीबल उच्यते ॥३३॥
भयाशक्तिः स्वविहारे रूपं स्वस्य तृतीयकम् ।
सम्मतिः सर्वदेवानां चतुर्थ्यपि निरूपिता ॥३४॥
रूपसामर्थ्यबोधाय कंसज्ञानादिरुच्यते ।
चतुर्धा स्वीकृतिश्चापि काले मूलस्वरूपतः ॥३५॥

ष्टम् । ननु भूम्युद्यमदर्शनाद्भूदुःखमेवावतारहेतुत्वेन वक्तव्यं न त्वन्यदुःखमपि तथात्वेन वक्तुं युक्तं गमकाभावादित्यत आहुः–कालजमित्यादि । कालो द्वापरकलिसन्धिरूपस्तज्जनितं भूमिदुःखं प्रभुसम्बन्धात् ‘पुरैव पुंसावधृतो धराज्वर’ इत्यनेनावतारहेतुतया गम्यते, कंसजं मातृदुःखं हेतुवारणात् । ‘अस्यास्त्वा’ मित्याकाशवाणीसिद्धो योऽष्टमगर्भरूपो हेतुस्तस्य न चास्यास्त इत्यनेन वारणाद्धेतुतया गम्यते । अज्ञानसम्भूतं कंसमौर्ख्यजनितमन्येषां दुःखं वाक्यैर्नारदोक्तैर्जातमिति तदपि हेतुतया गम्यते । एतेषां हेतुतावच्छेदकं रूपमाहुः–शक्यमिति निवर्तितुं शक्यम् । तथा च तन्निवृत्त्यर्थमवतार इति त्रयाणां निवर्त्यत्वेन हेतुता पूर्वाध्यायार्थः । यथा दुःखस्यावतरणहेतुता तथा प्रश्नस्य कथनहेतुतेति चतुःप्रकरणबोधितो हेतुरेव प्रथमाध्यायार्थ इत्यर्थः ॥ ॥२९॥३०॥३१॥३२॥

द्वितीयस्यार्थमुद्यमं पूर्ववद् द्वाभ्यामाहुः–उद्यम इत्यादि, तयेति चतुर्थी । स्वविहार इति सामग्रीत्यनुषज्यते । रूपमित्यादि ‘ततो जगन्मङ्गलमच्युतांश’मित्यनेनोक्तं स्वस्वरूपं व्यूहात्मकं तृतीयकं विहारकरणभूतम् । चतुर्थीति । भयनिवारकतया तयेति चतुर्थी सोऽपीत्यर्थः ॥३३॥ कंसज्ञानादिकं रूपस्यैव शेष इति न तेन प्रक्रियाधिक्यमित्याशयेनाहुः–रूपेत्यादि ॥

अतः परं सार्द्धेन रूपान्तरस्वीकरणं तृतीये चतुर्धोच्यत इत्याहुः–चतुर्धा स्वीकृतिरित्यादि । काले मूलस्वरूपत इति । रूपान्तरलक्षणस्य रूप-

वसुदेवस्य सम्मत्या द्वितीयाऽपि निरूपिता ।
देवक्याश्च तृतीयाऽपि चतुर्थी वाक्यनिर्गमैः ॥३६॥
चतुर्धा नटभावोऽपि देवक्या मायया तथा ।
पुनः कंसभयेनाऽपि वसुदेवेन च स्थितिः ॥३७॥
कर्मणो हेतुसिद्ध्यर्थं शेषोऽत्र विनिरूप्यते ।
अन्यथा नटलीलैव कंसाद्दुःखं निवारयेत् ॥३८॥
तावदेवाऽत्र नाट्यं हि यावल्लीलां न बाधते ।
अतो नाट्यस्य सङ्कोचो नाट्याध्याये निरूपितः ॥३९॥
एवं चतुर्भिरध्यायैर्नटवत्प्राकृतोऽभवत् ।

ज्ञानसापेक्षतया पूर्ववद्दकर्थ्यामिति काले अथ सर्वगुणेत्याद्युक्ते निशीथे मूलस्वरूपेण सा सूच्यत इत्यर्थः। देवक्याश्चेति सम्मत्येत्यनुषङ्गः। एवं तिसृभिर्मूलरूपं निर्धार्य चतुर्थी सोच्यत इत्यर्थः ॥३४॥३५॥३६॥

सार्द्धत्रिभिश्चतुर्थाध्यायार्थमाहुः--चतुर्धा नटेत्यादि। ननु मायोक्तिपर्यन्तमेव नटभावो दृश्यते न लग्नेऽपीति कथं तस्य चातुर्विध्यमित्यत आहुः--पुनरित्यादि। पलायने पुत्रापसारणज्ञानाद् गृहे स्थितौ च तदज्ञानाद्वसुदेवेन कृता स्थितिरपि तृतीयो नटभाव इत्यर्थः। 'तस्यां रात्र्यां व्यतीतायामि'त्यादिनोक्तं चतुर्थं तमाहुः--कर्मण इत्यादि। यदि कंसो नैवं कुर्यात्तदा वसुदेवाद्यपराधस्य ताभ्यां क्षमापितत्वात्न शीघ्रं वध्यो भवेदतस्तत्कर्मणो वधप्रयोजकत्वसिद्ध्यर्थं तदाहुः--अन्यथेत्यादि। तथा च 'अनयोरनवसङ्काश'इतिवद् ब्रह्महिंसादेर्हितत्वभानं शेषश्चतुर्थो भगवत्कृतो नटभावो निरूप्यत इतीहाऽपि चत्वार इति तथेत्यर्थः। नन्वेवं करणस्य किं प्रयोजनमत आहुः--तावदित्यादि। तथा च भगवान् हि नानालीलाकरणार्थं प्रवृत्तो न तु नाट्यार्थम्। अत एवं प्रकारेण तत्सङ्कोचनमेव प्रयोजनमित्यर्थः ॥३७॥३८॥ ॥३९॥ सिद्धं प्रकरणार्थमाहुः--एवमित्यादि। एवं सार्द्धैः पञ्चदशभिः प्रथमप्रकरणं विचारितम्।

इति जन्मप्रकरणम्।

१ बाधयेत्।

अतस्तामसभक्तानामष्टाविंशतिभिः क्रमात् ॥४०॥
मानमेयैः साधनैश्च फलैश्चापि पृथक् पृथक् ।
भगवान् सप्तधा लीलां कुर्वन्नुद्धारकः परः ॥४१॥
पुरुषोत्तमरूपेण यच्चकार तदुच्यते ।
तत्र प्रमाणभावेन सप्ताध्यायी निरूप्यते ॥४२॥
भगवच्चरिते यस्मात्प्रमाणमिह मृग्यते ।
अज्ञानमन्यथाज्ञानं प्रमाणं भक्तिहेतुकम् ॥४३॥
पुरुषाणामत्र निष्ठा स्त्रीणां मेये ततः परे ।
साधनं सकलानां च फलं स्त्रीषु प्रतिष्ठितम् ॥४४॥

अतः परं द्वासप्ततिभिर्द्वितीयं तामसप्रकरणं विचारयन्तस्त-स्याष्टाविंशत्याध्यायात्मकस्यावान्तराणि चत्वारि प्रकरणानि सप्तसप्ता-ध्यायात्मकानीति सार्द्धेनाहुः–अत इत्यादि अतः परम् ॥४१॥ अत्रत्या लीला न व्यूहरूपेणेति बोधनायाहुः–पुरुषोत्तमरूपेणेति । तथा च प्राकृतभावं नटवत्कृत्वा तथा लीलां कुर्वन् तामसभक्तोद्धारकः परः पुरुषोत्तमः स्वेन रूपेण यत्कृतवांस्तदत्र प्रकरण उच्यत इत्यर्थः । एतेनास्य प्रकरणस्योपजीवकत्वं पूर्वेण सह सङ्गतिरित्यप्युक्तम् । एतेनेयं न वासुदेवन्लीलेति बोधितम् ।

अत्राद्यप्रकणार्थमाहुः–तत्रेत्यादि । कथमस्य प्रमाणप्रकरणत्व-मित्याकाङ्क्षायामाहुः–भगवदित्यादि । तथाऽत्र भगवच्चरित्रे सप्ताध्यायं प्रमाणान्वे-षणस्यैव दर्शनादस्य प्रमाणप्रकरणत्वमित्यर्थः । ननु भगवता क्रियमाणस्य तस्य चरित्रस्य तत्र तत्र स्थितैस्तत्त्वगम्यमानत्वात् कस्य प्रमाणस्य मार्गणं येनास्य प्रकरणस्य तदाख्येत्याकाङ्क्षायामाहुः–अज्ञानमित्यादि । प्रमाणमिति । भावे ल्युट् । तथा च भक्तिप्रयोजितं यदज्ञानमन्यथाज्ञानं च तदेवाबाधितत्वात्प्रमाणं तदत्र तैस्तैस्तेषां तेषां भक्तानां चात्रान्विष्यत इति तदाख्येत्यर्थः ॥४२॥४३॥ ननु तामसप्रकरणे तामसानां भक्तानां भगवदासक्तिविशिष्टा प्रपञ्चविस्मृतिर्वक्तव्याः। तत्रावान्तरविभागस्य किं प्रयोजनमत आहुः–पुरुषाणामित्यादि । निष्ठेति विवक्षिता आसक्तिः, मेये फले च स्त्रियो भिन्नविधाः। तथा च निरोध्यभेदात्प्रकरणभेद इति निरोध्यस्वरूपादिबोधनं प्रयोजनमित्यर्थः ॥४४॥

अन्यथापि गतः कृष्ण उत्सवान् कुरुतेऽखिलान् ।
अत ऐश्वर्यभावोऽत्र प्रथमे विनिरूपितः ॥४५॥
पूतनामारणं वीर्यं यशस्तु शकटादिनुत् ।
शकटं तामसं प्रोक्तं तृणावर्तस्तु राजसः ॥४६॥
लालनं पुत्रभावेन सात्विकं मोहनं तथा ।
श्रीस्तु लीला नामयुक्ता ज्ञानं बन्धनबोधनम् ॥४७॥
यमलार्जुनयोर्मुक्तिर्वैराग्यं भगवान् परः ।
सप्ताध्यायास्तु यत्रैव तत्रैवं बुध्यतां क्रमः ॥४८॥
अमेये मेयबुद्धिर्हि प्रमाणमिति केचन ।
अष्टावत्र प्रमाणानि ह्ययमेकत्र रूपितम् ॥४९॥

एवमवान्तरप्रकरणप्रयोजनमुक्त्वाऽध्यायार्थप्रयोजनकथनमुखेन सप्तविधत्वं लीलानां स्फुटीकुर्वन्ति--अन्यथेत्यादि । शकटादिनुदित्यादिपदेन तृणावर्तभङ्गः । एकस्मिन्नध्याये लीलाचतुष्टयकथनं चतुर्विधानां निरोधायेत्याशयेनाहुः--शकटमित्यादि । अत्र तामसत्वं गुरुत्वात् । राजसत्वं चलत्वात् सात्विकत्वं ज्ञानपूर्वकत्वाद् बोध्यम् । सात्विकानामशास्त्रनिष्ठशास्त्रनिष्ठभेदेन द्वैविध्याद्द्वे लीले सात्विक्यौ । यशस्तु आधारोत्कर्षाधायकः सर्वजनाल्हादको विसर्पिगुणः सम्यक्त्वेन रूपेण वर्णनयोग्य गुणक्रियादिपौष्कल्यं वेति प्रथमसुबोधिन्यां स्थितम् । तदत्र लीलाचतुष्टयेऽपि सिद्ध्यतीति चतस्रोऽपि तथेत्यर्थः । तथापदेन गरिमलीलापि सङ्गृह्यते तेन पञ्चाऽपि तथा । नामयुक्तेति । नामकरणलीला तदग्रिमा रिङ्गणादिलीला च । एतासां श्रीत्वं सर्वापद्विवारकत्वाद् बोध्यम्, तच्च गर्गोक्तौ स्फुटम् । बन्धनबोधनमिति । बन्धनं बोधनं यस्य ब्रह्मत्वज्ञानस्य तत्तथा ॥४५॥४७॥

पर इति अग्रिमाध्यायोक्तः । स्वान्वयेन लीलाकरणात्तथेत्यर्थः । एवं क्रममग्रिमेष्वप्यतिदिशन्ति--सप्तेत्यादि । अत्र प्रमाणप्रकरणत्वं कैश्चिदन्यथाङ्गीक्रियते तदनुवदन्ति-अमेय इत्यादि । अत्र यद्यप्यरुचिबीजं कण्ठतो नोक्तं तथाऽप्येतस्या बुद्धेः प्रकरणान्तरेऽपि दर्शनादतिव्याप्तिरेव तद्बीजं बोद्धव्या । नन्वस्मिन् प्रकरणे अज्ञानान्यथाज्ञानरूपप्रमाणज्ञानानिरूपणात्प्रमाणाख्याङ्गीकृता सा कथं निश्चेयेत्याकाङ्क्षायां प्रमातृविचारेण निश्चेयेत्याशयेन तानाहुः--अष्टावित्यादि । प्रमाणशब्दोऽ-

प्रथमो वसुदेवो हि द्वितीयो नन्द उच्यते।
बालास्त्रियस्तृतीया हि चतुर्थो गर्ग उच्यते ॥५०॥
यशोदा पञ्चमी प्रोक्ता षष्ठरूपाविहाऽर्जुनौ।
उपनन्दस्तु निर्दिष्टः सप्तमो धर्मबोधकः ॥५१॥
देशदोषभ्रमं कृष्णो वारयामास चित्रधा।
आद्येन भगवन्मार्गे बाधकानि बहूनि हि ॥५२॥
द्वितीये तदभावो हि कृष्णेनैव भवेदिति।
साधकः सकलार्थानां तृतीये विनिरूपितः ॥५३॥
भक्तिप्रदश्चतुर्थे हि भक्तिवश्यस्ततः परः।

बाधितज्ञाने वर्तते बाधयोग्यव्यतिरिक्ते च, तत्सम्बन्धी यः प्रमाता प्रमाविषयः प्रमाकरणं च तत्सर्वं प्रमाणशब्देनोच्यत इति द्वितीयस्कन्धे 'अत्र प्रमाणं भगवान् परमेष्ठी यथात्मभूरि'त्यस्य सुबोधिन्यां स्थितम्। तेनाऽत्र प्रमाणशब्देन ज्ञानं ग्राह्यम्। तत्कथमित्याकाङ्क्षयामाहुः--द्वयमेकत्र रूपितमिति। भगवल्लीलारूपमज्ञानमन्यथाज्ञानं चेति द्वयमेकत्रैकस्मिन्नध्याये उक्तम्। तत एकस्य प्रमाणस्याधिक्यात्तान्यष्टावित्यर्थः ॥४८॥४९॥तद्दर्शयन्ति--प्रथम इत्यादिना। अत्र प्रमातेत्यध्याहृत्य योजना, स हि स्वागमनविषयकाज्ञानं स्वपुत्रे भगवति श्रीनन्दस्यात्मपुत्रत्वेन ज्ञानमेव च तद्वाक्यैर्विचारितवानतस्तदेवान्विष्यते। एवं द्वितीये श्रीनन्दोऽपि 'नन्दः स्वपुत्रमादाये'त्यत्रोक्तं स्वपुत्रत्वमेव प्रमितवानिति तदेवाबाधितत्वात्प्रमाणत्वेनान्विष्यते। एवं तृतीयेऽपि शकटभङ्गस्य बालाः प्रमातारस्तृणावर्तभङ्गस्य स्त्रियः। तत्रान्येषां 'न ते श्रद्दधिर' इति 'हिंस्रः स्वपापेन विहिंसित' इति हेत्वज्ञानेन तत्र प्रमाणस्यान्वेषणम्। चतुर्थेऽपि गर्गः प्रमाता श्रीनन्दनिष्ठे अज्ञानान्यथाज्ञाने एव प्रमितवानिति तयोरेवान्वेषणम्। तथा पञ्चमे श्रीयशोदाऽपि स्वपुत्रत्वमेव प्रमितवती। षष्ठे यमलार्जुनावपि नलकूबराख्यस्थायां बद्धोलूखलमेवामन्त्रयन्तौ नन्दपुत्रत्वमेव प्रमितवन्ताविति ज्ञायते। सप्तम उपनन्दस्त्वमावन्यतमो वापीति वदन् लौकिकबालत्वस्यैव प्रमाता स्फुट एवेतिप्रमातृविचारेण तन्निश्चय इत्यर्थः ॥५०॥५१॥ सप्तधा लीलाकरणस्य प्रयोजनमाहुः--देशेत्यादिसार्द्धैस्त्रिभिः। तथा च स्वरूपधर्मादिजिज्ञासूनामेतदुक्तं धर्मवत्त्व-

सर्वोद्धारप्रयत्नस्तु सर्वेषां सर्वदोषनुत् ॥५४॥
ततोऽपि परमानन्ददायी सप्तम ईर्यते ।
प्रपञ्चविस्मृतिः सर्वा तदासक्तिः स्फुटैव हि ॥५५॥
प्रमाणबलमासाद्य सर्वेषां गोकुले ह्यभूत् ।

( अथ तामसप्रमेयप्रकरणम् )

प्रमेये बालरूपेऽपि प्रमाणादखिलं स्थितम् ॥५६॥
उत्सवेन भयेनापि कौतुकेन विशेषतः ।
गर्गवाक्यैर्मुग्धभावैरत्याश्चर्यनिरूपणैः ॥५७॥
यमलार्जुनभङ्गेन बकघातादिभिस्तथा ।
सर्वव्यसननिर्मुक्त्या कृष्णासक्तमभून्मनः ॥५८॥
अतः प्रमेयसम्पत्त्या कृष्णासक्तिर्हि वर्ण्यते ।
सर्वतस्त्वधिकः स्नेहः पूर्वत्र विनिरूपितः ॥५९॥
आसक्तिस्तु द्वितीये हि तृतीये व्यसनं मतम् ।
फलप्राप्तिश्चतुर्थे हि सिद्धो रोधश्चतुर्विधः ॥६०॥

ज्ञापनं तत्तल्लीलाकरणप्रयोजनमित्यर्थः । अवतारकालीनेषु सप्तविधलीलासिद्धं फलव्यापारभूतं कार्यमाहुः—प्रपञ्चेत्यादि ॥५२॥५५॥ एवं चतुर्दशभिः प्रमाणप्रकरणं विचारितम् । तत्र प्रायेण मत्स्याध्यायं पुरुषाणामेव भूयो व्यापारकथा दृश्यते इति तेषामेव निष्ठा सिद्धा ॥

अतः परं मातृचरणप्रभृतीनां तां बोधयितुं सार्द्धत्रयोदशभिः—प्रमेयप्रकरणं विचारयन्तः पूर्वं त्रिभिराख्यां साधयन्ति—प्रमेय इत्यादि । प्रमाणात् ल्यब्लोपे पञ्चमी । अज्ञानसहितान्यथाज्ञानरूपं नन्दसूनुत्वज्ञानं प्राप्य अखिलं तत्तल्लीलाकर्तृत्वं स्थितं निर्णीतम् । उत्सवादिसहकृतेन तेन निर्णयेन सर्वेषां मनस्तथाऽभूत् । अतः प्रमाणकार्यानन्तरं प्रमेयसम्पत्त्या सप्तम्यर्थे तृतीया, बालरूपपूर्णतायां पौगण्डावस्थाकृता कृष्णासक्तिर्हि यतो हेतोर्वर्ण्यते । अतः प्रमेयसम्पत्त्यनन्तरभाविकृष्णासक्तिबोधकत्वात्प्रमेयेत्याख्येत्यर्थः ॥५६॥५८॥ नन्वासक्तिः पूर्वप्रकरणेऽपि सिद्धैवेति किं पुनर्निरूपणेनेत्याकाङ्क्षायां सर्वेषामवान्तरप्रकरणानां तात्पर्यमाहुः—सर्वत इत्यादिसार्द्धेन । तथा च फलपर्यन्तावस्थाबोधनार्थं चत्वारि प्रकरणानीत्यर्थः ।

आसक्तिः सप्तधा त्वत्र रूपसौन्दर्यभावतः ।
क्रिययाऽभीष्टदानेन स्त्रीगोबाला वशीकृताः ॥६१॥
क्षणं चाऽदर्शने तस्य मृतिः पर्व द्वितीयकम् ।
माहात्म्यज्ञानसिद्ध्यर्थं मरणान्मोचनं ततः ॥६२॥
एवं त्रिभिर्दृढासक्तिरध्यायैर्विनिरूपिता ।
साधारण्येन सर्वेषां विशेषेण विभागशः ॥६३॥
बालानां च गवां चैव सर्वेषामेव गोकुले ।
भोग्यस्त्रीणां क्रमेणैव दृढासक्तिर्निरूपिता ॥६४॥
रूपस्याऽनुभवः स्त्रीषु तेनाऽऽदौ गोपिकामनः ।
वचनं चान्तिमे प्रोक्तं कायिकस्तु ततः परम् ॥६५॥
बलभद्रस्य बोधाय भगवद्वचनानि हि ।

तत्रैव कुतः सप्ताध्यायीत्यत आहुः आसक्तिरित्यादि। पूर्वोक्तरीत्यैश्वर्यादिभावेन लीलाकरणादासक्तिः सप्तधा तेन सप्ताध्याया इत्यर्थः। येन प्रकारेणात्रैश्वर्यादिभावस्तान् पदार्थान् स्फुटीकुर्वन्ति--रूपेत्यादि। स च 'तं गोरजश्छुरिते'ति श्लोकद्वये स्फुटः। 'क्रियाकालीयदमनं' 'अभीष्टदानं कृष्णं ह्रदा'दित्यादिश्लोकपट्कोक्तम्। एतैस्त्रिभिः स्त्रीगोबालाः साधारण्येनाध्यायत्रये वशीकृता उक्ता इत्यर्थः ॥५९॥६१॥ क्रियाध्याये भक्तक्लेशोक्तेस्तात्पर्यमाहुः--क्षणं चेत्यादि। तथा च पूर्णासक्तिज्ञापनार्थं तन्निरूपणमित्यर्थः। ननु तथाऽप्यभीष्टदानाऽध्याये दावाग्निकथनस्य किं प्रयोजनमत आहुः- माहात्म्येत्यादि। तदभाव आसक्तेर्भक्तित्वं न स्यादतस्तस्यास्तथात्वाय तत्कथनमित्यर्थः। पञ्चदशादिचतुष्टयार्थमाहुः--विशेषेणेत्यादि ॥६३॥६४॥ ननु रूपसौन्दर्यस्य सर्वदृग्गोचरत्वात्कथं मुख्यतया स्त्रीवशीकारफलमवगन्तुं शक्यमित्यपेक्षायामाहुः--रूपस्येत्यादि। आदौ द्वादशे 'पीत्वा मुकुन्दे'तिपद्येन, अन्तिमेऽष्टादशे वेणुगीतेन प्रोक्तमिति अनुभवबोधकं प्रोक्तम्। तथा च ताभ्यामवगन्तुं शक्यमित्यर्थः। नन्वेवं द्वाभ्यामेव प्रकरणलीलाभ्यां पूर्णासक्तौ सिद्धायामग्रिमस्य किं प्रयोजनमत आहुः--कायिकस्तु ततः परमिति। तथा चोत्सेकरूपानिष्पूर्णत्वबोधनाय तदुक्तिरित्यर्थः। प्रथमे भगवता बलभद्रस्य भगवत्त्वं बोधितं यत्राग्रे धेनुकवधस्तत्कृतस्तस्यात्र कः प्रसङ्ग इत्यत आहुः--बलभद्रस्येत्यादि। तथा च तस्य भगवद्वाक्यबोधनं प्रयोजनम्।

स्वधर्माः सकला एव बलभद्रे निरूपिताः ॥६६॥
लोकानां च प्रतीत्यर्थं तेन धेनुकमारणम् ।
आसक्तेस्तु परीक्षा हि कालीयदमने मता ॥६७॥
स्नेहमात्राच्च चैतावत्किं तु जीवनदानतः ।
युक्तासक्तिरिति प्रोक्तं दावाग्नेर्मोचनं महत् ॥६८॥
ततः कृष्णप्रसादेन कालदुःखनिवारणम् ।
बालकानां समस्तानां क्रीडया बाधनाद्रिपोः ॥६९॥
गवां दावाग्निमोक्षेण सर्वेषां कालजैर्गुणैः ।
गोपीनां वेणुनादेन दृढासक्तिः स्थिराऽभवत् ॥७०॥

(अथ तामससाधनप्रकरणम्)

अतः परं कायिकेन कृष्णे व्यसनमीर्यते ।
दैहिकान् सकलान् भावान् निजां व्रीडां च दैहिकीम् ॥७१॥

तेन तच्चरित्रमपि मूलचरित्रमेवेति ज्ञापनाय तदुक्तिरित्यर्थः। ननु त्रयोदश ईदृश-दारुणक्रियायाश्चतुर्दशे च तादृश्या निरूपणस्य किं प्रयोजनमत आहुः-आसक्तेरित्यादि। स्नेहमात्रादिति। स्वविषयकात्स्नेहमात्राद्भगवतो ज्ञापयितुं सम्मतेत्यर्थः। युक्तेति जीवयितरि युक्ता। प्रोक्तमिति ज्ञापयितुं प्रोक्तम् ॥६५॥६८॥

पञ्चदशे प्रलम्बवधस्य श्रीमात्रादिकृततत्त्वबोधनायाहुः-तत इत्यादि। सर्वेषामिति। वर्षाशरदृतुगुणवर्णनेन तत्कालवैसादृश्याभावबोधनात्सर्वेषामाध्यात्मिककालज-दुःखनिवारणं बोधितमित्यर्थः। अत्र कालस्यैव प्राधान्येन स्वस्य तटस्थसाद्वैराग्यभावः। पूर्वत्र दवाग्निपानस्य ज्ञानपूर्वकत्वाज्ज्ञानभावः। ततः पूर्वमारोहणादिक्रीडायां परिदृढत्वस्य श्रीमयुक्तत्वाच्छ्रीभावः। अष्टादशे तु 'रसो वै सः' इति श्रुतिनिरूपित-ब्रह्मत्वस्य स्फुटीकरणाद्धर्मिभावोऽपि स्फुट एवेति सार्द्धत्रयोदशभिः प्रमेय-प्रकरणं विचारितम् ॥६९॥७०॥

अतः परं चतुर्विंशतिभिः साधनप्रकरणं विचारयन्तः प्रकरण-समाख्याबीजमाहुः अतः परमित्यर्द्धेन। व्यसनं नाम तद्विना स्थातुमशक्तिः। तथा च तद्बोधककायिकव्यापारस्यात्र निरूपणादस्य साधनाख्येत्यर्थः। तत्र व्युत्पादयन्तः प्रथमाध्यायस्यार्थमाहुस्त्रिभिः। दैहिकानित्यादि। तदेव हीति।

परित्यज्य हरिप्राप्त्यै यदेव स्यात्तदेव हि।
वैदिकं लौकिकं चापि तत्कर्त्ता व्यसनी मतः ॥७२॥
अतः कुमारिकाः पूर्वं व्रतं चक्रुरितीर्यते।
ततो लौकिकभावं हि परित्यज्य तदाज्ञया ॥७३॥
यथोक्तमखिलं चक्रुस्तत ईशोऽन्वतुष्यत।
सम्बन्धिनां मत्सरादिदोषाभावाय बोधनम् ॥७४॥
प्रशंसा सर्ववृक्षाणां ततः सिद्धास्तु बालकाः।
सर्वदोषान् परित्यज्य क्षुज्जये शक्तिवर्जिताः ॥७५॥
हरिं विज्ञापयामासुर्व्यसनाज्ञान्यगामिनः।
भोगद्वयं हरेरेव स्त्रीबालानां निरूपितम् ॥७६॥
लौकिकास्तु समाख्यातास्तत्रैव न हरेस्तथा।

हि यतो हेतोः कायिकत्वेन तदेवात्र विवक्षितमित्यर्थः। अत्र हरिप्राप्त्या इति फलनिर्देशो व्यसनान्तरनिरासार्थः। नन्वेवं सति तत्र गोपानां किमिति नयनं वृक्षाणाञ्च स्तुतिरित्यत आहु-सम्बन्धिनामित्यादि। बोधनमिति। *नर्मादिलीलाज्ञापनम्। तथा चैतदग्रिमाऽध्याये बालकानां व्यसनित्वं वक्तव्यमिति तेषामधिकारसम्पत्तिबोधनाय यन्छेपत्वेन नयनं प्रशंसा चेत्यर्थः। प्राकरणिकोपयोगी अध्यायार्थ उक्तः। स्वतन्त्रमर्थमाहुः-भोगेत्यादि। हरेरिति पञ्चमी। तथा च व्यसनिनामैहिकस्यापि भगवदधीनत्वज्ञापनं तस्यार्थ इत्यर्थः ॥७१॥७६॥

ननु व्यसनिभोगस्य भगवदधीनत्वे निरूपणीये यज्ञपत्नीकृतान्नाहरणमात्रं वक्तव्यं तदासक्तिकथायाः सत्क्रियायाश्च किं प्रयोजनमत आहुः-लौकिका इत्यादि। व्यसनित्वं ह्यत्र हरिप्रीत्यर्थकलौकिकवैदिकान्यतरकर्तृत्व-

* सहनीता बालका 'अथ गोपै'रित्यनेन मिलिताश्च भिन्नाः। तत्र सहनीतानान्तु पूतनोदरनिवेशनेन क्षारेण मलनिवृत्तिवत् शोधनम्, तच्च चरणारविन्दसम्बन्धेन मृत्तिकादानेन च, अतस्तेषां परमशुद्धत्वज्ञापनार्थं सहनयनमन्तरङ्गलीलायाम्, 'तदिमे विदु'रित्यनेन प्रशंसा, अतः सहनीतानां तु दोषाभावस्य पूर्वमेव सिद्धत्वात् नर्मादिलीलाज्ञापनम्, अन्येषां दण्डवृक्षप्रशंसाव्याजेन व्रजस्थपदार्थजातस्य भगवदर्थत्वबोधनम्, तेनैव दोषनिवृत्त्या शुद्धत्वमितिविवेकः।

वैदिकेऽपीहि विप्राणां तद्भार्याणां निरूप्यते ॥७७॥
तामसाः सर्व एवाऽत्र गोकुलस्था न केवलम् ।
इति दर्शयितुं विप्राः सत्रिणोऽपि निरूपिताः ॥७८॥
एकप्रकारा एते हि तेनैकात्र विमोचिता ।
साधनप्रक्रिया त्वेषा तेन ताः स्वगृहं गताः ॥७९॥
तद्भर्तारोऽपि नाऽऽयाताः सम्बन्धेनैव बोधिताः ।
गोपिकानां प्रसङ्गेन यतस्ता विनिरूपिताः ॥८०॥
अतस्तासां फले चैताः फलं प्राप्स्यन्ति निश्चितम् ।
निर्दुष्टैर्भोजनं कार्यं निर्दुष्टान्नस्य नाऽन्यथा ॥८१॥
भक्त्या हृतानां भक्तानां वृक्षाणां चेति निश्चयः ।
व्रतं वृत्तिपरिज्ञानं दानं माहात्म्यबोधनम् ॥८२॥
द्वाभ्यां चतुष्टयं प्रोक्तं तदीयान्यविभेदतः ।
द्विविधं कर्म लोके हि वैदिकं हेतुसम्भवम् ॥८३॥
आद्ये श्रद्धापरित्यागः पूर्वेण विनिरूपितः ।

लक्षणं विवक्षितम्, तेन ते द्विविधास्तत्र लौकिकानां व्यसनिता कुमारीव्रतकथया समाख्याता । तत्रैवाध्याये न हरेस्तथा, न हरेः सम्बन्धिनी विपक्षता वैदिकेऽपि समाख्याता इति तत्कथनावश्यकत्वाद्धेतोर्विप्राणां तद्भार्याणां च सा निरूप्यत इति योजना ॥७७॥ ननु सत्रिणो विमलात्मा सात्त्विकाः कर्मिलाद्राजसा येति तेषां कथमत्र कथनमित्याकाङ्क्षायामाहुः—तामसा इत्यादि । अत एव सत्रिभिरपि 'मूढा न विद्मह' इति मूढत्वं स्वविशेषणमुक्तमतो नात्र संशय इत्यर्थः । बोधिता इति मोक्तव्यत्वेन बोधिताः । यान्तक्षुन्निवृत्तेः प्रकारान्तरेणापि सम्भवात् किमित्ययं प्रकारो भगवता कृत इत्याकाङ्क्षायामाहुः—निर्दुष्टैरित्यादि । 'एकं भगवतः कार्य'मितिन्यायेनान्यदपि प्रयोजनमाहुः—व्रतमित्यादि । अत्रापि वरदानमैश्वर्यधर्म इत्यैश्वर्येण लीला प्रथमे द्वितीये च माहात्म्यबोधनादिना वीर्येण बोध्या ॥७८॥८२॥

अतः परं चतुरध्यायात्मकमेकं प्रकरणमिति बोधयन्तस्तदर्थमाहुः--द्विविधमित्यादि । वैदिकमिति वेदोक्तकामप्रयुक्तम् । हेतुसम्भवमिति । लौकिकरीतिकृतादृष्टकामहेतुकम् । पूर्वेणेति मत्प्रध्यायेन । द्वितीये तु फलोपधाय-

अन्वयव्यतिरेकाभ्यां हेतुकः सफलो मतः ॥८४॥
तन्निराकरणं कार्यं तेनाध्यायचतुष्टयम् ।
हेतूनाऽऽदौ निराकृत्य यत्सत्तद्धि ह्यकारयत् ॥८५॥
देवता तत्र नियता तेन साऽपि निवारिता ।
गोवर्धनस्य धृत्यैव निस्तम्भा साऽभवद्यतः ॥८६॥
शङ्कादोषोऽपि गोपानां निराकार्यस्तु कर्मणे ।
हविर्मन्त्रेज्यरूपाणां सम्मत्यर्थं तुरीयकम् ॥८७॥
एवं पूर्वं परित्यज्य ह्युक्तं कार्यमीरितम् ।
अवैष्णवानां पूर्वेषां व्रतानां त्याजनं न हि ॥८८॥
वैष्णवान्यपि कार्याणि त्यक्तव्यानीति बोधने ।
नन्दस्यैकादशी प्रोक्ता साधनं पञ्चधा स्थितम् ॥८९॥
एतावदेव कर्त्तव्यं तेन यद्वाञ्छते हृदि ।
हेतुवाद इवाऽत्रापि फलं कृष्णः प्रयच्छति ॥९०॥

कमपि सर्वथा न कार्यमिति सम्यग्बोधयितुं चतुरध्यायीत्याहु –अन्वयेत्यादि । प्रथमाध्यायार्थमाहुः–हेतूनित्यादि । हि यतो हेतोः हि निश्चयेनादौ हेतून् वृष्टिहेतून् मेघेन्द्रपरम्पराधर्मान् 'कर्मणा जायते जन्तु'रित्यादिना निराकृत्य यत्सिद्धं सत् तद् अकारयत् । तेन कर्मविशेषकारणेन तत्र कर्मणि फले च नियता देवतापि इन्द्ररूपा निराकृता । तत्र गमको द्वितीयाध्यायार्थ इत्याहुः–गोवर्द्धनस्येत्यादि । तृतीयाध्यायार्थमाहुः–शङ्कादोष इत्यादि । यदि भगवति समर्थत्वनिश्चयो न स्यात्तदा पुनर्वर्षान्तरे तत्करणे इन्द्रकोपादिशङ्कया तत्प्रतिबन्धः स्यादतः कर्मणे गिरियागार्थं शङ्कादोषो निराकार्यस्तथा च तन्निवारण तदर्थं इत्यर्थः । चतुर्थस्याहुः–हविरित्यादि । हविः कामगवी, तस्य तदाधारत्वात् । एव मन्त्राः सुरभेय । इज्यो देवतारूप इन्द्रः । गिरियागे तेषां सम्मत्यर्थं तुरीयं तदुक्तमभिषेचनमर्थ इत्यर्थः ॥८३॥८६॥

प्रकरणसिद्धमर्थमाहुः–एवमित्यादि । अत्रापि गिरियागकारण यज्ञः-कार्यम् । गोवर्धनोद्धरण श्रीकार्यमापन्निवारकत्वात् । शङ्कानिवारणं ज्ञानकार्यं स्फुटमेव, मदत्याजन वैराग्यकार्यं इत्यपि स्फुटमेव, सप्तमार्थमाहुः–अवैष्णवानामित्यादि प्रोक्तत्यन्तम् । न हीति किन्त्विति शेषः ॥८८॥ बोधन इति बोधनार्थम् । नन्वस्मिन् प्रकरणे साधनानि निरूप्याणि तत्र वैकुण्ठनयनात्मकफलनिरूपणस्य

इति वैकुण्ठनयनं स्थापितं वाञ्छितं न हि ।
अवान्तरं फलमिदं विश्वासार्थं निरूपितम् ॥९१॥

कृष्णवाक्यं सदा कार्यं मायामोहं निवार्य हि ।
वृक्षवत्तु स्थितिः कार्या शुद्धान्नेन च वर्त्तयेत् ॥९२॥

इच्छां विज्ञाय दातव्यं माहात्म्यज्ञानपूर्वकम् ।
यागादयोऽपि त्यक्तव्या तदिच्छा चेद् व्रतानि च ॥९३॥

मध्ये स्वेष्टस्य पूर्त्यैव तदिच्छामवगत्य च ।
तत्परत्वेन सततं स्थेयं साधनसंग्रहः ॥९४॥

( अथ तामसफलप्रकरणम् )

अतः परं सप्तभिर्वै फलं कृष्णो निरूप्यते ।
षड्गुणैः सहितः पूर्वमैश्वर्यं त्रिविधं मतम् ॥९५॥

किं प्रयोजनमित्यत आहुः—साधनमित्यादि । नयनमित्यन्तम् । नन्वेवं सति तत उद्धरणं कुत इत्याकाङ्क्षायामाहुः—स्थापितमित्यादि । स्थापितमिति भावे क्तः । स्थापनमित्यर्थः । पाठो वा । तथा च भजनानन्दे द्विसित इदमवान्तरफलत्वेन विचारितमतस्तेषां न तत्र स्थापनमित्यर्थः ॥८९।।९१॥ एतस्यार्थस्य धर्मिकीलात्वं स्फुटमेव । पञ्चधा साधनं स्थितमिति यदुक्तं तद्विवृण्वन्तः प्रकरणमेतदुपसंहरन्ति कृष्णेत्यादित्रिभिः । अत्र साधनचतुष्टयं चतुर्भिरर्द्धैः पञ्चमं मध्य इत्यादिपादोनेनेति बोध्यम् ॥९२॥९४॥ एवं चतुर्विंशतिभिः साधनप्रकरणं विचारितम् ।

अतः परं सार्द्धसप्तदशभिः फलप्रकरणं विचारयन्ति-अन्तः परमित्यादि । प्रकरणसमाख्याबीजमाहुः—फलमित्यादि । तथा च पूर्वोक्तसाधनपञ्चकरणरूपआसत्त्युद्रेकानन्तरप्राप्यषड्गुणयुतपूर्णभगवद्रूपफलनिरूपणादस्य फलप्रकरणेत्याख्येत्यर्थः। अत्रैश्वर्यादीनां पूर्वोक्तः क्रमो नेतिप्रकारोऽपि विलक्षण इति बोधयितुं प्रथमतः प्रथमाध्यायार्थमाहुः—पूर्वमित्यादि ॥९५॥

'ध्वनिनाऽऽहूय'वाक्येन प्रेषयत्येष निश्चितम्।
फले वाक्यं न कर्तव्यं दोषश्चेद्वारयिष्यति॥९६॥
इति तासामगमनं गर्वेऽन्तर्भाव ईर्यते।
अयमेव हरेर्मार्गः सर्वोत्कृष्टो हि बुध्यताम्॥९७॥
सम्बन्धमात्रे सञ्जाते बहिर्वान्तरथापि वा।
कायेन मनसा वापि वचसा वापि सर्वथा॥९८॥
रमयत्येव हि निजान् सर्वथा नैव मुञ्चति।
अन्तर्धानकथा प्रोक्ता वाक्यं चाऽपि निरूपितम्॥९९॥
अध्यायद्वितयेनैव सकृद्रोगं निवारयन्।
आविर्भावं करोत्येष तथा वाक्यानि तुष्टये॥१००॥
रमते च रमातोऽपि विशेषेण रतिप्रदः।
परोक्षोऽपि रतिं चक्रे तेन वीर्यमुदीरितम्॥१०१॥
यशस्तु वचनैः स्पष्टं श्रीश्चाविर्भावतः स्फुटा।
चतुष्टयं निरूप्याऽग्रे धर्मी कृष्णो निरूपितः १०२॥

त्रैविध्यं स्पष्टयन्ति–ध्वनिनेत्यादि। ऐश्वर्यं हि स्वातन्त्र्यम्। *तत्र कर्तुमकर्तुं च सामर्थ्यमर्द्धेनोक्तम्। ततः पादोनेनान्यथाकर्तुं सामर्थ्यं तुरीयपादेन द्रुतमेवेत्यग्रिमसहितेन समुदितं त्रयम्, क्रमेणैव त्रयं वा। द्वितीयतृतीययोरर्थमाहुः–हरेरित्यादि। बुध्यतामित्यन्तोऽध्यायद्वयार्थः। तत्र हेतुमाहुः–सम्बन्धेत्यादिसार्द्धेन। तथा च इतिबोधयितुमध्यायद्वयेन द्वयमेव निरूपितमित्यर्थः। चतुर्थार्थमाहुः–सकृदित्यादि। तुष्ट्य इति वदतीतिशेषः॥९६॥१००॥ पञ्चमार्थमाहुः–रमत इत्यर्द्धेन। प्रयोजकविभागं स्पष्टयन्ति–परोक्ष इत्यादि। क्रमं भिदन्तः पञ्चमार्थमाहुः–चतुष्टयमित्यादिसार्द्धेन। एवमिति क्रमं भित्ता।

* ध्वनिना आह्वानं कर्तुं समर्थः, अङ्गगमनबोधकवाक्यैरङ्गगमनमकर्तुं समर्थः, प्रबलान्यपि स्ववाक्यानि दुर्बलानि कर्तुं दुर्बलान्यपि जीववाक्यानि प्रबलानि कर्तुमेवमन्यथाकर्तुं समर्थः। भगवद्वाक्यानङ्गीकारे जातं दोषं रमणहेतुत्वेन गुणरूपं कर्तुं समर्थश्च। असम्भावितं गर्वं कर्तुं सम्भावितां सर्वभावप्रपत्तिं अकर्तुं, जातमपि बहिःप्राकट्यं बाह्यरमणं च अन्तर्भूतं कर्तुं समर्थ इति च त्रयमित्यर्थः।

भोगे मध्ये महत्सौख्यं तस्मादेवं निरूपितम् ।
स्वरूपेण रतिः प्रोक्ता न धर्मैं रसरूपतः ॥१०३॥

ततो वैराग्यभावेन फलदाता निरूप्यते ।
कौतुकेनाऽपि पूर्वेषां करणं न सुखाय हि ॥१०४॥

अतः कौतुकरीत्याऽपि गताः सर्वे हरान्तिके ।
कालेनाऽऽग्रस्तमूर्धानः कृष्णेनैव विमोचिताः ॥१०५॥

अतस्तत्कर्म हरिसात्कृत्वा व्रजमुपाययुः ।
तमसि त्रितयं प्रोक्तं हरिस्तत्राधिदैविकः ॥१०६॥

स तु तूष्णीं भवत्यत्र कालस्त्वाध्यात्मिको मतः ।
हरभूत्यास्तु भूतानि स्त्रीणां हर्त्ता ततो निशि ॥१०७॥

शङ्खचूड इति प्रोक्तस्तं च हत्वा विमोचिताः ।
सुदर्शनो यथा जीवस्तथा सत्त्ववरो मणिः ॥१०८॥

कर्म स्वस्मिन् प्रतिष्ठाप्य रामे रत्नं न्यरूपयत् ।
एवं कालादिसम्बन्धात्तामसान् स्वान् न्यवारयत् ॥१०९॥

पूर्वसिद्धपरित्यागौ वैराग्यं कालदोषतः ।
ज्ञानं तु गुणगानं हि परोक्षे तत्प्रतिष्ठितम् ॥११०॥

षष्ठार्थमाहु. सार्द्धैः षड्भिः-तत इत्यादिभिः । वैराग्येण फलदातृत्वं व्युत्पादयन्ति कौतुकेत्यादिसार्द्धेन । पूर्वेषामित्यत्रैष्णवकर्मणाम । मूर्द्धपदं मुख्यबोधकम् । विमोचनेन सिद्धं फलान्तरमाहुः-अतस्तत्कर्मेत्यर्द्धेन । एतेन कदाचिद्दैवगत्या मौर्ख्याद्विना कृतमप्यन्यदैवतं कर्म, 'यत्करोषि यदश्नासी'त्याज्ञां ह्यनुसन्धाय भगवदर्पणं कर्तव्यमित्युक्तम् ॥१०१॥१०५॥ द्वितीयफलदानस्यापि वैराग्यहेतुकत्वं व्युत्पादयन्ति तमसीत्यादिद्वाभ्याम । काल इति शिवरात्रिरूपः। सत्त्ववर इति। सत्त्वहर्तृषु श्रेष्ठः ॥१०६॥ ॥१०९॥ वैराग्यस्वरूपं सहेतुकमाहुः-पूर्वेत्यादि, पूर्वसिद्धपरित्याग इति भगवत्परत्व-

प्रत्यक्षे भजनं श्रेष्ठमेवं चेद्रोधनं स्थिरम्।
पुरुषाणां तथा स्त्रीणां रात्रौ च दिवसे तथा ॥१११॥
ज्ञानं भक्तिश्च सततं चक्रवत्परिवर्त्तते।

(अथ राजसप्रकरणम्)

अतः परं राजसानां प्रक्रिया पूर्वसङ्ख्यया ॥११२॥
अष्टाविंशतिभिः प्रोक्तास्तथाऽध्यायैश्चतुर्विधैः।
यादवा राजसाः प्रोक्तास्तेषां पूर्वस्थितस्य हि ॥११३॥
त्याजनं सर्वथा कार्यं देशादेः षड्विधस्य च।
तत्राऽऽदौ दुःखकर्त्तारो मारणीया गुणैरिह ॥११४॥
ततः कालविमुक्तिर्हि देशद्रव्यैस्ततोऽपि हि।
ख्यात्या पूर्वाणि नामानि कर्माण्यपि पुरा यथा ॥११५॥
त्याजितानि समस्तानां तथा ख्यातिं ददौ हरिः।

परित्यागः। एतस्य यावदन्याश्रयस्तावदिति न्यायेन भगवदुपेक्षाहेतुत्वाद्वैराग्यत्वमित्यर्थः। सप्तमार्थमाहुः—ज्ञानमिति पादेन। प्रकरणे यत्सिद्धं तदाहुः-परोक्ष इत्यादि। तामसप्रकरणीयमुद्धारप्रकारमाहुः—ज्ञानं भक्तिश्चेत्यादि ॥१११३॥ एवं द्विसप्तितिभिस्तामसप्रकरणं विचारितम्।

॥ तामसप्रकरणं समाप्तम् ॥

अतः परं सार्द्धद्विनवत्यधिकशतेन राजसप्रकरणं पूर्ववदेव चतुःप्रकरण्या विचारयन्ति—अतः परमित्यादि। पूर्वं सङ्ख्ययेति सप्तसङ्ख्यया ॥११०॥११२॥

तत्र के राजसाः कथं तेषामुद्धरणमित्यपेक्षायां तत्प्रकारमाहुस्त्रिभिः—यादवा इत्यादि। सर्वथा कार्यमिति। रजसो विक्षेपकत्वेन तन्निवृत्तये तथा कार्यम्। सप्ताध्याय्याः प्रयोजनमाहुः—तत्रेत्यादि। दुःखकर्त्तारोऽरिष्टाद्यास्तदर्थं षट्। ततस्तदनन्तरं कालविमुक्तिर्हि निश्चयेन देशद्रव्यैः देशो द्वारकादिः द्रव्याणि अनुलेपनादीनि तैः। ततोऽपि धर्मिणाऽपि। अत्र गमकमाहुः हि यतो हेतोः ख्यात्या लोकप्रसिद्धया तया तेनैव ज्ञायत इत्यर्थः ॥११३॥११५॥ अध्यायचातुर्विध्यं स्फुटीकर्तुं माथमिकानां सप्तानां प्रमाणप्रकरणत्वाय पूर्ववत्प्रमातॄन् वदन्तः प्रकरणसमाप्त्यां तत्कृतनिरोधं च विश-

( अथ राजसप्रमाणम् )

प्रमाणं नारदः प्रोक्तस्तथाऽक्रूरो द्वितीयकः ॥११६॥
नन्दस्तृतीयः क्षत्ता तु चतुर्थो गोपिकास्तथा ।
हर्याविष्टो हरिश्चैव कुब्जा चाऽत्र मताः पुरा ॥११७॥
एते प्रमाणभूता हि राजसे सगुणो हरिः ।
एतैः सिद्धो राजसानां स्नेहः सर्वोत्तमः स्थितः ॥११८॥
नारदो देवगुह्यस्य कर्त्ता भयविवर्धनः ।
येन स्नेहः समुत्पन्नस्तथाऽक्रूरस्तु पोषकः ॥११९॥
सन्देहजननाच्चित्तं कृष्णार्थं तरलं यतः ।
स्नेहे द्वितीयमेतद्धि पर्व लोकेऽपि बुध्यताम् ॥१२०॥

टीकुर्वन्ति-प्रमाणमित्यादिसार्द्धाभ्याम्। प्रथमे नारदः कंसस्य भगवति देवकीपुत्रत्वमभितिमुत्पादितवान्। द्वितीयोऽक्रूरः श्रीनन्दे वसुदेवसुतत्वं ज्ञापितवान्। यद्यप्यत्र न प्रत्यध्यायं प्रमाणकथा, तथापि द्वितीये नारदस्य, तृतीयेऽक्रूरस्य प्रसङ्गो वर्त्तत इति तद्द्वारा प्रकरणे निवेशस्तयोः। श्रीनन्दः क्षत्ता च व्रजे, गोपिकाः स्वयूथे, हर्याविष्टो हरिर्व्यूहरूपोऽक्रूरे, (यादवेषु ज्ञातित्वादिसम्बन्धबोधनेन स्वस्मिन् वसुदेवपुत्रत्वं) पुरुषोत्तमत्वं ख्यापितवान्, कुब्जा च मधुरास्त्रीषु एवमेतेष्वध्यायेषु प्रमातृसम्बन्धेन तत्तत्प्रेमोत्पत्ते राजसे प्रकरणे एते प्रमाणभूताः। हि यतो हेतोः सगुणो हरिर्विशुद्धैरस्तैः प्रकरणे सिद्धोऽतः सगुणहरिः प्रमाजनकत्वात्प्रमाणप्रकरणेति समाख्या। यतश्च राजसानां यादवानां सर्वोत्तमः स्नेहो निर्णीत इति प्रकरणस्य निरोधोपयोगित्वमित्यर्थः ॥११६॥११८॥ नन्वेतेन कथं स्नेहनिर्णय इत्यतस्तत्प्रकारमाहुः-नारद इत्यादिसार्द्धैः षड्भिः। येनेति भयवर्द्धनेन। (अ. ३) 'माभूद्भयं भोजपतेर्मुमूर्षो'रिति ब्रह्मवाक्यविस्मरणान्मातापित्रोः स्नेहः सम्यग्भयजनकतयोत्पन्नः। तथा च नारदस्य तथोत्पादकतया स्नेहनिर्णायकत्वम्। एवमक्रूरस्याऽपि 'सिद्ध्यसिद्ध्योः समं कुर्या'दिति (अ. ३६) कंसाज्ञप्रमार्जने सन्देहोत्पादनादिह भगवदागमे भविष्यतीति चित्तं तयोस्तरलमभूदिति तदपि तथा। एतस्य तथात्वे लोकप्रसिद्धिं प्रमाणयन्ति-स्नेह इत्यादि ॥११९॥१२०॥ ननु श्रीनन्दवाक्यस्य कथं स्नेहोपयोग

नन्दस्तु पूर्वभावस्य निन्दां चक्रे विनिश्चिताम् ।
तेन मिश्रपरित्यागान्निर्दोषस्य भविष्यति ॥१२१॥
उत्कण्ठा परमा क्षत्रा गोपिकाभिश्च जायते ।
पुरुषाणां तथा स्त्रीणामाविष्टेनाभयं महत् ॥१२२॥
ततः सन्देहगमनात्स्थिरः स्नेहो भविष्यति ।
कृष्णेन पुरुषैर्योगः स्नेहवृद्धिः प्रदायकः ॥१२३॥
तथैव कुब्जया स्त्रीणामेवं स्नेहो निरूपितः ।
प्रमाणवल्लमासाद्य तथाऽऽसक्तिः प्रमेयके ॥१२४॥

इत्यत आहुः नन्दस्त्वित्यादि। तेनेत्यादि। श्रीनन्दवाक्यतः कंसीयस्वभावनिश्चयेन मिश्रपरित्यागात्कंसाश्रयमिश्रस्नेहपरित्यागान्निर्दोषस्य कंससम्बन्धरहितस्याक्रूरस्य चित्तं मधुरागमनोत्तरं तरलं भविष्यतीति 'नाहं भवद्भ्यां रहित' (अ. ३८) इत्यादिभिस्तद्वाक्यैरवसीयत इति तस्यापि दूरतस्तन्निर्णायकत्वम्। पुरुषाणां तथा स्त्रीणामिति। गोकुलस्थानामिति शेषः। एतेषां तामसत्वपरित्यागे राजसत्वमग्रे वक्तव्यमतो न प्रकरणविरोधः। आविष्टेन भयं महदित्यादि। व्यूहात्मकेन त्यागभयं कथं पुनर्नः मतियास्यत इति वाक्योक्तं महदुत्पादितम्। तत उत्तरं 'कालं प्राप्य श्रीमदुद्धवानीतसन्देशैस्त्यागसन्देहगमनात्स्थिरः स्नेहो भविष्यतीत्याविष्टस्यापि 'दूरतस्तन्निर्णायकत्वम्।*(यद्वा वसुदेवादिषु स्वनिमित्तस्य कंसाद्दुःखस्य कथनेन स्वस्मिन्नः सामर्थ्यं बोधयित्वाऽसमर्थं स्वगात्रे कंसः कथं न मारयिष्यतीत्याकारकं महद्भयमक्रूरे व्यूहात्मकेनोत्पादितम्। तदनन्तरं ब्रह्महृदे वैकुण्ठे दर्शिते स्वस्मिन् पुरुषोत्तमत्वे ज्ञापिते पूर्वसन्देहगमनात्स्थिरः--स्नेहो भविष्यति। अत एवाग्रेऽक्रूरस्य माहात्म्यज्ञानस्नेहोभयख्यापकानि 'नाहं भवद्भ्यां रहित' इत्यादीनि वाक्यानि।) पुरुषैरिति वायकमुद्गामादिभिः ॥१२१॥१२३॥

एवं चापूर्वसम्बन्धभाजां भगवति स्नेहः पूर्वसम्बद्धानां त्वासक्तिरिति द्वयीविधा प्रमाणप्रकरणे निरूपितेत्याहुः प्रमाणेत्यादि। ननु राजसेषु निरोद्धव्येषु तद्दुःखदातॄणां हननं तद्देश एव कर्तव्यम्, न तु व्रजे, तस्य तामसनिरोधस्थानत्वात्। अत्र व्रजे च व्रजस्थानामेव दुःखनिवृत्त्या तदन्तं पूर्वप्रकरणं

* नास्तीदं ( ) चिन्हान्तर्गतं मूले ।

अरिष्टो राजसानां हि गोकुले निधनं गतः ।
वासनालेशमात्रेण तत्र स्थास्यति सर्वदा ॥१२५॥
इतोऽपि चेद्धरिर्गच्छेन्नीत्वा सर्वस्य तामसम् ।
राजसास्ते भविष्यन्ति गोकुलस्था न संशयः ॥१२६॥
उभये च ततस्त्वग्रे सात्विका निर्गुणास्ततः ।
त्रयोऽपि सम्भविष्यन्ति मुक्तौ तेषां निरूपणम् ॥१२७॥
देवगुह्यस्य कर्त्ता हि नारदो देवसम्मतः ।
भगवत्सम्मतिस्त्वत्र नास्तीत्येवेति मे मतिः ॥१२८॥
यतः प्रबोधयत्येनं प्रद्युम्नत्वान्न दुष्यति ।
पूर्वं भावस्तु न ज्ञातः स्वाधिकारस्तु मध्यमः ॥१२९॥
पूर्वक्रुद्धा देववाणी पुत्रत्वाय यतो हरिः ।

वक्तव्यम्, तत अक्रूरोऽपि च 'तां रात्रिमि'ति पञ्चनिशाध्यायमारभ्य राजसप्रकरणं युक्तमित्याकाङ्क्षायामाहुः अरिष्ट इत्यादित्रयम् । राजसानामिति मल्लम्बष्ठकेत्यत्र पादचक्रदनकर्तृषु गणितत्वाद्राजसानां दुःखकर्तेति शेषः । हिंहंतौ । तामसमिति । अवज्ञादिजनकं मौढ्यम् । तथा च यत एवमतो इतोगोकुलस्था राजसा भविष्यन्तीति ज्ञापनाय तस्यात्र वध । पूर्वभावत्यागप्रयोजन मुक्तिलीलाप्रवेशः, तज्ज्ञापिका च तत्र द्वादशेऽध्याये 'अथैतत्परमं गुह्य'मित्यादिना तेषां त्रयाणामपि निरूपणम् । अतो न प्रकरणविरोधादिदोष इत्यर्थः । ननु नारदस्य भगवद्भक्तत्वाद्भक्तभयवर्द्धकत्वं न युज्यत इत्याकाङ्क्षायामाहुः–देवगुह्यस्येत्यादि । देवाना स्वक्लेशनिवृत्तिः शीघ्रमिष्टेति कलिप्रियेण नारदेन तत्कारयितु तं प्रेपितवन्त इति तेन तथेत्यर्थः ॥१२४॥१२७॥

ननु तर्हि भगवत्सम्मतिरपि भविष्यतीति शङ्कायामाहुः–भगवदित्यादि । इत्येवेति निश्चितमिति शेषः । तत्र नान्यस्य सम्मतिरित्याहुः–इति मे मतिः । अभ्युपगमे बीजमाहुः–यत इत्यादि । प्रबोधयतीति । अग्रिमाऽध्याये 'कृष्ण कृष्णाप्रमेयात्म'न्नित्यादिना यतः प्रबोधयत्यतो ज्ञायते नात्र भगवत्सम्मतिरिति । तेन देवप्रेरणादेव तथाकरणमित्यर्थः । ननु भगवत्त्वं जानतः प्रबोधनं न युक्तमत आहुः–प्रद्युम्नेत्यादि । ननु कथमज्ञानमत आहुः–स्वाधिकारेत्यादि । नन्वस्त्वेतदेवं तथापि यद्गृहे पूर्णस्य भगवतः प्राकट्य तयोरेवं क्लेशो न युक्त इत्यत आहुः–पूर्वमि-

प्रार्थितो वसुदेवाभ्यां ततो गमनयाञ्चया ॥१३०॥
अध्यात्मा नारदः क्रुद्ध उभाभ्यां बन्धनं तयोः।
मायया प्रथमे मुक्तिः कृष्णेनाऽग्रे भविष्यति ॥१३१॥
मायावशात्तदा याञ्चा कृष्णार्थं गमनं मतम्।
अधिकाराज्ञाऽपराधो नारदस्य भविष्यति ॥१३२॥
तथाऽपि प्रीयते नैव हरिरित्येव मे मतिः।
कंसादयो राजसा हि बुद्ध्या कार्यस्य साधकाः ॥१३३॥
तामसं केशिनं तेन प्रेषयामास राजसः।
मथुरायां तामसस्य वधो युक्तो न च क्वचित् ॥१३४॥
अतो गोकुलमासाद्य सोऽपि नष्टो विमुक्तये।
ज्ञाने तु बाधकः केशी तेनाक्रूरादयस्तथा ॥१३५॥

त्यादिसार्द्धम्। वसुदेवाभ्यामिति। 'पुमान् स्त्रिये'त्येकशेषः। बन्धनमिति। धारद्वयं बन्धनम्। तथा चापराधादेव तथा भाव इत्यर्थः। न चैवं सति नाभ्यादीनामपराधः शङ्क्यः। तत्र पूर्णमाकव्यस्यानभिसंहितत्वेन तदभावादिति फलबलादवसीयते ॥१२८॥१३१॥ ननु प्रथमं मायया कुतो मुक्तिरित्यत आहुः* मायावशादित्यादि। नन्वेवं सति तयैव कंसः कुतो न मारित इत्यत आहुः—कृष्णार्थमित्यादि। स्वयं कंसमारणस्य भगवता विचारितत्वात्तदर्थं तस्यास्ततो गमनमित्यर्थः। नन्वस्त्वेवं तथापि भगवदनभिप्रेतकरणान्नारदस्यापि क्लेश उचित इत्यत आहुः—अधिकारादिति। तथा च भगवत्प्रीत्यभाव एव तत्र क्लेशो न त्वधिको हरीतकीरूपत्वादित्यर्थः। *प्रीत्यभावस्त्वननुमोदनाद् बोद्धव्यः। एवं प्रथमार्थ उक्तः। अन्येश्वर्यैकार्यत्वं* स्वातन्त्र्यादेव स्फुटम्।

द्वितीयार्थं विचारयन्ति—कंसादय इत्यादि। हि यतो हेतोर्बुद्ध्या कार्यस्य साधका न तु मौढ्यादतो राजसा इत्यर्थः। केशिनस्तामसत्वे गमकमाहुः—ज्ञाने इत्यादि ॥१३२॥१३५॥

* ननु मायाकृष्णाभ्यां क्रमेण बन्धनान्मोचने को हेतुरित्यत आहुर्मायावशादित्यादि, 'न यमाथेपवर्गं मे मोहितो आत्ममायया' इति भगवद्वाक्यात् पूर्वप्रार्थनायां मायाया हेतुत्वान् मायया पूर्वं मोचनम्। कृष्णस्य प्राणाधिकप्रियत्वात् तस्मिन् कंसभये शङ्किते स्वस्थानादन्यत्र गमनप्रार्थनायाः कृष्णार्थत्वाद् द्वितीयवारं बन्धनात् कृष्णेन मोचनमित्यर्थः।

तथा भक्तावरिष्टोऽपि तावुभौ गोकुले हतौ ।
अन्यथा गोकुलस्थानां जीवनं न भवेत्क्षणम् ॥१३६॥
ज्ञानभक्तिप्रसिद्ध्यर्थमक्रूरागमनं पुनः ।
गोकुले बाधको व्योमो लीलायां कर्मणि स्थितः ॥१३७॥
परोक्षेऽपि हरेः सिद्ध्यै लीलायाः सोऽपि वै हतः ।
द्वाभ्यां त्रयोऽत्र निहताः परोक्षेण त्रयोऽत्र हि ॥१३८॥
मार्गाः पुष्टा भविष्यन्ति तेन राजसता स्थिता ।
सात्त्विकोऽप्युभयैर्दोषैरक्रूरः कंससङ्गतः ॥१३९॥
उभयोस्तु ततो नाशे भक्त्या कृष्णान्तिकं गतः ।
सिद्धान्तस्य परिज्ञानादासुराणां तथाऽभवत् ॥१४०॥
भगवच्छास्त्रविज्ञानात्सन्दिग्धं स उवाच ह ।

ज्ञानबाधकत्वे गमकमाहुः अत इत्यादि। उभयोर्गोकुले हनने हेतुमाहुः-तथेत्येकेन। तथा च जीवनार्थं ज्ञानभक्त्योरपेक्षितत्वात्तत्रत्यानां तत्प्रतिबन्धनिवृत्त्यर्थं तत्र तौ हतावित्यर्थः। एतेन पूर्वोक्तताऽप्यनुमता, तेषां राजसत्वभवने प्रकारश्चोक्तः। नन्वस्त्वेवं लीलान्तरस्य गोकुलोपयोगस्तथाऽप्यक्रूरागमनमत्र किमर्थमुक्तम्, तस्यैव तत्प्रतिकूलत्वादित्यत आहुः-ज्ञानभक्तीत्यादि। प्रसिद्ध्यर्थमिति विरहे जाते ज्ञानभक्त्योर्या प्रकृष्टा सिद्धिस्तदर्थम्। तथा च तदपि तेषामुत्कर्षायैव न तु निकर्षायेत्यर्थः। व्योमवधस्याप्येतदर्थत्वं वदन्तोऽध्यायद्वयोक्तलीलाया उपयोगं द्वाभ्यां स्फुटीकुर्वन्ति गोकुल इत्यादि। हरेः सिद्ध्यै लीलाया इति। हरेर्लीलाः *सिद्ध्या इति योजना। द्वाभ्यामिति ऐश्वर्यवीर्याभ्याम्। तथा च परोक्षेण* मार्गत्रयपोषणद्वारा राजसत्वनिर्णयार्थमत्रैतत्कथनमित्यर्थः ॥१३६॥१३८॥ एवं द्वितीयाध्यायो विचारितः। अत्र वीर्यकार्यं स्फुटमेव।

तृतीयाध्यायं विचारयन्ति-सात्त्विक इत्यादि। नन्वक्रूरस्य भक्तत्वात्कथं कंसानुरोधित्वमित्यत आहुः-उभयैर्दोषैरिति। राजसतामसैस्तैः। तत इति भगवद्विषयकैर्मनोरथैः। ननु तथापि भगवदानयनार्थोऽनुरोधस्तु सर्वथा अयुक्त इत्यत आहुः-सिद्धान्तस्येति आकाशवाण्युक्तस्य। अत्राग्रिमश्लोके वक्ष्यमाणस्य वा। तथेति आकारणात्मकनियोगकर्त्ता ॥१३९॥१४०॥ भगवच्छास्त्रविज्ञानादिति। भगवदिच्छा ज्ञातुमशक्या भगवान् स्वतन्त्र इति भगवच्छास्त्रं

यथाकथञ्चिद्दुष्टस्य परित्यागे तु सात्त्विकः ॥१४१॥
भक्तः सन् भगवत्पार्श्वे याति कृष्णश्च तुष्यति ।
मार्गत्रये ततः प्रोक्ता तस्य निष्ठा विशेषतः ॥१४२॥
कृष्णमाहात्म्यविज्ञानं भक्तिमार्गोपयोगि हि ।
स्वरूपबोधो ज्ञानार्थः कामना कर्मणि स्थिता ॥१४३॥
त्रिभिस्त्रयोऽपि सन्तुष्टा नन्दरामौ तथा हरिः ।
हरेर्निर्गमनं तस्मान्न युक्तमिति वै शुकः ॥१४४॥
गोपिकावाक्यरीत्यैव भगवद्गमनं जगौ ।
प्रतिबन्धादरिष्टादेर्न गोपीकायिकोद्यमः ॥१४५॥
वाक्येनैव च सन्तुष्टा वाचि तास्तु प्रतिष्ठिताः ।
अक्रूरे त्रितयं जातं वैकुण्ठे स्थापनाय हि ॥१४६॥

तस्य विज्ञानात् । एतत्कथोपनिबन्धनसिद्धं सिद्धान्तमाहुः-यथाकथञ्चिदित्यादि । अत्र ज्ञापकमाहुः-मार्गेत्यादि । निष्ठायाः फलमाहुः-कृष्णेत्यादिसार्द्धेन । अत्र श्रीनन्दस्य 'यो नन्दः परमानन्द' इति श्रुतेस्तत्प्रसादोऽपि मुक्त्युपयोगी ॥१४१॥१४३॥ एवं तृतीयाध्यायो विचारितः । अत्रापि माहात्म्यज्ञानादिकं यशःकार्यम् ।

चतुर्थाध्यायं विचारयन्तः एवमाघोषयदित्यन्तः पूर्वाध्यायशेष इत्याशयेनाहुः-हरेरिरित्यादि । दुष्टत्रयवधेन व्रजस्थानां राजससम्पत्तौ तस्माद् व्रजाद्धरेर्निर्गमनं न युक्तम् । वै निश्चयेन, तत्र स्थित्वाऽत्रत्यनिरोधवदत्र स्थित्वा तत्रत्य-निरोधस्यापि कर्तुं शक्यत्वाद्राजसत्वस्य जातत्वेन तौल्याच्चेति ज्ञापयितुं तथा गमनं जगौ । तथा च व्रजस्थानां भावोत्कर्षस्यैव बोधनार्थैव गमन-मित्यर्थः । तदग्रिमस्कन्धे भगवतैव 'रामेण सार्द्धमि'त्यादिना वक्तव्यम् । नन्वेवं सति कुतो भगवान्न कायेन निवारित इत्याकाङ्क्षायामाहुः प्रतीत्यादि । वासनायाः प्रतिबन्धकत्वं सप्तमे निर्णीतम्, तास्त्वियमागन्तुकी तत्राप्यल्पा तथापि दुष्टत्येतावत्प्रतिबन्धं कृतवती, अत एव वाक्यमात्रेण तोषोऽपि । न च तर्हि न्यूनत्वं शङ्क्यम्, तुः शङ्कानिरासे, ताः वाचि प्रतिष्ठिता कपित्वादुपनिषद्रूपत्वाच्च भगवद्वचन एव विश्वस्ता इति न न्यूनतेत्यर्थः । ननु त्रयाणां तोषेणाक्रूरस्य किं सिद्धमित्या-काङ्क्षायामाहुः-अक्रूर हीत्यादि । तत्र गमकमाहुर्हरीत्यादि । ननु प्रसादस्याराद्दुप-

ब्रह्महृदे निमग्नस्य तथा दर्शनमीर्यते ।
अन्यथा भगवत्सङ्गं न त्यजेच्च कथञ्चन ॥१४७॥
माहात्म्यं ज्ञापितं त्वर्थात्तेन स्तोत्रमुदीरितम् ।
संस्कारमात्रतस्तस्मिन् स्नेहभक्तिः प्रतिष्ठिता ॥१४८॥
व्यवहारो महद्भिः स्याद्यथा कृष्णे तथाऽभवत् ।
कुब्जानिःशङ्कवचनैः स्वेच्छां पूरयते हरिः ॥१४९॥
उभयोरन्तरा दण्डप्रसादौ सुनिरूपितौ ।
श्रुतमाहात्म्ययुक्तानां सन्देहविनिवारकौ ॥१५०॥
रजको दण्डनीयो हि पूर्वधाष्ट्र्यादिहाऽपि हि ।
सीताया विप्रियं वक्ता रङ्गशोभार्थमुद्यतः ॥१५१॥
अन्त्यजा देश्यपक्षीया रजकस्तेषु चाऽऽदिमः ।

कारकत्वे किं गमकमत आहुः–अन्यथेत्यादि ॥१४४॥१४७॥ एवं चतुर्थाध्यायो विचारितः। अत्र श्रीकार्यं भक्तानां विरहोद्बोधः स्फुट एव।

पञ्चमं विचारयन्त इदानीं तेषां फलानुपधायकत्वे भगवन्माहात्म्यज्ञानेन स्तोत्रकरणमपि न स्यादित्यत आहुः–माहात्म्यमित्यादि। नन्वेवं सति माहात्म्यज्ञापनादिकं किमर्थमित्यत आहुः–संस्कारेत्यादि। संस्कारमात्रतायां गमकमाहुः व्यवहार इत्यादि। तथा च पितृव्यत्वाभिमानपरित्यागपूर्विका भगवति सन्ततिस्नेहात्मिकेत्यर्थः। अत्र द्वाभ्यां वासनाभ्यां सर्वनिर्वाहादक्रूरे जीवान्तरप्रवेशपक्षो नाङ्गीकृत इतिबोधितम्। एवं पञ्चमाध्यायो विचारितः। अत्र ज्ञानकार्यं स्फुटमेव॥

अथ षष्ठं विचारयन्तोऽक्रूरस्य गृहं प्रति प्रेषणे वैराग्यकार्यत्वस्य स्फुटत्वादग्रिमेष्वस्फुटत्वात्तेषु तथात्वं वक्तुमग्रिमाध्याये धर्मिकार्यं बोधयितुं तदर्थकथनपूर्वकं तदाहुः–कुब्जेत्यादि। अग्रिमाध्याये उक्तैर्वैराग्यबोधकैः कुब्जानिःशङ्कवचनैः स्वेच्छां पुरान्वेषणविषयां पूरयतो हरेरक्रूरं प्रति वचनैः कृत्वा उभयमध्यगावर्थौ सन्देशपतितत्वाद्भक्तानां भगवत्त्वज्ञानोत्पादनद्वारा वैराग्यसन्देहनिवारकावुक्तावित्यर्थः ॥१४८॥१५०॥ ननु दण्डस्य कथं वैराग्यबोधकत्वमित्यनस्तदुपपादयन्ति–रजक इत्यादिसार्द्धेन। इहापीति धाष्ट्र्यादित्यनुषङ्गः। धाष्ट्र्यद्वयं स्फुटीकुर्वन्ति प्रातिलोम्येन। सीताया इत्यादि। नन्वेतादृशे दौष्ट्ये भगवान् दातुः श्रेयः किमित्यु-

कर्ममार्गे फलं सर्वैः प्राप्यते तत्तथोक्तवान् ॥१५२॥
वस्त्रदातुः फलं ते स्यादन्यथा तु वधः स्मृतः ।
मालाकारः प्रियो लोके भक्तानां सुतरां प्रियः ॥१५३॥
उभौ परीक्षितौ सम्यक् ततो दण्डादिकं कृतम् ।
तयोर्मध्ये वेषकर्त्ता नटानां सुतरां प्रियः ॥१५४॥
प्रसादः त्रिषु[1] वक्तव्यस्ततस्तस्मिन् पुरोदितः ।
धनुषो भञ्जनं चैव रक्षकाणां वधस्तथा ॥१५५॥
निग्रहोऽपि द्विधा जातस्तैः सर्वं प्रकटीकृतम् ।

(अथ राजसप्रमेयम्)

प्रमेयबलमासाद्य ततः सप्तभिरुच्यते ॥१५६॥
आसक्तिर्यादवानां च दुष्टानां च वधस्तथा ।
प्रमेये सप्त भक्ता हि तावन्तश्चाऽपि विद्विषः ॥१५७॥
देवकी वसुदेवश्च सर्व एव च यादवाः ।
आध्यात्मिकप्रकारेण द्वावेतौ परिकीर्तितौ ॥१५८॥

क्तवानित्यत आहुः कर्मेत्यादि । ननु प्रसादस्य कथं वैराग्यकार्यत्वमित्यत आहुः मालाकार इत्यादि । तथा च परीक्षैवोभयत्रापि वैराग्यबोधिकेत्यर्थः । नन्वेवं सति रजके किं परीक्षितं येन तस्मिन् प्रसादत्वावधानि वायके चेत्यत आहुः तयोरित्यादि । तयोरिति मालाकारवायकयोः । तथा च नटप्रियत्वाद्वायके प्रसादो न तु स्वतः । कर्मित्वाद्रजके तथात्वाव्यमिति सर्वं वैराग्यकार्यमेवेत्यर्थः ।एवं पञ्चाध्यायो विचारितः।

सप्तमार्थमाहुः धनुष इत्यादि । द्विधेति स्थावरजङ्गमभेदेन द्विधा । तैरित्यादि कुब्जारूपकरणद्विविधनिग्रहैः । सर्वं वसुदेवपुत्रत्वब्रह्मत्वादिकं प्रकटीकृतं यादवानां प्रमितिविपर्यीकृतमित्यर्थः । एवमूनपञ्चाशद्भिः प्रमाणप्रकरणं विचारितम् ॥

अथ राजसप्रमेयम् ।

अतः परं प्रमेयप्रकरणं सार्द्धत्रिंशद्भिर्विचारयन्तः समाख्या-बीजमाहुः प्रमेयबलमित्यादि । तथा च प्रमेयभूतस्य भगवतो यद्बलं तद्बोधकत्वात् प्रमेयप्रकरणेतिसमाख्येत्यर्थः । सप्ताध्यायात्मकत्वे बीजमाहुः–प्रमेये सप्तेत्यादि ॥१५६॥१५७॥ उभयान् गणयन्ति–देवकीत्यादिभिस्त्रिभिः ।

[1] त्रिषु ।

अधिदेवो गुरुः प्रोक्तः पुत्रदानात्स मोचितः ।
नन्दः पत्नीयुतश्चैव गोपिकाः कुब्जया युताः ॥१५९॥
अक्रूरः पाण्डवाश्चैव सप्तैते निःप्रपञ्चिताः ।
गजः पञ्च तथा मल्लाः सप्तमः कंस उच्यते ॥१६०॥
भ्रातरस्तत्प्रसङ्गेन हताः सप्तैव दोषतः ।
एतावानेव रूपे हि स्नेहद्वेषविनिर्णयः ॥१६१॥
जीवन्तो मुक्तिमायान्ति भक्ता द्विष्टा हताः पुनः ।
रूपं सर्वविमोक्षाय स्नेहासक्तिनिवारकम् ॥१६२॥
भयं यस्मात्तस्य वधः कारणं तत्पुरोदितम् ।
अध्यायद्वितयेनैव बहिरन्तर्व्यवस्थया ॥१६३॥
ततः कालस्य सर्वेषां भयहेतोर्निवारणम् ।
तेनैव सिद्धं माहात्म्यमासक्तः स्याद्भयादपि ॥१६४॥

ननु कंसभ्रातरोऽष्टौ हता' इति कथं सप्तेत्यत आहुः—भ्रातर इत्यादि । तथा च तेषां वधस्य प्रासङ्गिकत्वान्न तेन वध्याधिक्यमित्यर्थः । नन्वत्र निरोद्धव्यसाङ्क्ता एव वक्तव्या द्वेषिनिरूपणस्य किं प्रयोजनमत आहुः—एतावानित्यादि सपादश्लोकम् । तथा च रूपप्राकट्यस्य सर्वमोक्षार्थत्वात्प्रमेयबलसूचनार्थं तन्निरूपणमित्यर्थः । नन्वेवं सति यत्र क्वचिद्वक्तव्या अत्रैव कुत उक्ताः ? किञ्च, साधनाभावे कथं विमोक्षोऽपीत्यत आहुः—स्नेहेत्यादि । पुरेति सप्तमे, 'गोप्यः कामाद्भयात्कंस' इत्यत्र । 'तदि'त्यस्याग्रिमार्द्धेन सह योजना । उदितपदमत्राप्यनुपज्यते । तथा च स्नेहवृद्ध्यर्थमत्र निरूपणमित्यर्थः ॥१५८॥ १६३॥ नन्वत्र 'तत्र प्रवयसोऽप्यासन् युवान' इत्यादिनिरूपणस्य किं प्रयोजनमत आहुः—तत इत्यादि । तथा च माहात्म्यज्ञानपूर्वकत्वं विना स्नेहस्य भक्तित्वं न स्यादिति पूर्वाङ्गसम्पत्तिबोधनाय तन्निरूपणमित्यर्थः । ननु भयनिवृत्तेः स्नेहाङ्गत्वेऽपि भयस्य तद्विरोधित्वादन्यत्रैव निरूपणं युक्तं नात्रेत्यत आहुः—आसक्त इत्यादि । आसक्तिर्हैकतानत्वम्, सैवात्र मोक्षं प्रति व्यापारः । तथा च सा यथा स्नेहात्तथा भयादपि पेशस्कृद्रुद्धे कीटे तथा दर्शनात् । अत्र स्कन्धे सैव प्रतिपाद्यते । अतो भयस्य स्नेहविरोधित्वेऽपि कथनमत्र नायुक्तमित्यर्थः ॥१६४॥

एवं त्रिभिरिहाऽध्यायैरासक्तौ साधनं जगौ।
स्निग्धानां सान्त्वनाभावे प्रतिबन्धो भवेदिह ॥१६५॥
अतश्चतुर्भिर्भूतानां त्रिविधानां च सान्त्वनम्।
कालजं सान्त्वने व्यर्थमतः सद्भिर्निवारितम् ॥१६६॥
अज्ञाने सान्त्वनं युक्तं तेन द्वाभ्यां व्रजे जगौ।
यशोदा वाऽथ नन्दो वा गोपिका वा यदा यदा ॥१६७॥
कृष्णासक्तैकहृदयास्तदाऽऽविर्भावमेति हि।
बहिर्मुखदशायां तु न पश्यन्तीति दुःखिताः ॥१६८॥
अतः प्रबोध एवाऽत्र कर्त्तव्यो न ततोऽधिकः।
लोकवत्तु व्यवस्थानं लोकधर्मविनाशनः ॥१६९॥
नन्दादीनां न कर्तव्यः पिष्टपेषो न युज्यते।
प्रपञ्चपातने सक्तास्ते कृष्णस्य न सर्वथा ॥१७०॥

एवं चात्रावान्तरं प्रकरणद्वयमन्यत्सिद्ध्यतीत्याहुः-एवमित्यादि। सार्द्धेन। इहेति आसक्तौ। त्रिविधानामिति तामसराजससात्त्विकानाम्। ननु माहात्म्यज्ञापनाय क्रियमाणस्य कालनिवारणस्य भयाध्याये किमिति निरूपणमित्यपेक्षायामाहुः–कालजमित्यादि। सान्त्वने कृते कालजं दुःखं चेत्स्याचदा सान्त्वनं व्यर्थमिति योजना।' कालजे सान्त्वनमिति वा पाठः। नन्वासक्तिप्रतिबन्धाभावो हि सान्त्वनप्रयोजनम्, सा तु पूर्णा अनपनोद्या चेत्तत्सान्त्वनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः–अज्ञान इत्यादि। जगाविति। भगवत्स्थित्यज्ञानं जगौ। तथा च स्थित्यज्ञाने दोषारोपसम्भावात्तदभावार्थं सान्त्वनं युक्तमित्यर्थः। ननु बहुधापि सान्त्वने कृते दोषारोपो न निवारयितुं शक्यः शब्दापेक्षया लोके प्रत्यक्षस्य बलिष्ठत्वादित्याकाङ्क्षायां सान्त्वनस्य युक्तत्वं तत्कार्यनिरूपणद्वारा बोधयन्ति–यशोदा वेति द्वाभ्याम्। ततोऽधिक इति बहिः स्वानुभवः। तस्याकर्तृव्यत्वे हेतुमाहुः–लोकवदित्यारभ्य नेत्यन्तम्। अतो बहिः स्वानुभावरूपः पिष्टपेषो न युज्यत इत्यर्थः। अयुक्तत्वमुपपादयन्ति–प्रपञ्चेत्यादि। न सर्वथेति न प्रपञ्चविस्मृतिपर्यन्तम्। तथा च बहिरनुभवे तावत्पर्यन्तत्वाभावात्तादृशमनुभावनं न युक्तमित्यर्थः ॥१७०॥

अन्तर्मुखे त्वाविरासीत्ततो बोधनमुत्तमम् ।
चौर्यादिकं यथापूर्वं प्रपञ्चस्मृतिशान्तये ॥१७१॥
तथा बहिर्मुखत्वेऽपि दुःखं यच्छत्यबोधतः ।
मथुरास्था नाऽधुनाऽपि निःप्रपञ्चा न सर्वथा ॥१७२॥
अतः प्रपञ्चधर्माणां सङ्ग्रहस्तां विचार्य हि ।
जीवाः स्वभावतो दुष्टा दोषभावं नयन्ति हि ॥१७३॥

नन्वेवं सति क्रूरत्वमापद्येतेत्यत आहुः-अन्तरित्यादिति । आविरासीदिति आविरास्ते । पक्षे मासमपि तन्निरस्यन्ति चौर्यादिकमित्यादि । तथा चात्र क्वापि दोषलेपाभावात्क्वाऽपि लीला नायुक्तेत्यर्थः । ननु यथा व्रजस्थानां प्रपञ्चनिवृत्त्यर्थं भगवता यत्नो भूयान् क्रियते, तथा मथुरास्थानामर्थं कुतो न क्रियते निरोद्धव्यत्वस्यात्रापि तुल्यत्वादित्याशङ्कायामाहुः—मथुरास्था इत्यादि । नाधुनापीति सम्यगासक्ता इति । तत्र गमकम्-निःप्रपञ्चेत्यादि । अतो हेतोः तामपूर्णा-सक्तिं विचार्य प्रपञ्चधर्माणां पुत्रादीनां सङ्ग्रहः । स्वामिन् भत्यायन भगवता हि निश्चयेन कार्यते इति शेषः । हि यतो हेतोः स्वभावतो दुष्टा जीवा दोषसत्त्वमेव

का. १७३ निबन्धकठिनांशविवेचनम् ।

का. १७३ अग्रे चतुश्चत्वारिंशाध्यायार्थोक्तौ जीवाः स्वभावतो दुष्टा इत्यादि स्फुट इत्यन्तम्। जीवा स्वार्थपरायणा, स्वार्थे सिद्धे सर्वपरित्यागेन तज्जनितदु खमप्यनुभूय स्वार्थसाधक नोपकुर्वन्ति, नापि स्मरन्तीति जीवगतो दोष कृष्णसङ्गताभिर्गोपिकाभि कृष्ण आरोप्यते, यथा वा ज्वराभिभूतरसनेन्द्रियेण सितायां कटुकत्वारोप । तादृशदोषाभावाय पूर्वं प्रपञ्चविस्मृति सयोगलीलया कारिता, निरन्तर भक्ताधीनतया स्थितो न स्वार्थमात्रपरायण इति भक्तैर्ज्ञात, स्वरूपलीलारसनिमग्नानामन्यविस्मरणात् महारसत्वमपि भगवतो ज्ञात, पर भगवतो रसात्मकस्य द्विदलरूपत्वेन यदा भगवान् द्वितीय दलमनुभावयति तदा तस्य तीव्रत्वेन सोढुमशक्यत्वात् ज्ञापितेपि दोषाभावे दोष पुन प्रत्यवतिष्ठते, स्मरणेन च दु ख जायत इति स्मरणमेव न कर्तव्यमिति भक्तानां भाति, तत् सर्वमुपदेशेन निवार्यते, वस्तुतस्तु भगवानात्मा सर्वाश्रय भक्तवश्य सत्यवाक्, अतस्त्यक्त्वा नेव गच्छतीति बोधेन पूर्वदोषनिवृत्ति, सयोग-लीलाया प्रकटरूपस्तु देहेन्द्रियादिगामी, विरहे निरन्तर स्मृतस्तु मनोघर्षणेन मनोवृत्त्यात्मगामी भवतीति दूरस्थित्वभिप्रायज्ञापनेनापि पूर्वदोषनिवृत्ति, एतदेवोक्त जीवा स्वभावत इत्यादिभि षड्भि श्लोकै । इति।

सर्वमेव स्वसम्बन्धात्तथा कृष्णेऽपि सङ्गताः।
प्रपञ्चविस्मृतिः पूर्वं दोषाभावाय कारिता ॥१७४॥
कृष्णविस्मरणं तत्र न युक्तमिति बोधनम्।
प्रबोधे दोषहानिः स्यादात्मत्वे सुतरामपि॥१७५॥
तदुद्धवेन गुरुणा बोधयामास केशवः।
य एव स्यादुपायोऽत्र स कर्त्तव्यो न चेतरः ॥१७६॥
अतो बोधनमत्रोक्तं न तु साक्षात्स्वयं गतः।
आगतः सर्वदैवाऽऽस्ते तदा चाऽऽयाति सत्यवाक् ॥१७७॥
इदं च बोधनात्सिद्धे दोषोऽपि विनिवर्त्तते।
दोषश्चतुर्धा टीकायां विस्तरेण प्रपञ्चितः ॥१७८॥
तत्क्षान्तिश्चाऽपि बोधेन तेन नात्रोच्यते स्फुटः।
कुब्जा तु राजसी नारी तथाऽक्रूरश्च यादवः ॥१७९॥
उपलक्षणभावेन द्वावेतौ विनिरूपितौ।

मापयन्ति। तत्प्रसिद्धं महाभारते राजधर्मेषु वभ्रूग्रसेनादिकर्तृकम्। तथाऽधुनापि ज्ञातव्यम्। तथा च पूर्णासक्तेरजातत्वाश्चेदानीं तत्प्रपञ्चाभावयत्नः किन्तु व्रजस्थानामेवार्थे इत्यर्थः ॥१७१॥१७२॥ ननु व्रजस्थानां भगवदासक्तिमपञ्चविस्मृत्योः पूर्णतया जातत्वे कार्यस्य पूर्त्तेः पुनः प्रबोधनस्य किं प्रयोजनमत आहुः-प्रपञ्चेत्यादि-त्रयम्। अत्रेति विप्रयोगदशायाम्। दोषहानिरिति। सात्त्विकभावप्रतिबन्धक-दोषहानिः। आत्मत्व इति ज्ञात इति शेषः। तदिति तस्माद् आत्मत्वं वा। तथा च स्वाविस्मरणार्थं सात्त्विकाभावप्रतिबन्धनिवृत्त्यर्थं प्रबोधोपदेशनमित्यर्थः। ननु यथेदं बोधनेनाऽभूत्तथा स्वतोऽपि स्यादिति स्वयमेव कुतो नागादित्यत आहुः-य एवेत्यादि। नन्वनागमने एष्याम इति आयास्य इति वाक्यबाधप्रसङ्ग इत्यत आहुः-आगता इत्यादि। अयमित्यस्य पूर्वार्द्धेन सम्बन्धः। इत्थमितिपाठश्चेत्तदा उत्तरार्द्धे एव सम्बन्धः। ॥१७३॥१७४॥

एवं सार्द्धैर्दशभिस्तामसानां सान्त्वनं समर्थितम्, राजसाना-माहुः कुब्जेत्यादि। निरूपिताविति। एकस्मिन्नध्याये उक्तौ। सात्त्विकानामाहुः-

१ त्ति। २ सदा।

कुन्ती च पाण्डवाश्चैव सात्विकौ पूर्ववन्मतौ ॥१८०॥
धृतराष्ट्रकृते दुःखे तस्यापि स्यात्तु बोधनम् ।
स तु सात्विकवर्यो हि पुत्रस्नेहात्तथाऽकरोत् ॥१८१॥
अतः प्रबोध उचितस्तस्यापि स्यान्न संशयः ।
एवं चतुर्भिरध्यायैः सान्त्वनं विनिरूपितम् ॥१८२॥
प्रमाणेऽपि प्रमेयेपि भगवान् सप्तरूपधृक् ।
क्रमेणैवाऽत्र संयोज्यस्तेन नोक्तो विशेषतः ॥१८३॥
अलौकिकेन भावेन यावद्धि भगवत्कृतः ।
स पूर्वार्धो हरेः स्वस्य धर्मस्तादृश उच्यते ॥१८४॥
लोकधर्मं पुरस्कृत्य यच्चकार यदूद्वहः ।
अस्वभावादुत्तरार्द्धं कार्यं तत्तु प्रकीर्तितम् ॥१८५॥
प्रमेयं च तथा चार्द्धं राजसप्रक्रियार्द्धतः ।
एवं प्रमेयबलतः कृष्णासक्ताऽभवन्मुदा ॥१८६॥

( अथ राजससाधनम् )

ततो व्यसनसिद्ध्यर्थं साधनान्याह सप्तभिः ।

कुन्तीत्यादि । पूर्ववदिति । निरोद्धव्यत्वात्सान्त्वनीयौ ॥१७९॥१८०॥ननु तत्सान्त्वने कर्तव्ये धृतराष्ट्रज्ञानोपदेशः कुत उच्यत इत्यत आहुः-धृतेत्यादि । अयं चरणः पूर्वत्रापि सम्बध्यते । तस्य दुःखहेतुताया वारणीयत्वात्तस्याप्युपदेश इत्यर्थः । ननु योग्यताभावे कथं ॥ इत्यत आहुः-स त्वित्यादि । तथाऽकरोदिति । राजसभावे-नाकरोत् । अत इति राजसभावस्य निवर्तनीयत्वात् । न संशय इति प्रथम स्कन्धे तन्मुक्तेरप्युक्तत्वात्तथेत्यर्थः । प्रकरणार्थं निर्णीयोपसंहरन्ति एवमित्यादि । नन्वत्राध्यायार्थो विशेषतः कुतो नोक्त इत्यत आहुः-प्रमाणेऽपीत्यादि । अत्र पूर्वार्द्धमपि समाप्तं तत्र बीजमाहुः-अलौकिकेनेत्यादि । स्फुटमन्यत् ॥१८१॥१८६॥ एवं सार्द्धत्रिंशद्भिः प्रमेयप्रकरणं विचारितम् । दशमस्कन्धस्य पूर्वार्द्धं समाप्तम् ॥

अथोत्तरार्द्धम् । अथ राजससाधनप्रकरणम् ।

अतः परं षष्ठिभिः साधनप्रकरणं विचारयन्तः समारभ्यां समर्थ-यन्ति ततो व्यसनेत्यादि, तथा च व्यसनसाधनबोधकत्वादिदं साधनप्रकरणमित्यर्थः ।

लौकिके व्यसने प्राप्ते तस्मिंश्च विनिराकृते ॥१८७॥
व्यसनासक्तहृदयाः कृष्णव्यसनिनोऽभवन् ।
जरासन्धश्च यवनः पुनर्ब्राह्मणसंयुतः ॥१८८॥
शिवप्रसादपुष्टश्च जरासन्धो विशिष्यते ।
राजसस्तामसश्चैव सात्त्विकश्च प्रकीर्तितः ॥१८९॥
केवलः पौरुषापोह्यः स सप्तदशधोदितः ।
प्रजापतिप्रसूतत्वात्तावद्वारं समागतः ॥१९०॥
अष्टादशे द्वन्द्वभावमापन्नः सहजो महान् ।
ततो व्यसनकर्ता हि तदैश्वर्येण वै हरिः ॥१९१॥
विश्वकर्माणमाहूय मथुरासमभावतः ।
द्वारकां निर्ममे तत्र योगवीर्यं चकार ह ॥१९२॥
ततो व्यसननिर्मुक्ताः कृष्णव्यसनमागमन् ।
एवमेकेन भूतानां व्यसनं विनिवर्तितम् ॥१९३॥
आध्यात्मिकानां च तथा तदर्थं यवनो हतः ।

किं तत्साधनमित्याकाङ्क्षायामाहुः–लौकिक इत्यादि । व्यसने दुःखे । व्यसनासक्तहृदया दुःखासक्तहृदयाः । कृष्णव्यसनिनः कृष्णैकतानाः । तथा च दुःखनिवारकभगवदेकतानत्वं साधनमित्यर्थः । व्यसनप्रापकानाहुः-जरासन्ध इत्यादि । तथा च जरासन्धस्यावस्थाभेदेन द्वैविध्यात्त्रयस्ते इत्यर्थः ॥१८७॥१८९॥

नन्वेवं त्रैविध्यं न युक्तं, जरासुतस्याष्टादशवारं युद्धायागमनादित्यत आहुः-केवल इत्यादि । प्रजापतिप्रसूतत्वादिति । जरया कृते सन्धाने तस्यैव प्रयोजकत्वात्तथा । तथा च द्वन्द्वभावापत्तिकृतव्यसनस्य प्रकारान्तरापन्नत्वेन तन्निवारणस्यापि तथात्वात्युक्तमेव त्रैविध्यमित्यर्थः । शेषमतिरोहितार्थम् । निष्कृष्टं प्रथमाध्यायार्थमाहुः-एवमेकेनेत्यादि ॥१९०॥१९३॥

द्वितीयाध्यायं विचारयन्तः सर्वेषां द्वारकायां नयने मथुरायां कस्याप्यभावेन क्लेशस्याभावाद्यवनहननं किमर्थमित्याशङ्कां परिहरन्ति-आध्यात्मिकानामित्यादि । आध्यात्मिकानां च दुःखानां विद्यमानत्वात्तन्निवृत्त्यर्थं यवनोहतः । तेषां स्थान-

अद्याऽपि मथुरायां हि तिष्ठन्त्याध्यात्मिकाः सदा ॥१९४॥
दैविकाश्चापि तिष्ठन्ति त्रिभिस्तान् मोचयत्यसौ ।
रुक्मिणीव्यसनं तत्र नियामकमिति स्थितिः ॥१९५॥
त्रिभिस्तस्य निवृत्तिर्हि वाक् शरीरं मनस्तथा ।
मानसं वाचिकं वाऽपि कायिकं वा निराकृतम् ॥१९६॥
आध्यात्मिकेऽधिकं किञ्चिद्दैविकाभेदसिद्धये ।
व्यसनी मुचुकुन्दोऽपि निद्रया तन्निवारितम् ॥१९७॥
फलप्रकरणं नैतत्तेन स्तुत्याऽपि नोऽभवत् ।
साधनं परमुद्दिष्टं वीर्याध्यायो यतो मतः ॥१९८॥

माहुः अद्यापीत्यादि। त्रिभिरिति अध्यायत्रयोक्तचरित्रैः। तथा च श्रीरामस्यान्येषां च लोकानां तत्र विद्यमानताया धननयनादिलिङ्गेनावगमाचत्र क्लेशस्थितिः शक्यवचनेति तृतीयाध्याये मागधनिवृत्तिपर्यन्तं चरित्रमाधिदैविकदुःखनिवृत्त्यर्थमित्यर्थः । नन्वेवं सति तत्र श्रीरुक्मिण्यादिकथायाः किं प्रयोजनमत आहुः–रुक्मिणीत्यादि। तत्रेति आध्यात्मिकादिदुःखे। तथा चैवं सर्वराजभिर्विरोधे यादवकुमाराणां वा बलभगवतोर्वा विवाहः कथं कुत्र भावीति चिन्तारूप आध्यात्मिकदुःखाकारस्तन्मूलभूतदैवानुकूल्यचिन्तारूपो दैविकाकार इति प्रतिभाति तेनात्र तत्कथेत्यर्थः ॥१९४॥१९५॥ ननु श्रीरुक्मिणीव्यसननिवृत्तिस्त्रिभिः कुत उच्यत इत्यत आहुः–त्रिभिरित्यादि। तयेति दुःखहेतुभूतम्। अत्र वागन्येषां ज्ञेया। निवृत्तिविभागमाहुः मानसमित्यादि। आध्यात्मिके यादवानां दुःखे दूरीकर्तव्ये तस्य रुक्मिणीव्यसननियमितत्वाद्ब्राह्मणोक्तभगवद्वचनानुवादेन मानसं वाचिकं वा तद्दुःखं निराकृतम्। तदग्रिमाध्याये कायिकं यदात्र हरणात्कायिकं निराकृतमुच्यते तदाग्रिमे रुक्म्यादिजयाद्वाचिकं मानसं चेति ज्ञेयम्। एवं प्रसङ्गं समर्थयित्वा प्रस्तुतमाहुः आध्यात्मिक इत्यादि, अधिकं किञ्चित् मुचुकुन्दाय स्वरूपप्रदर्शनादिरूपं कार्यं प्रस्तुतव्यतिरिक्तम्। तस्य प्रयोजनमाहुः–दैविकेत्यादि। प्रदर्श्यमानस्य स्वरूपस्याधिदैविकाभेदज्ञापनार्थमित्यर्थः। ननु यादवव्यसननिराकरणे प्रस्तुते मुचुकुन्दस्य कः प्रसङ्ग इत्यत आहुः–व्यसनीत्यादिसार्द्धचतुष्टयम्। तदिति व्यसनम्। नोभवदिति मुक्तो नोऽभवत्। उद्दिष्टमिति उपदिष्टम् ॥१९६॥१९८॥ ननु मुचुकुन्दस्यानुद्धारे साधन-

बलेन मोचितः स्वास्थ्यं न प्राप्स्यति कथञ्चन ।
अतः साधनमुद्दिष्टं प्रवृत्त्यै मृगयाकथा ॥१९९॥
प्रारब्धकर्म तद्वृत्तं तेन वा तत्र नाशितम् ।
तत्तद्धर्मप्रधानत्वाल्लीलायास्तत्र तत्र हि ॥२००॥
तेन वीर्यगुणाद् बुद्धः सामर्थ्यं प्राप्य साधने ।
तेनाऽर्थान् मुक्तिरेवास्मै तदा भवति सर्वथा ॥२०१॥
यवनोऽपि प्रविष्टस्तं ततः सिद्धिमवाप्स्यति ।
यवनैर्दूषिते स्थाने न नित्या मथुरास्थिता ॥२०२॥
व्यसनं च ततस्तेषां वारितं यवनार्दनात् ।
जरासन्धजयार्थाय यवनानां धनं हृतम् ॥२०३॥
दुष्टद्रव्यात्तु तस्याऽपि बुद्धिनाशो भविष्यति ।

मात्रोपदेशात्कथं वीर्यचरित्रत्वं येनाध्यायस्य तदारब्धेत्यत आहुः बलेनेत्यादि । बलेनेति बलात्कारेण प्रमेयबलेन वा । तथा च तस्य सुखार्थमिदानीमनुद्धारो न त्वसामर्थ्यादतो नास्य वीर्याध्यायत्वहानिरित्यर्थः । ननु यद्येवं तदा 'क्षात्रधर्मस्थितो जन्तूनि'त्यादिकं कुत उक्तमित्याशङ्कायामाहुः–प्रवृत्त्या इत्यादि । ननु तदपि भगवता निवर्तितुं शक्यत एवेति नेदमुत्तरमित्यतः पक्षान्तरमाहुः–प्रारब्धेत्यादि । प्रारब्धस्य नाशाभावश्चतुर्थ-(मर्यादा)स्कन्धे उपपादित इति मर्यादानुरोधात्तथेत्यर्थः । नन्वेवमप्यत्र वीर्यलीलात्वे गमकं नोपलभ्यत इत्यत आहुः–तत्तदित्यादि । हिर्निश्चये । तेनेति भगवता । तेनेति हेतुना । तथा च प्रकरणाभावादत्र फलानुक्तिः । वस्तुतस्तु फलमपि तावन्महाकाल-सुप्तस्य क्षुत्तृड्क्रोधादिदोषसम्भवं निवार्य साधनकरणसामर्थ्यप्रापणेनाग्रे मुक्तिदानं सिद्धमिति तदेवात्र गमकमित्यर्थः । तेन कार्यान्तरस्यापि सिद्धिमाहुः यवन इत्यादि । तथा च मुचुकुन्दकथायां वीर्यनिरूपणार्थत्वमेव प्रसङ्ग इत्यर्थः । एवं द्वितीयाध्यायो विचारितः ।

तृतीयाध्यायं विचारयन्ति–यवनैरित्यादि । नित्येति । सन्निहित-भगवत्का । 'सर्वेषामेवज्ञानां भगवत्येव समागमा'दिति सुबोधिन्यां स्थितत्वात् । तत इति सन्निधानाभावात् । धनहरणादिप्रयोजनमाहुः–जरासन्धेत्यादिसार्द्धेन ।

१ सामर्थ्यमाप्यसाधने ।

प्रवर्षणगिरिस्थानां जीवानां च विनाशनात् ॥२०४॥
अग्नेः सम्प्रार्थनात्कृष्णः प्रवर्षणमथारुहत् ।
बलात्मा बलभद्रोऽयमतः सोऽपि निरूप्यते ॥२०५॥
अतो विवाहस्तस्याऽपि लोकरीतिश्च सम्मता ।
बलभार्या निराधस्था नेति भक्तौ निरूपिता ॥२०६॥
अतस्तस्याः कथामन्यामतिदेशान्न चोक्तवान् ।
विवाहो द्विविधो लोके धर्मार्थो भोगसाधकः ॥२०७॥
आद्यो धर्म्यस्तु कर्त्तव्यः पश्चाद्भोगार्थसाधकः ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥२०८॥
विधिश्च वैदिकश्चैव सह सर्वैः स्वबान्धवैः ।
रुक्मिण्यां प्रथमायां तु विवाहत्रयमुक्तवान् ॥२०९॥
गान्धर्वो ब्राह्मणद्वारा स्तोत्रं भावावबुद्धये ।
प्रसह्य कन्याहरणं द्वितीये स्पष्टमेव हि ॥२१०॥
तत्सिद्ध्यर्थं तथा चक्रे कालः तत्सेवको यतः ।
उत्तरोत्तरभावस्य वृद्ध्यर्थं रुक्मिणीवचः ॥२११॥

प्रवर्षणारोहो बलसहभावश्चेत्यपि प्रासङ्गिकमेवेत्याहुः अग्नेरित्यादि ॥१९९॥२०५॥

बलविवाहस्तु श्रुतमाय इत्याहुः सार्द्धेन-अत इत्यादि । अत्राध्याये पञ्चसः कार्यमिति ज्ञापयन्ति विवाह इत्यादित्रिभिः । स्तोत्रं भावबुद्धय इति । श्रीरुक्मिणीकृतं श्रुत्वा 'गुणानि'त्यादिनोक्तं स्तोत्रं स्वभावस्य भगवति बोधनार्थेत्यर्थः । तृतीयार्थं उक्तः ।

चतुर्थाध्यायार्थमाहुः प्रसह्येत्यादि । तत्सिद्ध्यर्थं हरणसिद्ध्यर्थम् । तथा चक्रे विवाहकालः । 'अहो धिगस्मद्यश' इत्युक्तं तद्धिक्कारं चक्रे यतः समीचीनो मुख्यः सेवकः । तथा च भगवदिच्छामवगत्य तेषां धिक्कार्यत्वबुद्धिजनकमहङ्कारमुत्पादितवानित्यर्थः । ननु 'नमस्ये त्वाम्बिकेऽभीक्ष्ण'मित्यादि प्रार्थनस्य किं प्रयोजनमत आहुः उत्तरोत्तरेत्यादि ॥२०६॥२११॥ एवं सर्वसम्मतमित्यन्तेन चतुर्थाध्यायो विचारितः । अत्र श्रियो नयनात् श्रीकार्यं स्फुटमेव ।

विवाहकालात्पूर्वेद्युर्हरणं सर्वसम्मतम्।
समुद्रस्तु पिता तस्याः कालकूटोऽग्रजः स्मृतः ॥२१२॥
स दैत्यानां हिताकाङ्क्षी हराविष्टो बलोऽहनत्।
जिघांसन्तं जिघांसीयात्तथाऽपि न हरिः स्वयम् ॥२१३॥
जघान रुक्मिणं मूढं दैत्यानां बुद्धिनाशकम्।
वधानुकल्पः स्वद्रोहे भक्तद्रोहे वधः स्मृतः ॥२१४॥
वधानुकल्परूपं हि मुण्डनं तच्चकार ह।
सर्वात्मा भगवान् कृष्णो यो यच्छ्रद्धः स एव सः॥२१५॥
यो यथा यं प्रपद्येत सोऽपि तन्मन्यते तथा।
रुक्मिण्यर्थं समागत्य तथा रुक्मी चकार ह ॥२१६॥
अतः कृष्णं प्रार्थयित्वा रुक्मिणी तं व्योमचयत्।
भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्तते ॥२१७॥
नटवत्कपटाद्वाऽपि ततः प्राह बलस्तथा।
द्वारकायां तु नेतव्यः सुखं[1] बध्वाऽल्पबन्धनैः ॥२१८॥

पञ्चमं विचारयन्तो बन्धूनां भीष्मकप्रभृतीनां भगवते दित्सायां केवलस्य रुक्मिणः कथं विरुद्धो यत्न इति शङ्कायामाहुः समुद्र इत्यादि। तर्हि भगवता कुतो न हतस्तत्राहुः हराविष्ट इत्यादिसार्द्धद्वयम्। तर्हि श्रीरुक्मिण्या कुतस्तस्य मोचनमित्याकाङ्क्षायामाहुः–सर्वात्मेत्यादि। तथा च श्रीरुक्मिण्या भगवति श्रद्धावत्त्वेन भगवद्रूपत्वात्तन्मोचनार्थं रुक्मिणः प्रवृत्तत्वेन श्रीरुक्मिण्या भगवद्रूपया तन्मोचनमित्यर्थः। ननु तथापि बलदेवेन भगवान् किमित्युपालब्ध इत्याशङ्कायामाहुः–भगवदित्यादि। अन्यधर्मो रजस्तमोधर्मो गुणक्षोभवशात् प्रवर्तते, भगवति तु मायया नटवद्विद्यया कपटाद्वा तदुभयमपि नोचितम्। शुद्धसत्त्वेऽवतीर्णत्वाद् गुणातीतत्वाद्वा। ततो हेतो बलभद्र उपालम्भं प्राह यथा मृत्स्नाभक्षणे। तथा च भगवदाशयाबोधात्तथा वचनमित्यर्थः। ननु भगवतः करुणत्वात्प्रार्थनेन यथा वधान्निवृत्तिस्तथा बन्धनादेरपि प्रार्थनया स्यादिति तदभावोऽपि कुतो न प्रार्थित इतिशङ्कायां बन्धनं श्रीरुक्मिण्या अभिमतम्। ननु तत्प्रकारकमिति बोधयितुं तदाशयमाहुः द्वारकायामित्यादि ॥२१२॥२१९॥ ननु

[1] सुलभ्।

ततो मया प्रबोध्यश्च नाऽन्यथेत्यन्तरं श्रियः ।
तदभावाद्वैमनस्यं तद्रामेण निवारितम् ॥२१९॥
तथा चेत्कुरुते कृष्णस्तदा लोको विरुध्यते ।
अस्मान् वञ्चयितुं रुक्मी कृष्णपक्षोऽप्युपाह्वयत् ॥२२०॥
यावज्जीवं तदा दुःखी दैत्यो दैत्यविसम्मतः ।
ज्ञानाध्याये तथा युक्तं दैत्यानां मुण्डनं मतम् ॥२२१॥
अत एव पुनः स्थानं कुण्डिनं न विवेश ह ।
रुक्मिणीसहितः कृष्णः सर्वेषां सुखदोऽभवत् ॥२२२॥
एवं त्रिविधजीवानामुद्धर्त्ता व्यसनार्णवात् ।
ततः कृष्णव्यसनिनो जाताः साधनमीरितम् ॥२२३॥
कामेन व्यसनं लोके स स्वयं व्यसनं गतः ।
देहनाशात्सर्वनाशाद्भार्याहरणतोऽपि हि ॥२२४॥
व्यसनं तद्देवदेहाज्जातं चेन्नैव नश्यति ।
यदा मुक्तिप्रदानार्थं वासुदेवः समुद्गतः ॥२२५॥
तदा माया च कामश्च तस्माद्बन्धार्थमुद्गतौ ।
मायया मोहितो जीवः कामैर्नानाविधोऽभवत् ॥२२६॥
कामोत्पत्तिर्यदा कृष्णात्तदा तद्व्यसनं हृतम् ।
स्वस्थः स्मृत्या विरक्तश्च सर्वानेव प्रबाधते ॥२२७॥

भगवतः सर्वज्ञत्वेन तदाशयस्यापि ज्ञानात्तथैव कुतो न भगवता कृतमिति शङ्कायां भगवदाशयमाहुः–तथा चेदित्यादिसार्द्धेन। मुण्डनस्यान्यदप्याशयमाहुः ज्ञानाध्याय इत्यादि। अत एवेति दैत्यत्वादेव। अध्यायत्रयार्थमुपसंहरन्ति रुक्मिणीत्यादिसार्द्धेन ॥२२०॥२२३॥ एवं पञ्चमाध्यायो विचारितः।

षष्ठं विचारयन्ति – कामेनेत्यादिसार्द्धैश्चतुर्भिः। सर्वनाशादिति धन्वादिपरिकरनाशात्। नैव नश्यतीति शम्बरस्य शिवप्रसादवत्तया बलिष्ठत्वान्नैव नश्यति। तस्मादिति ल्यब्लोपे पञ्चमी, तन्निवृत्त्युपायमनुसन्धाय। उद्गताविति अलौ-

कृष्णसम्बन्धिदेहेन रुद्धो वा न तथाविधः।
एवं षड्भिः समस्तानां व्यसनाभाव ईरितः ॥२२८॥
दुष्टव्यसनभावत्वात्ते कृष्णेऽपि तथा जगुः।
तेषां वा व्यसनं कृष्ण आधिदैविकमात्मनि ॥२२९॥
पश्चात्तं नाशयामास धर्म्यध्यायेन सिद्धता।
फलसाधनयोरैक्यं वक्तुमेका कथोच्यते ॥२३०॥
मणिश्च व्यसनं हन्ति लोके ख्यातस्ततोऽपि चेत्।
व्यसनानि विनश्येरंस्तदा नैकान्तिको हरिः ॥२३१॥
इति तस्य निराकृत्यै ततो व्यसनमुच्यते।
तच्चाऽपि चेत्कृष्णवाक्यात्साध्यते सर्वभावनः ॥२३२॥

किम्प्रकारेण कार्यं कुर्वाणावभूताम्। व्यसनस्मृत्या विरागे कमपि न बाधेतेत्यरुच्या पक्षान्तरमाहुः कृष्णेत्यादि। तथा च भगवद्विचारितानेव न बाधत इत्यर्थः। अत्र विचारितभिन्नानां बाधनं वैराग्यकार्यं बोध्यम्। एवं षष्ठो विचारितः।

षड्विधलीलया भौतिकाध्यात्मिकनिवृत्तिरुक्तेत्याहुः एवमित्यादि ॥२२४॥ ॥२२८॥ ननु समस्तव्यसननिवृत्तौ किं व्यसनं शिष्टं यदर्थं यत्न इत्याकाङ्क्षायां मायाकृतस्य तस्यावशिष्टत्वं बोधयन्तस्तन्निवृत्त्युपायो धर्मिणा क्रियत इति सप्तमाध्यायार्थबोधनाय तद्विचारयन्ति–दुष्टेत्यादि। तथा जगुरिति मणिहर्तृत्वं जगुः। तथा चेदं मायामोहकृतमाधिदैविकमित्यर्थः। नन्वेवं निरुद्धानां कथमीदृशो भावः सम्भवतीत्यरुच्या पक्षान्तरमाहुः–तेषां वेत्यादि। तथा च लोकाः कथामश्रुत्वा मणिहरणस्य भगवत्प्रयुक्तत्वं वदन्तीत्येतद्वा आधिदैविकं व्यसनमित्यर्थः। सिद्धतेति भगवद्व्यसनशालित्वमित्यर्थः। नन्वत्र प्रकरणे श्रीरुक्मिणीविवाहो व्यसनात्मकसाधनोपोद्घाततयोक्तः। तेन दुःखनिवृत्तौ सत्यां साधनं सम्पूर्णं सिद्धमेवेति तत्प्रकरणे सत्राजित्कन्यादानादिप्रकथनस्य किं प्रयोजनमत आहुः–फलेत्यादि। फलं विवाहस्तदेव दुःखनिवृत्तौ साधनमिति बोधनप्रयोजनमित्यर्थः। प्रयोजनान्तरमाहुः–मणिश्चेत्यादि। कथोच्यत इत्यन्तम्। तच्चाऽपीति। मणेर्व्यसननाशकत्वमपि। भगवद्वचनाकारमाहुः–मणेर्यावदित्यादि। कथेति मणिकथा। ननु तथापि भगवतो मणियाचनस्य को वाऽऽशय इत्याकाङ्क्षायामाहुः–स्वर्येत्यादि। तत इति अन्यभक्तत्वाद्धेतोः। एतस्य

तदा व्यसननाशाय कल्पते नाऽन्यथा तु तत् ।
इति निश्चित्य भगवान् सत्राजितमुवाच ह ॥२३३॥
मणेर्यो वर्द्धनं प्राप्यं तद्राजा दास्यतीति हि ।
अविश्वासं कृष्णवाक्ये कृत्वा तं नैव दत्तवान् ॥२३४॥
ततः सर्वक्षयो जात इति वक्तुं कथोच्यते ।
सूर्यभक्तस्तु सत्राजित्ततो लक्ष्मीं सरस्वतीम् ॥२३५॥
मणिरूपां कन्यकां च द्वयं भोग्यं हरेः परम् ।
तयोरन्यत्र सत्राजिद्विनियोगं हि वाञ्छति ॥२३६॥
अक्लिष्टकर्मा भगवान् कन्यार्थं तत्तथाऽकरोत् ।
यादवोऽप्यन्यभक्तत्वान्न निरुद्धः प्रसेनकः ॥२३७॥
मणेरतिक्रमाच्चैव मायाभृत्येन मारितः ।
सोऽपि वक्रेण संस्पर्शाद्रामभक्तेन मारितः ॥२३८॥
भक्तबालकसौख्याय मणिश्रीस्तत्र तिष्ठति ।
ततः सा कन्यका प्राप्ता केवलोऽभून्मणिस्तदा ॥२३९॥
तदुच्छिष्टं न शुद्धं हि कृपया तदुपानयत् ।
कन्यार्थमेव गमनं कालीयह्रदवत्पुनः ॥२४०॥
राजसानां परीक्षार्थं बहुकालं न चाऽऽगतः ।

पदस्य तयोरित्यनेनान्वयः ॥२२९॥२३६॥ तर्हि प्रसेनस्य कथमेवं मरणमित्यत आहुः–यादवोऽपीत्यादि। अतिक्रमादिति। पूज्यस्य तस्याभरणत्वेन विनियोगात्। मायाभृत्येनेति। देवीवाहनेन सिंहेन। तर्हि सिंहः कुतो मारित इत्याकाङ्क्षायां तत्राप्यतिक्रममेव हेतुमाहुः–सोऽपीत्यादि। केसरिणो हि चर्मनखाश्च पवित्रा न तु वक्त्रं तत्स्पर्शेन मणेरुच्छिष्टीभावादतिक्रम इति तथेत्यर्थः ॥२३७॥२३८॥ ननु भवत्वेवं तथापि दुर्यशःप्रमार्जनस्य जातत्वाद्भगवतो विलम्बनेशस्य किं प्रयोजनमत आहुः–भक्तेत्यादि गमनमित्यन्तम्। उत्तानमर्थिमम्। तत इति भगवद्गमनोत्तरम्। केवल इति निःश्रीकः ॥२४१॥ सत्त्वमिति साधुत्वम्। नन्वन्यपाचितां

जाम्बवद्बोधसिद्ध्यर्थमात्मतत्त्वं विहाय हि ॥२४१॥
सप्तविंशतितत्त्वानि मुष्टिभिर्निहतानि वै ।
ततः स्वरूपनिष्ठस्तु भगवज्ज्ञानमेयिवान् ॥२४२॥
लक्ष्मीं च कन्यकां बुध्वा लीलार्थे चाऽऽगतिं तथा ।
सत्त्वं सम्पाद्य पूर्वं हि मणिं कन्यां ददौ ततः ॥२४३॥
उच्छिष्टत्वान्मणिं कृष्णः सत्राजिद्दत्तमप्युत ।
न गृह्णादात्मजां वार्णीं युक्तां स्वां जगृहे मुदा ॥२४४॥
सर्वात्मनान्यहृदयं न गृह्णाति हरिः स्वयम् ।
सर्वात्मना प्रपन्नं च नाशयैव कलिं यथा ॥२४५॥
उच्छिष्टं भक्तभोग्यं हि फलं भक्ताय दास्यति ।
एवं सप्तभिरध्यायैर्व्यसनं सुनिरूपितम् ॥२४६॥

(अथ राजसफलप्रकरणम्)

अतः फलं सप्तभिर्वै राजसानां निरूप्यते ।
अक्रूरो यादवानां हि मुख्यस्तस्य फलं पुरा ॥२४७॥
ततः पञ्च विवाहाश्च विद्यापर्वस्वरूपकाः ।
नायिकाः फलरूपा हि कृष्णसम्बन्धतो मताः ॥२४८॥

कन्यां कुतो भगवान् गृहीतवानित्याशङ्कायामाहुः-सर्वात्मनेत्यादि । तथा च यद्यपि मूले नोक्तं तथापि मुदाग्रहणरूपात्कार्यात्तथात्वमनुमीयत इत्यर्थः। तर्हि मणिं कुतो न गृहीतवानित्यत आहुः-उच्छिष्टमित्यादि । अत्र चाध्याये धर्मिलीला स्फुटैव ॥२४२॥२४६॥ एवं सप्तमाध्यायो विचारितः । एवं षड्भिः साधनप्रकरणं विचार्योपसंहरन्ति-एवं सप्तभिरित्यादि ।

अथ राजसफल-प्रकरणम् ॥

अतः परमष्टपञ्चाशोऽद्धः फलप्रकरणं विचारयन्ति-अत इत्यादि। अत इति अतः परम्। एतेन फलनिरूपकत्वात् फलप्रकरणमित्यादिसमाख्याबीजमुक्तम्। तत्र किं फलमित्याकाङ्क्षायामत्र पूर्वप्रकरणवन्नैकविधं फलं किन्तु नानाविध-मिति बोधयितुं तत्तदध्यायोक्तं प्रकारमाहुः-अक्रूर इत्यादि । पुरेति प्रथमाध्याये। तत इति। द्वितीयाध्याये ॥२४७॥२४८॥ ननु भगवत्सम्बन्धस्य फलत्वं पूर्वप्रकरणे सिद्धमिति तस्य तथात्वं युक्तम्, कथमेतासां तथात्वमित्यत आहुः-

१ भक्तभोग्यं भक्तयोग्यम् ।

तासां फलं हरिः कृष्णतत्सम्बन्धात्तथेतरे ।
कृष्णं फलमुपासाद्य दुःखग्रामाद्विनिर्गताः ॥२४९॥
ततोऽग्रे षोडशकलवृत्तिरूपाः सहस्रशः ।
सम्बन्धेन हरिं प्राप्तास्तत्सम्बन्धात्तथेतरे ॥२५०॥
फलं चतुर्विधं तत्र कृष्णप्राप्तिः पुरा फलम् ।
स्वप्राप्तिः कृष्णदेवस्य द्वितीयं फलमुच्यते ॥२५१॥
अन्योन्याध्यासवच्चैतत्फलद्वयमुदाहृतम् ।
ततो भगवदंशस्य पुत्रभावेन कार्यवत् ॥२५२॥
लोकवेदप्रकारेण पुत्रपौत्रादिकं फलम् ।
तेषां च सर्वभावेन देवगुह्यादिना तथा ॥२५३॥
कार्यसाधनमत्यर्थं चतुर्थं फलमुच्यते ।
यथा लोके सर्वभावो लौकिकेषु प्रजायते ॥२५४॥
तथा कृष्णे सर्वभावस्तेषां जात इतीर्यते ।

तासामित्यादि । कृष्णतत्सम्बन्धात्, कृष्णेनसह तासांसम्बन्धः कृष्णतत्सम्बन्धस्तस्मात् । तथेति सम्बन्धिरूपेण । एवमधिकारिभेदेन फलभेदो द्वितीयाध्याय उक्तः ।

तृतीयाध्याय आहुः–ततोऽग्र इत्यादि । षोडशकलवृत्तिरूपा इति षोडशकलं मनश्छान्दोग्ये सिद्धम्, तद्वृत्तिः नानाप्रकारकः सङ्कल्पविकल्पस्तद्रूपाः । तत्रेति । तेषु चतुःप्रकारेषु फलेषु पूर्वं फलं तं प्रविष्टं 'स्त्रियो वीक्ष्ये'ति श्लोकद्वयेनोक्तम् । द्वितीयं 'अथो मुहूर्त एकस्मि'न्नितिश्लोकेनोक्तम् । एतदेव यथाधिकारमक्रूरे प्रथमं तथैव महिषीषु द्वयं बोध्यम् ॥२४९॥२५१॥ द्वितीये विशेषमाहुः–अन्योन्येत्यादि । उदाहृतमिति तत्तद्ध्याये उक्तम् । अत्र च 'इति सर्वाः पृथक् कृष्णे भावेन हृदयं दधु'रिति । 'गृहेषु तासामनपायी'त्यनेन चोक्तम् ।

चतुर्थाध्याय फलशेष इति पञ्चमस्थं तदाहुः–ततो भगवदित्यादि । पूर्वोक्तादाध्यरूपात्फलद्वयादस्य वैलक्षण्यमाहुः–कार्यवदिति ॥२५२॥

षष्ठसप्तमाध्यायद्वयोक्तं फलमाहुः–तेषां चेत्यादि । नन्वस्य लौकिकत्वेन भगवत्सम्बन्धाभावात्कथं फलत्वमित्याकाङ्क्षायामाहुः–यथा लोक इत्यादि ।

कृष्णोऽपि चेत्तथा कर्त्ता तदा स्वप्नो मनोरथः ॥२५५॥
प्रपञ्चाद्वैतवत्तत्र कृष्णाद्वैतं फलं मतम् ।
अर्थधर्मौ धर्मकामौ काममोक्षौ निरूपितौ ॥२५६॥
केवलाश्चान्यसंयुक्ताः पुरुषार्थाः फलं मतम् ।
अक्रूरस्य फलं सिद्धमर्थो धर्मेण संयुतः ॥२५७॥
तदर्थं तादृशीं लीलां लोकाद्भिन्नां करोति हि ।
स्वतस्तेषां कृतिश्चेत्स्यात्कृष्णस्तोषं कथं व्रजेत् ॥२५८॥
दुर्योधनादिहन्तारो यथा वै पाण्डवाः प्रियाः ।

नन्वेवं सति फलत्वं दुर्घटं सर्वभावस्य साधनकोटिनिविष्टत्वादित्यत आहुः–कृष्ण इत्यादि । यथा लौकिकाः सर्वभावविषयाः सन्तः स्वप्नादिप्रयोजका भवन्ति, तथा कृष्णो भगवानपि सर्वभावविषयः सन् तथा कर्त्ता स्वप्नादिकं प्रयोजयिता, तदा तेषां भगवद्विषयकः स्वप्नो मनोरथश्च, 'पिता ममैवं कर्त्ता' 'श्वशुरो ममैवं दाता लालयिते'त्यादिरूपो भवेत् । ततश्च लौकिकसर्वभाववतां यथा प्रपञ्चाद्वैतं तथा तेषां कृष्णाद्वैतं भवतीति हि सर्वभावस्य स्वरूपम् । एतदेव साधनाध्यायतृतीयपादे 'स एवाऽधस्ता'दित्यादिछान्दोग्यश्रुतिमुपन्यस्य विचारितम् । यद्यपि मुख्यफलाधिकारिणां साधनरूपं तथापि सायुज्याधिकारिणां तत्फलं मतं फलत्वेन सम्मतम् । तथा च साधनकोटिनिविष्टत्वेऽपि अधिकारिभेदात् फलं नान्तरीयकत्वाच्च फलत्वमप्यविरुद्धमित्यर्थः । प्रकारान्तरेण फलचातुर्विध्यमाहुः--अर्थेत्यादि । द्वितीयं चातुर्विध्यविभागप्रकारमुदाहृत्य विशदीकुर्वन्ति–अक्रूरस्येत्यादि । तादृशीं दुर्यशोलेपनरूपाम् । लोकाद्भिन्नाम् लोकविलक्षणाम् । ननु बीभत्सानुभवः प्रकारान्तरेणापि भवेदिति किमर्थमेवं करणमित्याकाङ्क्षायामाहुः स्वत इत्यादि । कृतिः सत्राजिद्वधकृतिः ॥२५३॥२५८॥ ननु तद्वधेन किं भगवत इत्यत आहुः–दुर्योधनादीत्यादि । अयमर्थः । भगवान् हि मुक्त्यर्थमवतीर्णोऽन्यसम्बन्धस्य राहित्येन स्वमात्रैकतानत्वे तां ददात्यन्यसम्बन्धं च न सहते, वध्यानां च हननेन तां ददाति । प्रकृते च दुर्योधनादय इव सत्राजिदादयोऽप्यन्यसम्बद्धा इति तद्धन्तारोऽपि अन्ते त्वधर्मेति न्यायेन वध्यमुक्तिप्रयोजकतया भगवदभिमतकरणात् प्रिया इति तदर्थं तयेत्यर्थः ॥२५९॥ ननु तर्हि पाण्डववत् सोऽपि कुतो न रक्षित इति

१ पालयिता ।

सत्राजिद्घातकास्तद्वच्छतधन्वादयो मताः ॥२५९

युद्धेन मारणं मुख्यं वने वा गुप्तभावतः ।
न तु सुप्तस्य सर्वासां समक्षं मारणं मतम् ॥२६०॥

शतधन्वा ततो वध्यो मुक्त्यर्थं मारितः स्वतः ।
गुप्तलीला फले वाच्या तेनाज्ञानप्रकाशनम् ॥२६१॥

विद्यया बोधनं चापि विलम्बश्च पलायने ।
अक्रूरवत्सोऽपि तिष्ठेल्लीनो वा तत्र वै भवेत् ॥२६२॥

तदा वध्यो न चैव स्यात्परं पापेन दूषितः ।
युद्धार्थं कृष्णदेवेन मित्रयोः प्रार्थनां तथा ॥२६३॥

कृत्वा ज्ञात्वाऽपि माहात्म्यं शरणं न स आगतः ।
अलौकिकं फलं ह्येतन्मर्यादायां न युज्यते ॥२६४॥

अतो हि बलदेवस्य नाऽत्र सम्मतिरुत्तमा ।
अत्रैव बलदेवस्थं भिन्नमासीन्निवेशितम् ॥२६५॥

भगवद्धर्मजातं हि ततः स मिथिलां गतः ।
अरुचिश्च हरावासीदन्यधर्मप्रवेशतः ॥२६६॥

अतः परं तु रामेण नैकमत्यं क्वचित्क्वचित् ।
लोकेऽपि फलमेतादृक् सेवकानां न रोचते ॥२६७॥

अतस्तल्लोपनार्थाय मारयित्वाऽन्यथैव हि ।
मण्यर्थं मारणं वक्तुं वृथा मारणमाह हि ॥२६८॥

चेत्तत्राहुः—युद्धेनेत्यादि । नन्वेवं सति भगवतः सर्वं विदितमेवेति विलापादिकं कुत इत्याकाङ्क्षायामाहुः-गुप्तेत्यादि । बोधनम् अक्रूरादिकर्तृकम्, विलम्बः शतधन्वकर्तृकः । तर्हि तदैव कुतो न मारित इत्यत आहुः—अक्रूरेत्यादि । ननु तर्हि मुक्तेरेवं देयत्वात् श्रीरामस्य कुतो वैमनस्यमित्यत आहुः अलौकिकमित्यादि ॥२६०॥२६४॥ नन्वेवं सत्यपि बलदेवो भगवन्तं विहाय किमिति मिथिलायां गत इत्यपेक्षायामाहुः—अत्रैवेत्यादि, निवेशितमिति । द्वादशाध्याये निवेशितम् । भगवद्वाक्यतात्पर्यमाहुः—लोकेपीत्यादिसार्द्धेन । एतेनेयमैश्वर्यलीलेति बोधितम् ॥२६५॥॥२६८॥ एवं

सोऽपि ज्ञात्वा व्यवसितं क्षोभशान्त्यै ततो गतः।
काश्यादितीर्थे धर्मस्य सिद्धिरर्थेन साधिता ॥२६९॥
पुनः स्वस्थानमायातौ मणिं चाऽवापतुः प्रभोः।
एवं यादववर्येषु फलमेतेन बोधितम् ॥२७०॥
तथैव पाण्डवानां च फलं दातुं विनिर्गतः।
सान्त्वने तेऽपि निर्दिष्टास्ततो गर्वत्रयं ददौ ॥२७१॥
आमुष्मिकं फलं सूर्यात्स हि वेदात्मको यतः।
तत्सम्मतिं ज्ञापयितुं कालिन्दीप्राप्तिरुच्यते ॥२७२॥
तदर्थगमनं ज्ञाननिवृत्त्यै प्राप्य तां पुनः।
इन्द्रप्रस्थे स्थितः कालं तत्कार्याणां हि साधकः ॥२७३॥
आत्मबोधस्वरूपेयं तेन व्यावर्तितोऽर्जुनः।
मित्रविन्दा तपोरूपा तेनानीता बलान्निजात् ॥२७४॥
अन्तस्तापबहिस्तापौ भ्रातराविव बोधितौ।
स्वभागत्वाद्धृता तस्या बन्धूनां चाऽखिलार्थदः ॥२७५॥

प्रासङ्गिकं शेषं निरूप्य शेषिणं निरूपयन्ति–सोऽपीत्यादिद्वाभ्याम्। सोऽपीति अक्रूरोऽपि। आयाताविति अक्रूरकृतवर्माणौ आयातौ। तेनाक्रूरस्यार्थधर्मयोः प्रासिरुक्ता। एवं सार्द्धत्रयोदशभिः प्रथमाध्यायो विचारितः॥

द्वितीयाध्यायं विचारयन्ति तथैवेत्यादिभिः। ननु यादवानां फले वक्तव्ये पाण्डवानां कः प्रसङ्ग इत्यत आहुः–सान्त्वन इत्यादि। गर्वत्रयमिति। गर्वजनकं त्रयं विश्वकर्मकारितं नगरम्, अग्निदत्तं गाण्डीवादिकम्, मयकृता सभा चेति। एतेषां यथायथं धर्मार्थकामसाधकत्वात्फलप्रकरणत्वाच्च वर्गत्रयमिति पाठः प्रतिभाति॥ ॥२७०॥२७१॥ प्रस्तुतं फलं वक्तुं तेषां स्वरूपादिकमाहुः–आमुष्मिकमित्यादि, ज्ञापयितुमिति यादवानामामुष्मिके फले वैदिकीं सम्मतिं ज्ञापयितुम्। प्राप्येति भिन्नं पदम्। कालमिति अत्यन्तसंयोगे द्वितीया। यावता कालेन पाण्डवकार्यसिद्धिस्तावत्कालमित्यर्थः। एतेन तेषां फलस्य प्रासङ्गिकत्वं स्फुटीकृतम्। अन्यथा तत्रैव कालिन्दीमुद्वहेत्। द्विर्हेतौ। द्वितीयस्वरूपमाहुः–मित्रविन्देत्यादि ॥२७३॥२७४॥ तपोरूपत्वे गमकमाहुः अन्तरित्यादि। स्वभागत्वादिति। 'भागस्ते पैतृष्वसेयी'ति श्रुत्युक्तभागत्वात्। तस्या इत्यादि।

योगात्मिकां नाग्नजितीं सूर्यवंशसमुद्भवाम् ।
व्यसनान्यग्रतो जित्वा तां जग्राहाऽखिलर्द्धये ॥२७६॥
सिद्धिरूपं पारिबर्हमतस्तत्र निरूपितम् ।
व्यसनाविष्टचित्तानां तत्रेच्छा न तु लभ्यते ॥२७७॥
इति दर्शयितुं पश्चाद्युद्धमाह नरेण हि ।
नित्यानित्यविवेकाख्या भद्रा स्वयमुपागता ॥२७८॥
भक्तिरूपा लक्ष्मणाऽपि बलाद् बुद्ध्या च सङ्गता ।
तस्या विस्तारकथनं सात्त्विकानां फले जगौ ॥२७९॥
सर्वार्थसाधनैर्युक्तः स्वतोऽपि फलदायकः ।
फलप्रकरणे प्रोक्तः कृष्णः सर्वहितप्रदः ॥२८०॥
विषयाणामिन्द्रियाणामनन्तत्वं यदा भवेत् ।
ज्ञानसाध्ये कर्मसाध्ये फले स्यान्निर्वृतिः पुरा ॥२८१॥
इति ज्ञापयितुं कृष्णः सहस्राणि च षोडश ।

भ्रात्रोरेव निषेधकत्वेनान्येषामनुकूलत्वात्तथेत्यर्थः । इदमपि तयोरूपसगमकम् । तृतीय-स्वरूपमाहुः–योगेत्यादि । गमकमाहुः–सूर्येत्यादि । नवमे स्कन्धे तद्वंश्यानां योगित्वस्य दर्शितत्वात्तद्वंशजत्वेन तथेत्यर्थः । गमकान्तराण्याहुः–व्यसनानीत्यादि । तज्जयस्य योगाङ्गत्वादित्यप्येकं गमकम् । अखिलर्द्धये इति । यादवानामिति शेषः ॥ ॥२७५॥२७६॥ अत्रापि गमकमाहुः–सिद्धीत्यादि । चतुर्थस्वरूपमाहुः–नित्या-नित्येत्यादि । नित्यानित्यविवेकस्याख्या प्रसिद्धिर्यतो वैराग्यात्तद्रूपा । तत्र गमकं स्वयमुपागतेति । ज्ञानयोगतपसां सिद्धौ वैराग्यस्य स्वत एव प्राप्तेस्तथेत्यर्थः ॥ ॥२७५॥२७८॥ पञ्चमस्वरूपमाहुः–भक्तीत्यादि । गमकमाहुः-ह्रीत्यादि । ह्रिहेंतो । बलं माहात्म्यज्ञापकम् । बुद्धिः स्नेहज्ञापिका । प्रमाणमाहुः–तस्या इत्यादि । तथा च विस्तारेण प्रकरणेन च तदुभयरूपतायाः फलभक्तिरूपतास्फुटीभावादित्यर्थः । अत्र महिषीणां काममोक्षयोर्धर्मकामयोर्वा सिद्धिं स्फुटीकुर्वन्ति–सर्वार्थेत्यादि । अत्र वीर्यलीला स्फुटैव ॥२७९॥२८०॥ एवं दशभिर्द्वितीयो विचारितः ॥

सार्द्धाष्टभिस्तृतीयं विचारयन्ति विषयाणामित्यादि । स्यादिति ।

१ गर्व । २ यथा ।

नराणां कं सुखं हत्वा देवांश्च परिभूय हि ॥२८२॥
महिषीवृत्तिरूपास्ताः कालदोषनिवृत्तये।
उद्वाहयामास मुदा लोकवेदौ समर्थयन् ॥२८३॥
अविद्याकार्यरूपो हि मुरो नरकरक्षकः।
तत्पुत्राः पीठसहिताः प्राकृताः खादिवन्मताः ॥२८४॥
नरको भगवत्पुत्रश्चतुर्मूर्तेस्तपस्स्थितः।
तपसोऽन्ते तपस्विभ्यः फलदातुस्तु याचनात् ॥२८५॥
भूम्यां जातो वरः प्राप्तो न वध्यः सकलैरपि।
नारायणास्त्रयुक्तश्चेत्परं पुत्राय तद्ददौ ॥२८६॥
तेन वध्यो हरेर्जातस्तथैव सुखमैहिकम्।
दैवाधीनं तथा पुत्रफलं तत्र निवारितम् ॥२८७॥
दैवाधीनत्वमेतेन विरक्तो भक्तिसंयुतः।
ऐहिकामुष्मिकफलं कृष्णात्प्राप्नोत्यसंशयम् ॥२८८॥

तदेति शेषः। उद्वाहयामासेति। स्वार्थणिच्, रामो राज्यमचीकरदितिवत्। मुदा कालदोषनिवृत्तये लोकवेदौ समर्थयन्नुदुवाहेत्यर्थः। एतेन यशोलीलेयमिति बोधितम्। खादिवदिति इन्द्रियादिवत्। वरः प्राप्त इति तेनेति शेषः। वराकारमाहुः-नेत्यादि चेदित्यन्तम्। वध्यत्वे प्रकारमाहुः-परमित्यादि। पुत्राय भगवदत्ताय। तथैवेति। अविद्याकार्येणाहन्तादिना रक्षितमिन्द्रियादिपोषितं भूम्यां जातं भगवदाज्ञानिरुद्धकृतिसहितं यदैहिकं सुखं नराणां तद्भगवन्नाश्यं दैवाधीनमिति तत्तुल्यता। एतास्वन्यमपि विशेषमाहुः-तथेत्यादि। तासु आमुत्रिकं फलं दैवाधीनम्, तत्र हेतुः--निवारितमिति। अष्टावक्रेण शप्तत्वान्निवारितमित्यपि विशेष इत्यर्थः। स च'न वयं साध्वि साम्राज्य'मिति सात्त्विकफलप्रकरणे स्फुटीभविष्यति। एतेनैतासां धर्मकामौ केवलः कामो वा सिद्धः ॥२८१॥२८६॥ एतल्लीलाप्रयोजनमाहुः-दैवेत्यादि। एतेनैतद्व्यतिरिक्तानां दैवाधीनत्वं निवारितमिति सम्बन्धः। सिद्धमाहुः-विरक्त इत्यादि, तथेति। कृतवानिति शेषः। २८८३। एवं सार्द्धाष्टभिस्तृतीयो विचारितः।

यादवानां समस्तानामेवं दातुं हरिस्तथा ।
परिहासविलासस्तु रुक्मिण्या यदिहोदितम् ॥२८९॥
तद्वाचिकतिरोधानं गोपीनामिव कायिकम् ।
अभिमानादिदोषाणां निवृत्त्यै मध्यमत्वतः ॥२९०॥
अन्तिमे च तथाऽध्याये मानसं च प्रवक्ष्यति ।
एवं त्रिधा तिरोभावो दोषाभावाय बोध्यते ॥२९१॥
अत्यन्तं कोमला भक्ता न कृष्णरसभोजने ।
समर्था इति दार्ढ्याय तिरोधानं करोति हि ॥२९२॥
अनेन सर्वभक्तानां सामर्थ्यं चाऽपि यच्छति ।
फलभोगे फलं चाऽपि तथा दोषं निवारयन् ॥२९३॥
पुत्रपौत्रादिसम्पत्तिः फलपूर्वमुदाहृतम् ।
तत्र दोषसमुद्भावे दैत्येष्वेव नियोजयेत् ॥२९४॥
इति दर्शयितुं रुक्मी हतो रामेण मङ्गले ।
अधर्मोद्वाहजं पापं तत्रैव निहतं यतः ॥२९५॥
अतः पापे प्रतिहते सुखिनस्ते समागताः ।
अतः परं सर्वभावैः कृष्णो भक्तार्थसाधकः ॥२९६॥

चतुर्थं विचारयन्ति सार्द्धैश्चतुर्भिः– परिहासेत्यादि। मध्यमत्वत इति मध्यमाधिकारित्वात् । भगवद्विप्रयोगस्येषदसहिष्णुत्वं प्रथमाधिकारित्वम्, अधिकासहिष्णुत्वं मध्यमाधिकारित्वं मध्यमत्वम्। अत्यन्तासहिष्णुत्वं चोत्तमत्वम्। अन्तिम इति स्कन्धसमाप्त्यध्याये। प्रवक्ष्यतीति 'स्त्रिय ऊचु'रित्यादिना कथयिष्यति। निवारयन्निति यच्छतीत्यनुषङ्गः। एतेनात्र फलानुक्तावपि तच्छेष-निरूपकत्वेनास्याध्यायस्य फलप्रकरणान्तःपातित्वमित्यर्थः। अत्र श्रीलीला स्फुटैव ॥२८८॥२९३॥

पञ्चमाध्यायं विचारयन्ति सार्द्धाभ्याम्--पुत्रेत्यादि। तत्रेत्यादि। पुत्रपौत्रादिषु सम्बन्धादिवशेन दोषोत्पत्तौ तद्दोषफल 'एष भगवान् द्विषन्तः पापकृत्या'मिति श्रुत्युक्तन्यायेन दोषप्रयोजकेषु दैत्येष्वेव योजयेदित्यर्थः। इयं च ज्ञानलीलेति ज्ञापनायाहु --अधर्मेत्यादि ॥

इति दर्शयितुं प्रोक्तमुपाख्यानं महाद्भुतम् ।
अध्यायद्वितयेनैव वैराग्येणाऽपि धर्मिणा ॥२९७॥
तूष्णीं स्वधर्मान् संहृत्य ज्ञात्वाऽप्यास्ते सदा हरिः ।
यदोत्कृष्टं भक्तकार्यं कुतश्चित्सिद्धिमेति हि ॥२९८॥
इत्युपाहरणं ज्ञात्वा रक्षकांश्च निवारयन् ।
अनभिप्रेतकर्ता च नारदेन निवारितः ॥२९९॥
एतदर्थं यतो लोके मुग्धभावस्थिरोऽभवत् ।
महादेवादिभिर्युद्धं नाट्यमत्र न संशयः ॥३००॥
महादेवोक्त एवाऽर्थो यतोऽयं हरिणा कृतः ।
भक्तेषु पक्षपातो हि सर्वदेवेषु बोधितः ३०१॥
तथाऽप्यशक्ता निखिला इति बाहूंश्चकर्त ह ।
भक्तप्रियेषु सर्वेषु ये केचिद्विमताः क्वचित् ॥३०२॥
यावत्ता ते भविष्यन्ति सम्मतास्तत्करोति हि ।
अनिरुद्धकथा प्रोक्ता यादवानां च सूचिका ॥३०३॥
राजसानां फलं ह्येतत्फलं कृष्णात्तु निर्गुणम् ।
एवं फलप्रकरणं राजसेषु निरूपितम् ॥३०४॥

षष्ठसप्तमौ विचारयन्ति-अतः परमित्यादि । वराग्यलीलत्वं स्फुटीकुर्वन्ति-तूष्णीमित्यादि । सदेत्यत्र यदेति यदेत्यत्र तदेति पाठः प्रतिभाति । धर्मिलीला शिवस्तुत्यादिभिः स्पष्टैव । इतीति । ज्ञापयितुमिति शेषः । निवारयन्निति । तूष्णीमासेत्यनुषङ्गेन योजना । अशक्ता इति स्ववरदत्तार्थरक्षणे अशक्ताः । एतेन कर्तव्येन यज्ज्ञापितं तदाहुः-भक्तप्रियेष्वित्यादि । अनिरुद्धकथोपसम्बन्धप्रयोजनमाहुः-अनिरुद्धेत्यादि । सूचिकेति । उद्बन्धसूचिका । सिद्धमर्थमाहुः-राजसानामित्यादि, राजसानां विचारे फलं हि निश्चयेन एतत्परिदृश्यमानं सर्वभावैः सर्वार्थसाधनरूपम् । त एतावदेव फलत्वेनाविदन्नित्यर्थः । तर्हि तत्त्वविचारे किं फलमित्याकाङ्क्षायामाहुः-फलमित्यादि । निर्गुणं विश्वमायानिवृत्तिरूपमित्यर्थः । उपसंहरन्ति एवमित्यादि । एवं सार्द्धद्विनवत्यधिकशतेन राजसप्रकरणं विचारितम् ॥

॥ राजसप्रकरणं समाप्तम् ॥

१ सर्वदेव ।

## ( अथ सात्त्विकप्रकरणम् )

अतः परं सात्त्विकानां प्रक्रिया विनिरूप्यते ।
नृगमोक्षादियज्ञान्ता वसुदेवस्य धीमतः ॥३०५॥
प्रमाणानां बलं त्वत्र सात्त्विकानां न मृग्यते ।
प्रक्रियात्रितयं त्वत्र प्रमेयादि निरूप्यते ॥३०६॥
स्नेहस्तेषां पूर्वसिद्ध आसक्तिश्चापि वै दृढा ।
व्यसनेनाऽभवन् शुद्धा राजसाः किन्तु दोपतः ॥३०७॥
संस्कारमात्रात्पुष्ट्या च सम्पत्त्या चोद्धृताः सदा ।
अतो दोपनिवृत्तिर्हि सर्वेषामत्र वर्ण्यते ॥३०८॥
नृगः पूर्वतनो भक्तः सात्त्विको धार्मिकस्तथा ।
अतिदानेन दुःखं स प्राप्य कृष्णेन मोचितः॥३०९ ॥
आज्ञेच्छाऽभावतो दोपमभिमानात्तु केचन ।

अतोऽग्रे त्रयोदशाधिकशतेन सात्त्विकप्रकरणं ससाध्यायैस्त्रिभिरवान्तरप्रकरणैर्निरूपयन्ति अतः परमित्यादिभिः। कुत एतस्य प्रकरणस्य न्यूनतेत्याकाङ्क्षायामाहुः प्रमाणानामित्यादि। सत्त्वं हि प्रमाणं ज्ञानरूपत्वाज्ज्ञानजनकत्वाच्च। अत्रोच्यमानास्तु तदुद्रिक्ता इति तेषां प्रमाणज्ञानस्य स्वाभाविकत्वेन तज्जनकप्रमाणानां बलं तत्प्रक्रियायां न मृग्यते, ते हि भगवन्तं नन्दकुमारं वसुदेवपुत्रमीश्वरं जानन्तीत्यतस्तथेत्यर्थः ॥३०५॥३०६॥ ननु भवत्वेवं तथाऽप्यस्मिन् प्रकरणे राजसास्तामसाश्च कुतो निरूप्यन्ते सङ्कीर्णत्वापादका इत्यत आहुः स्नेह इत्यादि। व्यसन इति व्यसनार्थम्। दोपत इत्यस्य विशेषणम्। संस्कारमात्रादिति। दोपस्तु रजःकृतो विक्षेपोऽत्र बोध्यः। तथा च तेषां निरूपणस्य दोपनिवारणार्थत्वेन प्रासङ्गिकत्वान्न तेन रूपेण तेषां प्रकरणित्वम्। किन्तु निवृत्ते दोपे सात्त्विकत्वेनेति तथैव तामसानामपीति न साङ्कर्यप्रयोजकत्वेत्यर्थः। तर्हि नृगात्कुतः प्रकरणारम्भ इत्यत आहुः-नृग इत्यादि। प्राप्येति। स्थित इति शेषः। प्राप्त इति वा पाठः। मोचित इति प्रमेयबलेन मोचितः। अनेन प्रमेयबलकरणकस्य दोपनिवारणस्यात्र निरूपणादस्य प्रमेयप्रकरणेतिसमाख्या भेत्स्यतीति बोद्धव्यम् ॥३०७॥३०९॥ नन्वेतादृशस्य धार्मिकस्य कुतो दोपोत्पत्तिर्येन मन्वन्तरप्रथमयुगोत्पन्नस्याष्टाविंशत्यापरान्तं दुःखमित्याकाङ्क्षायामाहुः आज्ञेत्यादि। आज्ञा नेच्छा

अत्यन्तमाग्रहो धर्मे विचारादेरभावतः ॥३१०॥
दुःखभोगाय भवति कृष्णादन्यत्र सर्वथा ।
भक्तियोगे तु भगवांस्तादृशं चापि मोचयेत् ॥३११॥
तथा यथा न कुरुते तदर्थं तादृशं हरिः ।
कृकलासं सर्ववध्यं सर्वक्षोभाच्चकार ह ॥३१२॥
यथैको ब्राह्मणः क्रुद्धस्तथैवैकत्र कर्मणि ।
यावन्तो योगमापन्नास्तावतां क्लेशदं तु तत् ॥३१३॥
अतोऽन्यत्र व्यसनिनो धर्मादिषु यथायथम् ।
दुःखभाजो भवन्त्येव तस्मात्कृष्णे तदाचरेत् ॥३१४॥
असङ्ख्यातत्वकथने दृष्टान्तत्रयमीरितम् ।
तामसादिविभेदेन गुणाश्चाऽपि त्रिधा मताः ॥३१५॥
अतस्तामसधर्मेषु भ्रमस्तस्य फलिष्यति ।
अतोऽत्र धर्मनिर्धारे दोषाभावो गुणः स्मृतः ॥३१६॥

चाहेच्छे तयोरभावतः। दोषमिति। प्राहुरिति शेषः। एतत्कथोपनिबन्धनप्रयोजनमाहुः-अत्यन्तेत्यादिसार्द्धः पञ्चभिः। न कुरुत इति। भगवदतिरिक्ते आग्रहं न कुरुते। सर्ववध्यं सर्वक्षोभादिति। तदुक्तं बृहदारण्यके सप्तान्नब्राह्मणे 'प्राणभृतः प्राणं न छिन्द्यादपि कृकलासस्ये'ति। अर्थस्तु अमावास्याया रात्रौ कस्यापि प्राणिनः प्राणविच्छेदं न कुर्यात्, किं बहुना कृकलासस्यापि प्राणं न विच्छिन्द्यात्। स हि पापात्मा दृष्टोऽप्यमङ्गल इति कृत्वा स्वभावेनैव सर्वैः प्राणिभिर्हिंस्यते इति तद्व्याख्यानात् ॥ ॥३१०॥३१२॥ ननु तत्रैव सर्वक्षोभाभावात्कथं कृकलासत्वमित्यत आहुः-यथैक इत्यादि। ननु यदि तस्य नाभिमानस्तदा 'यावत्यः सिकता भूमे'रित्यादिदृष्टान्तं कुत उक्तवानित्यत आहुः-असङ्ख्यातेत्यादि। त्रिधा मता इति। 'ब्रह्मण्यस्य वदान्यस्य तव दासस्ये'त्यनेनोक्ताः। अत इति त्रैविध्यकथनात्। यदि तस्य तेषु भ्रमो न स्याद्दास्यरूपमेकमेव गुणं वदेत् न तु त्रयम्। तेन सिद्धमाहुः-अतोऽत्रेत्यादिद्वाभ्याम्। दोषाभाव इति आग्रहाभावः। तथोदितमिति दोषजनकत्वेनोदितम्, अत्रेभ्यर्थकार्यत्वं स्फुटम् ॥३१३॥३१६॥ एवं प्रथमध्यायो विचारितः।

गुणस्तु दोष एव स्यादिति दानं तथोदितम् ।
धर्ममार्गे ब्राह्मणानां क्षोभं नैव समाचरेत् ॥३१७॥
मुख्ये तु सर्वभूतानां न किञ्चित्तस्य नश्यति ।
तथाऽर्थे बान्धवानां च कामे स्वात्मनि तत्तथा ॥३१८॥
मोक्षे त्वीशस्य सततं चतुर्भिस्तन्निरूप्यते ॥
यथा नृगस्य धर्मो न यमुनायास्तथा निजः ॥३१९॥
स्वार्थः सिद्धस्तथा कामः पौण्ड्रकस्य तथा गतिः ।
द्विविदस्याऽपि नो सिद्धस्तत्तन्मूलविरोधतः ॥३२०॥
अनिरुद्धे द्वयोः कार्यं तेन कृष्णो वलस्तथा ।
अन्तरान्तरभावेन भिन्नार्थविनिवारकौ ॥३२१॥
यमुनाकर्षणं कार्यं पश्चाज्जाताश्च गोपिकाः ।
श्रुतपूर्वाबलं दृष्ट्वा रेमिरे लौकिकास्तु ताः ॥३२२॥
सात्विकास्तु परं सङ्गाद्दोपस्तासां च नाश्यते ।

द्वितीयाध्यायं विचारयन्तश्चतुरध्यायीसिद्धं निषेध्यमर्थमाहुः-धर्मेत्यादि । मुख्य इति भगवद्धर्ममार्गे । उदाहरणं स्फुटीकुर्वन्ति यथेत्यादिसार्द्धेन । ब्राह्मणक्षोभेन नृगस्य धर्मासिद्धिः । बान्धवो यमस्तस्य क्षोभः श्रौते यमयमीसम्वादे, तेन यमुनाया निजः स्वार्थो भगवत्प्राप्तिरूपो न सिद्धः । तथा स्वात्मनि मात्सर्यरूपात् क्षोभात् पौण्ड्रकस्य कामो लोकप्रतिष्ठारूपो न सिद्धः । ईशस्य श्रीबलदेवस्य क्षोभान्मोक्षो गतिर्द्विविदस्य न सिद्धा । तथा चैतच्चतुष्टयनिवारणार्थमेतदध्यायचतुष्टयमित्यर्थः । नन्वत्र भगवल्लीलामध्ये बलदेवचरित्रं किमित्युच्यते तत्राहुः-अनिरुद्ध इत्यादि । अनिरुद्धव्यूहे द्वयोः सङ्कर्षणानिरुद्धयोः कार्यम्, नहि धर्मरक्षारूपं कार्यं प्रतिपक्षिनिग्रहं विना सिद्ध्यति, तेन कृष्णो बलस्तथा बलभद्रश्च अन्तरान्तरेत्यादिना प्रकारेणोक्तावित्यर्थः । तथा शब्दश्चकारार्थः । तथा चात्र व्यूहद्वयकार्यं सङ्कीर्णत्वबोधनार्थमेवं कथनमित्यर्थः । अध्यायार्थमाहुः-यमुनेत्यादि । कार्यमिति वीर्यकार्यम् । लौकिका इति । लौकिक्यः ब्रह्मशब्दवाक्रूपास्तत्तुल्या वा इति प्रतिभाति ॥३१७।३२२॥ प्राथमिकीनां किमत्र सिद्धमित्याकाङ्क्षायामाहुः-सात्विका इत्यादि । श्रीबलदेवसङ्गाद्वा ऐश्वर्यभगवत्त्वमितिशालिन्यः सत्यः सात्विक्यो जातास्तासां गोपीनां दोषः कृष्णदेवस्य कृतप्रताधापादनरूपः सोऽपि

गोपीनां कृष्णदेवस्य शिष्टानां सात्त्विकत्त्वतः ॥३२३॥
सत्सङ्गात्सुखमुत्पन्नं नित्यं कृष्णकथा यतः।
देवादीनां तु सम्मत्यै दैत्यानां देवरूपिणाम् ॥३२४॥
मधुधारादिकं प्रोक्तं वस्त्रदानादिकं तथा।
कामो लोके हि सन्मानं कृष्णत्वे तद्भवेद् ध्रुवम् ॥३२५॥
पौण्ड्रकस्तु ततो जातो मात्सर्यात्कृष्णरूपधृक्।
मूले कृत्वा विरोधं हि लोके नष्टस्तथाऽनुगः ॥३२६॥

नाश्यत इति सिद्धमित्यर्थः। श्रीनन्दादीनां यत्सिद्धं तदाहुः-शिष्टानामित्यादि। इयं गोपिकाभिः सह लीला न केवलस्य बलस्य, किन्तु भगवदाविष्टस्येति ज्ञापनायाहुः-देवादीनामित्यादि। देवादीनामित्यस्य वस्त्रदानादिकमित्यनेन सम्बन्धः ॥३२३॥ ॥३२४॥ एवं द्वितीयाध्यायो विचारितः॥

तृतीयं विचारयन्ति-काम इत्यादि। तत इति बालमस्तोभनात्।

### निबन्धकठिनांशविवेचनम्

का–३२६. उत्तरार्धे सप्तदशाध्याय आरभ्य त्रिषष्टितमेध्याये वा पौण्ड्रको हि वासुदेवत्वेन लोके प्रतिष्ठाकामः कृष्णरूपधृग्जातः, तदनन्तरं मात्सर्यात् स्वद्वेषमूले कृष्णे विरोधं कृत्वा लोके नष्टः, अलौकिके तु तस्य फलं जातं प्रमेयबलेन, यतः अवतारसमये कामादीनामसाधनानामपि साधनत्वं, 'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति-सिद्धान्तात्। परन्तु भगवद्विरोधिनामनुगमनं ये कुर्वन्ति तेषु व्यवस्थास्ति, यद् भगवद्वचनेन भगवदविरोधेन वा कर्तव्यं यथामृतमन्थनप्रसङ्गे देवैर्दैत्यानुगमनं वचनेन, यथा दुर्योधनादीनामनुगमनं भगवदविरोधेनैव विदुरेण कृतं तथा सति न कोपि विनाशस्तेषां अन्यथा तु विनाशः स्यादेव, यथा काशिराजस्य लौकिकाकारेण अनुगमनं कुर्वतः, अलौकिकप्रकारेणानुगमनं कुर्वतां काश्यादीनां चेति, एवं सति मूलश्लोकयोजना त्वेवं कर्तव्या, तीर्थदेवक्षेत्रैः स्वभक्तभक्त्या तुष्टैरपि कुत्रापि कार्ये भगवद्विरोधिनां स्वभक्तानामनुगमनं वाक्येनाविरोधेन वा कर्तव्यं न त्वन्यथा; अतो वचनाविरोधाभावेपि कृष्णविरोधिसुदक्षिणानुगमनकरणात् तीर्थरूपा काश्यपि निर्दग्धा, महादेवोपि वैदिकरूपवानग्न्यात्मको वारितः अन्यान्यपि शिवरूपाणि भूतप्रमथादीनि वारितानीत्यर्थः, फलितं सिद्धान्तमाहुः प्रकटेत्यादि, प्रकटे मुरवैरिणि दोषोत्पत्तिमात्रेणैव तीर्थदेवाग्निभिरपि स्वभक्ता अपि दुष्टास्त्याज्या एव न तु दोषजकार्यकरणप्रतिक्षा कर्तव्या, भगवतः कृष्णस्य देवदेवत्वादितिभावः, तेन काश्यादीनां कृष्णविरोध्यनुगतत्वेन देवदेवेन कृष्णेन काशीदाहकरणं शिवप्रतिघातश्चात्र श्रीभागवत उक्तः, भक्तिसिद्धान्ते दूषणं नेत्यर्थः॥

प्रमेयबलमासाद्य मुक्तः पूर्वो न चाऽपरः ।
वाक्येनैव तु कर्तव्यमविरोधेन वा क्वचित् ॥३२७॥
न त्वन्यथा तीर्थदेवक्षेत्रैर्भक्त्यापि कुत्रचित् ।
अतः काश्यपि निर्दग्धा महादेवोऽपि वारितः ॥३२८॥
तथाऽन्यान्यपि रूपाणि प्रकटे मुरवैरिणि ।
दोषोत्पत्त्यैव ते त्याज्यास्तेन नाऽत्रोक्तदूषणम् ॥३२९॥
पाण्डवादिसमस्तानां दोषोऽप्यत्र निवार्यते ।
तथा वैष्णवमुख्यस्य नारदस्य विरक्तये ॥३३०॥
धर्मस्य कारणात्स्त्रीणां नीत्वा यादवभूभुजाम् ।
एवं प्रमेयरूपो हि हरिर्दोषं न्यवारयत् ॥३३१॥

अनुगः काशिराजः पूर्वः पौण्ड्रकः । काशीदाहकथासूचितमर्थमाहुः वाक्येनेत्यादि । देवादिभिर्यत्साहाय्यं कर्तव्यं तद्भगवद्वाक्येनाविरोधेन वा कर्तव्यं न त्वन्यथा । अन्यथे-त्यस्यैव विवरणम् । तीर्थदेवेत्यादि । अत इति सार्वविभक्तिकस्तसिः । एतद्बोध-नार्थमित्यर्थः । एतद्यशः कार्यं फलकथनादवसीयते । एवं तृतीयाध्यायो विचारितः ॥

चतुर्थाध्याये द्विविदवधमात्रदर्शनात्तस्यैव दोषनिवृत्तिः प्रमेयबलेन । श्रीकार्यं तु बलदेवक्रीडा स्फुटैवेति विशेषाभावान्न स विचारितः ॥

पञ्चमाध्यायं विचारयन्ति दोषेत्यादि । त इति कुरवः । अत्रेति गतदोषेषु प्रसादे, उक्तदूषणम् तत्सङ्ग्रहरूपं दूषणं नेत्यर्थः ॥३२८॥३२९॥ नन्वविरोध्यानां कुरूणां दोषनिवर्तनमनावश्यकम् । न च द्विविदस्यापि तथेति वाच्यम्, तस्य जगद्व्य-तिकरावहत्वेन तद्दोषनिवृत्तेरावश्यकत्वादत्र च तदभावादित्याकाङ्क्षायामाहुः–पाण्डवा-दीत्यादि । 'कथमिन्द्रोऽपि कुरुभिः भीष्मद्रोणार्जुनादिभि'रिति कथनात्पाण्डवा अपि तस्मिन् मिश्रा इति तद्दोषोप्यत्र निवार्यत इति नानावश्यकत्वमित्यर्थः । इदं ज्ञान-कार्यं ज्ञानजननात् ॥

षष्ठसप्तमयोरर्थमाहुः–तथेत्यादि । दोषोऽप्यत्र निवार्यत इत्ययं चरणो देहलीदीपवदत्रापि सम्बध्यते । विरक्तय इति । स्ववैराग्यस्य नारदे बोधनार्थं तच्च 'ब्रह्मन् धर्मस्य वक्ताहं'मित्यत्र स्फुटीभवति दोषश्चैतदज्ञानमेव ।३३०। स्त्रीणां यादवीनां दोषो धर्ममत्यूहकारित्वम्, स च कुकुटध्वापाद्गम्यते । यादवभूभुजां दोषो राजसूय-साहाय्यमुपेक्ष्य जरासुतविजिगीषादिरूपः । सोऽपि तत्र तेष्वित्यत्रोक्तः । भूभुक्पदं क्षत्रियपरम् । एवं मर्त्रं निरूप्य प्रकरणसमाप्त्यावीजमाहुः–एवमित्यादि । तथा चैतादृशभगवन्निरूपणादस्य प्रमेयप्रकरणत्वम् । अत्र दोषं न्यवारयदिति

गोपीनां कृष्णदेवस्य शिष्टानां सात्त्विकत्वतः ॥३२३॥
सत्सङ्गात्सुखमुत्पन्नं नित्यं कृष्णकथा यतः ।
देवादीनां तु सम्मत्यै दैत्यानां देवरूपिणाम् ॥३२४॥
मधुधारादिकं प्रोक्तं वस्त्रदानादिकं तथा ।
कामो लोके हि सन्मानं कृष्णत्वे तद्भवेद् ध्रुवम् ॥३२५॥
पौण्ड्रकस्तु ततो जातो मात्सर्यात्कृष्णरूपधृक् ।
मूले कृत्वा विरोधं हि लोके नष्टस्तथाऽनुगः ॥३२६॥

नाश्यत इति सिद्धमित्यर्थः । श्रीनन्दादीनां यत्सिद्धं तदाहुः-शिष्टानामित्यादि । इयं गोपिकाभिः सह लीला न केवलस्य बलस्य, किन्तु भगवदाविष्टस्येति ज्ञापनायाहुः-देवादीनामित्यादि । देवादीनामित्यस्य वस्त्रदानादिकमित्यनेन सम्बन्धः ॥३२३॥ ॥३२४॥ एवं द्वितीयाध्यायो विचारितः ॥

तृतीयं विचारयन्ति-काम इत्यादि । तत इति बालमस्तोभनात् ।

निबन्धकठिनांशविवेचनम्

का--३२६. उत्तरार्धे सप्तदशाध्याय आरम्भतस्त्रिपष्टितमेध्याये वा पौण्ड्रको हि वासुदेवत्वेन लोके प्रतिष्ठाकामः कृष्णरूपधृग् जातः, तदन्तरं मात्सर्यात् स्वयेपमूले कृष्णे विरोधं कृत्वा लोके नष्टः, अलौकिके तु तस्य फलं जातं प्रमेयबलेन, यतः अवतारसमये कामादीनामसाधनानामपि साधनत्वं, 'तस्मात् केनाप्युपायेन मनः कृष्णे निवशयेदिति-सिद्धान्तात् । परन्तु भगवद्विरोधिनामनुगमनं ये कुर्वन्ति तेषु व्यवस्थास्ति, यद् भगवद्वचनेन भगवदविरोधेन वा कर्तव्यं यथामृतमन्थनप्रसङ्गे देवैर्दैत्यानुगमनं वचनेन, यथा दुर्योधनादीनामनुगमनं भगवदविरोधेनैव विदुरेण कृतं तथा सति न कोपि विनाशस्तेषां अन्यथा तु विनाशः स्यादेव, यथा काशिराजस्य लौकिकाकारेण अनुगमनं कुर्वतः, अलौकिकप्रकारेणानुगमनं कुर्वतां काश्यादीनां चेति, एवं सति मूलश्लोकयोजना त्वेवं कर्तव्या, तीर्थदेवसेवैः स्वभक्तभक्त्या तुष्टैरपि कुत्रापि कार्ये भगवद्विरोधिनां स्वभक्तानामनुगमनं वाक्येनाविरोधेन वा कर्तव्यं न त्वन्यथा; अतो वचनाविरोधाभावेपि कृष्णविरोधिसुदक्षिणानुगमनकरणात् तीर्थरूपा काश्यपि निर्दग्धा, महादेवोपि वैदिकरूपवानग्न्यात्मको वारितः अन्यान्यपि शिवरूपाणि भूतप्रमथादीनि वारितानीत्यर्थः, फलितं सिद्धान्तमाहुः प्रकटेत्यादि, प्रकटे मुरवैरिणि दोषोत्पत्तिमात्रेणैव तीर्थदेवादिभिरपि स्वभक्ता अपि दुष्टास्त्याज्या एव न तु दोषजकार्यकरणमनिष्ठा कर्तव्या, भगवतः कृष्णस्य देवदेवत्वादितिभावः, तेन काश्यादीनां कृष्णविरोध्यनुगतत्वेन देवदेवेन कृष्णेन काशीदाहकरणं शिवप्रतिघातश्चात्र श्रीभागवत उक्तः, भक्तिसिद्धान्ते दूषणं नेत्यर्थः ॥

प्रमेयबलमासाद्य मुक्तः पूर्वो न चाऽपरः ।
वाक्येनैव तु कर्त्तव्यमविरोधेन वा क्वचित् ॥३२७॥
न त्वन्यथा तीर्थदेवक्षेत्रैर्भक्त्यापि कुत्रचित् ।
अतः काश्यपि निर्दग्धा महादेवोऽपि वारितः ॥३२८॥
तथाऽन्यान्यपि रूपाणि प्रकटे मुरवैरिणि ।
दोषोऽस्त्यैव ते त्याज्यास्तेन नाऽत्रोक्तदूषणम् ॥३२९॥
पाण्डवादिसमस्तानां दोषोऽप्यत्र निवार्यते ।
तथा वैष्णवमुख्यस्य नारदस्य विरक्तये ॥३३०॥
धर्मस्य कारणात्स्त्रीणां नीत्वा यादवभूभुजाम् ।
एवं प्रमेयरूपो हि हरिर्दोषं न्यवारयत् ॥३३१॥

अनुगः काशिराजः पूर्वः पौण्ड्रकः । काशीदाहकथासूचितमर्थमाहुः वाक्येनेत्यादि । देवादिभिर्यत्साहाय्यं कर्तव्यं तद्भगवद्वाक्येनाविरोधेन वा कर्तव्यं न त्वन्यथा । अन्यथेत्यस्यैव विवरणम् । तीर्थदेवेत्यादि । अत इति सार्वविभक्तिकस्तसिः । एतद्बोधनार्थमित्यर्थः । एतद्यशःकार्यं फलकथनादवसीयते । एवं तृतीयाध्यायो विचारितः ॥
चतुर्थाध्याये द्विविदवधमात्रदर्शनात्तस्यैव दोषनिवृत्तिः प्रमेयबलेन । श्रीकार्यं तु बलदेवक्रीडा स्फुटैवेति विशेषाभावान्न स विचारितः ॥
पञ्चमाध्यायं विचारयन्ति दोषेत्यादि । त इति कुरवः । अत्रेति गतदोषेषु प्रसादे, उक्तदूषणम् तत्सङ्ग्रहरूपं दूषणं नेत्यर्थः ॥३२८॥३२९॥ नन्वनिरोध्यानां कुरूणां दोषनिवर्त्तनमनावश्यकम् । न च द्विविदस्यापि तथेति वाच्यम्, तस्य जगद्व्यतिकरावहत्वेन तद्दोषनिवृत्तेरावश्यकत्वादत्र च तदभावादित्याकाङ्क्षायामाहुः–पाण्डवादीत्यादि । 'कथमिन्द्रोऽपि कुरुभिः भीष्मद्रोणार्जुनादिभि'रिति कथनात्पाण्डवा अपि तस्मिन् मिश्रा इति तद्दोषोऽप्यत्र निवार्यत इति नानावश्यकत्वमित्यर्थः । इदं ज्ञानकार्यं ज्ञानजननात् ॥
षष्ठसप्तमयोरर्थमाहुः–तथेत्यादि । दोषोऽप्यत्र निवार्यत इत्ययं चरणो देहलीदीपवदत्रापि सम्बध्यते । विरक्तय इति । स्ववैराग्यस्य नारदे बोधनार्थं तच्च 'ब्रह्मन् धर्मस्य वक्ताह'मित्यत्र स्फुटीभवति दोषश्चैतदज्ञानमेव ।३३०। स्त्रीणां यादवीना दोषो धर्मप्रत्यूहकारित्वम्, स च कुकुरशापाद्गम्यते । यादवभूभुजां दोषो राजसूयसाहाय्यमुपेक्ष्य जरासुतविजिगीषादिरूपः । सोऽपि तत्र तेष्वित्यत्रोक्तः । भूभुक्पदं क्षत्रियपरम् । एवं सर्वं निरूप्य प्रकरणसमाख्याबीजमाहुः–एवमित्यादि । तथा चैतादृशभगवन्निरूपणादस्य प्रमेयप्रकरणत्वम् । अत्र दोषं न्यवारयदिति

दुर्योधनादिमानस्य भङ्गे तत्र समागतः ।
मिलितः कृष्णदेवेन रामो नोवाच किञ्चन ॥३४६॥
अन्यथा पाण्डवान् सर्वान् हन्यादेवाऽविचारयन् ।
एतदर्थं स्थितः कृष्णः प्रार्थनां जनयन् हृदि ॥३४७॥
महादेवाधिदैवस्तु शाल्वस्तत्र सहायवान् ।
द्वारकायां यथा पूर्वं ददौ क्लेशं सुदुःसहम् ॥३४८॥
यावत्तत्त्वानि पुरुषव्यतिरिक्तान्यहानि हि ।
अत आज्ञां विना किञ्चिन्न कर्तव्यं कथञ्चन ॥३४९॥
यतो रामे समायाते द्वारकात्यन्तपीडिता ।
कालादेरनुरोधेन भगवांश्चाऽपि मन्यते ॥३५०॥
आत्मानमन्यथाऽन्यत्र का शङ्का कार्यसाधने ।
एवं सप्तभिरुद्दिष्टं साधनं यद्धरिर्वदेत् ॥३५१॥
अन्यथा सेवनं तस्य कर्तव्यमिति निश्चयः ।

यज्ञानन्तरं भगवत इन्द्रप्रस्थस्थितेः प्रयोजनमाहुः-दुर्योधनादीत्यादि-द्वाभ्याम् । एवं चात्र श्रीकार्यं यज्ञसंसिद्धिः । ज्ञानकार्यं मानभङ्गः । भूभारजिहीर्षया प्रयुक्तत्वात् । प्रार्थनामित्यादि । पाण्डवहृदि बलदेवप्रार्थनामुत्पादयन्नित्यर्थः । एवं पञ्चभिरध्यायैर्भगवदाज्ञप्तं सपरिकरमेकं साधनं निर्दिष्टम् ॥

द्वाभ्यामध्यायाभ्यामन्यत्साधनं वक्तव्यं तच्च स्फुटमित्यतस्तदुपपाद्याहुः-महादेवेत्यादिसार्द्धत्रिभिः । तत्र सहायवानिति । तस्मिन् सौभे तिष्ठति तेन शाल्वस्तत्सहायवानित्यर्थः । अहानीति । अत्यन्तसंयोगे द्वितीया । अत्र यत्साधनसिद्धं तदाहुः अत इत्यादि । समायात इति इन्द्रप्रस्थाद् द्वारकामायाते । 'तत्स्थितिश्च फपं राममसम्भ्रान्तमिति भगवच्छायाज्ज्ञायते । मन्यत इत्यस्य आत्मानमन्यथेत्यनेन सम्बन्धः । तेन भगवदाज्ञापालनमेव कर्तव्यमिति साधनमस्मिन्नपि सन्दर्भे सिद्धमित्यर्थः । प्रकरणसिद्धमाहुः-एवमित्यादि । तथा चाज्ञायां तत्करणमनाज्ञायां भगवत्सेवनमिति प्रथमान्तरप्रकरणादत्र सिद्धमित्यर्थः । प्रकरणसमाप्तिबोधनायाहुः-

* अतः परं सात्त्विकानां फलं सप्तभिरुच्यते ॥३५२॥
उभयोरैक्यसिद्ध्यर्थं कथाश्लेषो विधीयते ।
प्रद्युम्नस्य जयस्मृत्या भगवत्स्मरणादपि ॥३५३॥
शाल्वे प्रविष्टो रुद्रो हि तेन प्रद्युम्नमारणम् ।
कामजेता यतः प्रोक्तस्तेनाऽत्राप्यभवज्जयः ॥३५४॥
द्युमत्यभूत्तदावेशः प्रद्युम्नस्याऽपकर्षणे ।
अनेन तस्मिन् समये सर्वेषामेव रुद्रतः ॥३५५॥
पाण्डवानां यादवानां सर्वेषामेव कालतः ।
फलं तदेव भगवान् प्रयच्छति यदाऽखिलाः ॥३५६॥
अत्यन्तं तापमायन्ति नोचेत्स्वादु फलं न हि ।
इति केचिद्विचार्यात्र कृष्णेऽपि परमात्मनि ॥३५७॥
साक्षादुद्भूतरूपेऽपि प्राकृतत्वप्रतीतितः ।

**अतः परमित्यादि** ॥३४६॥३५२॥ नन्वत्र पूर्वाध्यायसमाप्तावुक्तस्य दन्तवक्रागमनस्य प्रकार आरम्भे दृश्यते, तेन तच्छेषत्वात्कथमितः प्रकरणान्तरारम्भ इत्याकाङ्क्षायामाहुः–**उभयोरित्यादि** । दोषभावफलयोः सङ्कीर्णत्वज्ञापनार्थम् । तथा चैतावता न प्रकरणान्तरारम्भविघटनमित्यर्थः । ननु शाल्ववधप्रकरणस्य तात्पर्यमन्यथासेवनमित्यर्द्धेनोक्तं तत्र किं गमकमित्यत आहुः–**प्रद्युम्नस्येत्यादि** । ननु प्रद्युम्नस्य भगवत्पुत्रज्येष्ठस्य देवरूपस्य शम्बरजेतुः कथं पराजय इत्यत आहुः–**शाल्वे इत्यादि** । सुद्युम्न इत्यत्र द्युमतीति पाठः प्रतिभाति । रुद्रत इति पराजय इति शेषः । एवं षष्ठे वैराग्यकार्यमुक्तम्, द्वारकामुपेक्ष्य भगवत इन्द्रप्रस्थे स्थानबोधनात् ।

**सप्तमार्थमाहुः–पाण्डवानामित्यादि** । अत्र धर्मिलीला स्फुटैव । तत्र रुद्रात्पराजयसम्भवाभावेन कथं तदानीं हस्ताच्छार्ङ्गपातादीत्याशङ्कायामाहुः–**पाण्डवानामित्यादिसार्द्धम्** । तथा च फलस्य स्वादीयस्त्वसम्पादनाय तथाकरणम् । अन्यथा माहात्म्यज्ञानाधिक्यभूयस्त्वे स्नेहन्यूनत्वेन तथा रसालता न स्यादिति । ननु यद्येवं तदा ऋषय अलौकिकार्थद्रष्टारो मोहलीलां कुतोऽङ्गीकुर्वन्ति ? कुतश्च शुकस्तन्मतं दूषयतीत्यत आहुः–**इतीत्यादि** । इतीति । इदं रसालतासम्पादनार्थत्वं विचार्य । उद्भूतरूपे इति । 'स्वशान्तरूपेष्वि'तिन्यायेन स्वेच्छया प्रकटे । यद्वदिति

* इयं कारिकाग्रे सात्त्विकफलप्रकरणारम्भे स्यादिति श्रीपुरुषोत्तमचरणाः सूचयन्ति ।

अवतारान्तरे यद्वत्तथा वक्तुं विचारणाम्[1] ॥३५८॥
कुर्वन्ति लोकमोहाय तदर्थं तन्मतं क्वचित्।
फलात्पूर्वं पूर्वपक्षरीत्योक्त्वा दूषयत्यतः ॥३५९॥
शुकः परमतत्त्वज्ञः केचित्प्रक्षेपमूचिरे।
पूर्ववक्षकथायां तु मोहलीलेति निश्चयः ३६०॥
महादेवस्य तोषार्थं क्वचित्कल्पे तथाऽभवत्।
तत्स्मृतिर्योगधर्मेण तत आहुर्मुनीश्वराः ॥३६१॥
तथाऽपि न शुको मेने भक्तियुक्ताच्च योगतः।
हृदिस्थदुष्टभावेन सहितं स्मरणं तथा ॥३६२॥
न तु शुद्धेन योगेन तथा दृष्टमतो न हि।
एतस्य कथनादेवं ज्ञापितं सर्वथा यदा ॥३६३॥
कार्यावेशं वितनुते तदा मोहो भवेदिति।
तेन केनाऽपि लीलाऽपि न कर्तव्या कथञ्चन ॥३६४॥

यथां सत्वांशे शुद्धसत्वे वा अवतरणम्। तदर्थमिति। तस्य पक्षस्य निवृत्तये। अत इति। ल्यब्लोपे पञ्चमी। इदं साक्षात्माकव्यमनुसन्धाय ॥३५३॥ ॥३५९॥

एवं तत्त्वार्थं न जानन्ति ये माध्वाद्यास्तन्मतमनुवदन्ति–केचित्प्रक्षेपमूचिर इति। सिद्धान्तमाहुः–पूर्वेत्यादि, क्वचिदिति यस्मिन् कल्पे पूर्णस्य नैवतरणम्। ननु यद्येवं कल्पान्तरेऽभूत्तदा शुकेन कुत इदं नाङ्गीकृतमित्याकाङ्क्षायामाहुः–तथापीत्यादिसार्द्धम्। तथा च 'विदूरकाष्ठाय मुहुः कुयोगिना'मिति वाक्यान्न सर्वे योगिनो भगवल्लीलादिकं ज्ञातुं शक्नुवन्ति किन्तु 'भक्त्या मामभिजानाति' इतिवाक्याद् भक्ता एव शक्नुवन्ते। शुकस्तु तादृश इति परमं तत्त्वं विचार्य तन्मतं दूषितवानिति तथेत्यर्थः। नन्वेतत्कथोपनिबन्धस्य किं प्रयोजनमत आहुः–एतस्येत्यादिचतुष्टयम्। किं ज्ञापितमित्यपेक्षायां तदाहुः–सर्वथेत्यादि। 'कार्यावेशं वितनुते' इति भगवान् जीवस्येति शेषः। इतीति। इदं ज्ञापितमित्यर्थः। तेनेति हेतुना। तथा चैतल्लीलानुकरणेऽप्यनिष्टं भवतीति तदपि न कार्यमिति ज्ञापितमित्यर्थः। नन्वनुकरणे देवानां हृदि कुतो दोषदृष्टिरित्यत

१ विचारणाम्।

तदाऽधिकारिणो देवा मन्यन्ते दुष्टभावनाम् ।
सत्वावतारपक्षे हि भवेदेतन्न चाऽन्यथा ॥३६५॥
निर्गुणस्तु हरिः कृष्णः स्वयमाविर्बभूव ह ।
सन्देहे तस्य भक्तैस्तु निर्णयो ज्ञायतां यथा ॥३६६॥
तं शास्त्रपूगैरित्यादि शुद्धं नान्यत्ततोऽधिकम् ।

( अथ सात्त्विकफलप्रकरणम् )

आदौ त्रिविधदुष्टानां वधोऽत्र विनिरूप्यते ॥३६७॥
शाल्वस्य हरभक्तस्य दन्तवक्रस्य चात्मनः ।
तद्भ्रातुश्च द्वितीयस्य राजसस्य वधः स्मृतः ॥३६८॥
एवं दोषप्रणाशो हि फले पूर्वमुदीरितः ।
तेनैव यादवानां हि सर्वव्यसननाशतः ॥३६९॥
कृष्णात्मकं फलं सिद्धं यत एवं करोति हि ।
ततः सर्वसुखार्थाय बलदेवविनिर्गमः ॥३७०॥
तीर्थे स्वधर्मनाशाय दोषे याते सुखं स्वतः ।
स्वयं तु पाण्डवानां हि दुःखनाशं चकार ह ॥३७१॥
एवं त्रिभिरिहाध्यायैर्दुःखनाशो निरूप्यते ।

आहुः–सत्वेत्यादि । यथेति यथावत् ॥३६०॥३६६॥ एवं चतुस्त्रिंशद्भिः साधनप्रकरणं विचारितम् ॥

॥ अथ सात्त्विकफलप्रकरणम् ॥

अतः परं सार्द्धपञ्चाशद्भिः फलप्रकरणं विचारयन्ति–आदावित्यादिभिः । अतः परं सात्त्विकानामितिकारिका इतः पूर्वस्थेति प्रतिभाति । कथाश्लेषं स्फुटीकुर्वन्ति–आदावित्यादिभिः पादोनैस्त्रिभिः । अत्रेति कथाश्लेषे, आत्मन इति भक्तस्येतिशेषः । राजसस्येति तद्भ्रातुर्विशेषणम् । श्रीबलदेव-तीर्थयात्राकथाप्रयोजनसङ्गती आहुः–यत इत्यादि । तेन सुखप्रकारमाहुः–तीर्थ इत्यादि । स्वद्धर्मनाशाय दोष इति । वर्णाश्रमधर्मनाशाय विद्यमाने दोषे याते निर्वारिते । दुःखनाशमिति दुःखानुत्पत्तिम् । त्रिभिरिति साधनप्रकरणीया-

स्पष्टास्पष्टविभेदेन त्रिविधानां विशेषतः ॥३७२॥
कालदोषात्तु ऋषयो वक्तारं मेनिरेऽधमम् ।
अतो ज्ञात्वैव रामेण सूतो धर्मार्थमाहतः ॥३७३॥
सन्तोषार्थमृषीणां च स्वावतारं विधाय हि ।
तत्र तं स्थापयामास कार्ये भागवते स्थिरम् ॥३७४॥
शुकोक्तमन्यथा वाक्यं हृदयं न विशेत्कचित् ।
वल्वलस्य वधो मुख्यो दोषस्तेषां च नाशितः ॥३७५॥
वल्वलो दोषसूतौ च त्रयोऽत्र विनिवारिताः ।
ज्ञानोपदेशो लीलार्थो यथा तीर्थाटनं तथा ॥३७६॥
शुद्धिस्तीर्थैस्तथा यज्ञैर्ज्ञानेनाऽपि भवेद् ध्रुवम् ।
ऋषीणां त्रितयं सिद्धमग्रे मोहनिवृत्तये ॥३७७॥
ज्ञानोपदेशोऽनन्यार्थो दोषा एवं विनाशिताः ।
द्वाभ्यां पञ्चभिरग्रे तु गुणैर्दोषनिवारणम् ॥३७८॥
दारिद्र्यनाशः सम्पत्त्या द्वाभ्यां तत्र निरूप्यते ।
त्रिभिश्च त्रिविधानां च पूर्वोक्तानां च सर्वशः ॥३७९॥

न्तिमाध्यायसहितैस्त्रिभिः । अस्पष्टदुःखमन्येषां पाण्डवानां च ज्ञेयम् ॥३६७॥३७२॥ ननु सूतवधः कुतः प्रकरणविरुद्ध उच्यत इत्यत आहुः–कालेत्यादि । तर्हि पुत्रः कुतः स्थापित इत्यत आहुः–सन्तोषेत्यादि । विधायेत्यत्र विचार्येति पाठः प्रतिभाति । तमिति पुत्ररूपिणम् । कथं स्थितमित्यपेक्षायामाहुः–शुकेत्यादि । अन्यथेति । तदासने उग्रश्रवसः अनिवेशे परीक्षित्सभायां तस्य श्रोतृत्वेनाप्रवेशात् । एवं साधारणदोषनाश उक्तः । मुख्यदोषनाशमाहुः–वल्वलस्येति । ज्ञानोपदेशप्रयोजनमाहुः–ज्ञानेत्यादि । द्वाभ्यामिति । एतेन प्रथमे धर्मलीला द्वितीये ज्ञानलीलेति ज्ञापितम् । यथाक्रमं वा । अग्रिमेषु दोषनाशफलयोर्भवनप्रकारं बोधयन्ति–पञ्चभिरित्यादि । तत्रावान्तरप्रकरणविभागमाहुः–दारिद्र्येत्यादि । त्रिभिरध्यायैश्च पूर्वोक्तानां त्रिविधानां तामसादिप्रकरणत्रयोक्तभक्तानामेव सर्वप्रकारेण दोषनाश-

सुदामा ब्राह्मणः कश्चिदर्धं च ऋषिसम्मतः ।
भार्या तु ब्राह्मणी तस्य नर्पी दारिद्र्यदर्शनात् ॥३८०॥
विरुद्धमुभयं कालात्तत्रैकस्य निवारणम् ।
तत्र कृष्णः पुष्टिमार्गे स्त्रीणां चैव हिते रतः ॥३८१॥
अतोऽर्धजरतीयं तं भक्तं चक्रे स्वसङ्गिनम् ।
यथा हि भगवानत्र पूर्णकामोऽपि तिष्ठति ॥३८२॥
तत्सङ्गिभिस्तथैवाऽत्र स्थेयमित्येव निश्चितम् ।
नाशो न कोऽपि भविता ऋषीणां चाऽपि मोचकः ॥३८३॥
अलौकिकं च प्रददौ न दूषणमिहाण्वपि ।
स्वतुल्यत्वाय तु कथा पूर्वजाता निरूपिता॥३८४॥
समक्षं भगवाँस्तन्तु ऋषिमेवाऽकरोत्स्वतः ।
अतो न किञ्चित्प्रददौ भार्यायै तत्र दत्तवान् ॥३८५॥

पूर्वोक्तं फलमुच्यते । तथा चैवमत्र द्विप्रकरणी तेन सप्ताध्याय्यां पूर्वाभ्यां सह त्रिप्रकरणीत्यर्थः ॥३७३॥३७९॥

प्रकरणानि विभज्य पञ्चस्वाध्याययोरर्थमाहुः-सुदामेत्यादि । नाम पुराणान्तरे प्रसिद्धम् । अर्द्धमिति । ग्रामवासादिति प्रतिभाति । ननु मूले तथाविधत्वेन कथनात्कथं नर्पीत्यत आहुः–दारिद्र्यदर्शनादिति । कालादित्यादि । मूले भगवन्निकटगमनप्रार्थनाया बहुश उक्तत्वात् । भगवत्सखित्वादिपदच्छयोपपन्नेन वर्तमानत्वान्तधर्मवतस्तत्र गमनाभावस्य कालकृतत्वेन एकस्यापि तस्य कालान्निवारणं प्रतिबन्ध इत्यर्थः । तत्रेति कालिके प्रतिबन्धे । अत इति पुष्टौ तस्याङ्गीकृतत्वात् स्वस्य स्त्रीहितत्वाच्च । अर्द्धजरतीयमिति । ऋषित्वानृषित्वोभयधर्मवन्तम् । निश्चितमिति अनेन कथोपनिबन्धनेन निर्णीतम् । ननु भगवान्मोचको बन्धहेतुभूतां सम्पत्तिमेतादृशाय कुतो दत्तवानित्यत आहुः–नाशो नेत्यादि । नाशः परलोकहानिः । इयमेव लीला बृहदारण्यके ' अन्नादो वसुदान ' इत्यनेन श्राविता । ननु यद्येवं न दोपलेशस्तदा 'भार्यो गृहेष्वि'त्याद्यनिष्टानुवादस्य किं प्रयोजनमत आहुः–स्वतुल्यत्वेत्यादि । तर्हि समक्षं कुतो नाददादित्यत आहुः–समक्षमित्यादि । ननु धनार्थमागताय समक्षमृषित्वेऽपि धनादाने वैमनस्यं स्यादित्यत आहुः–अत

अनभिप्रेतपक्षे हि दानाभावो विशिष्यते ।
अतो दाने तस्य तोषो गच्छतो वर्ण्यते पथि ॥३८६॥
सांसर्गिकस्य दोषस्य निवृत्त्यै भगवत्परः ।
भक्तिमार्गानुसारेण विषयान् बुभुजे वशः ॥३८७॥
एवं ऋषित्वं भक्तत्वं धनं दारिद्रमेव च ।
विरुद्धं स्थापयामास स्वकीयत्वप्रसिद्धये ॥३८८॥
त्रिभिरग्रे तु भगवान् पूर्णं फलमुदीर्यते ।
द्वाभ्यां द्वाभ्यां त्रिभिश्चैव फलत्रयमुदीरितम् ॥३८९॥
दुःखाभावसुखोत्कर्षौ कृष्णश्च त्रिविधस्तथा ।
सर्वेषां वाञ्छिताकारः स्त्रीणामत्यन्तवल्लभः ॥३९०॥
ऋषिदेवपितॄणां च लौकिकालौकिकत्वतः ।
फलदाता सर्वभावैः सर्वतोऽत्र निरूप्यते ॥३९१॥
तत्कालस्थाः सर्व एव वर्णा एते च मानुषाः ।

इत्यादि। ल्यब्लोपे पञ्चमी। तस्येम स्वभावं विचार्य। तथा च पूर्वमर्द्धर्षित्वेन धनलिप्साभावाद्भार्यया धनार्थिन्या बहुशः प्रार्थनेऽपि कृष्णदर्शनमेव लाभत्वेन मन्यमानस्यागमनात्। तस्य च सम्पन्नत्वेन पूर्णमनोरथत्वात्समक्ष पूर्णर्षित्वकरणेन धनलिप्सायाः सुतराभवनभाद्धनादानमित्यर्थः। धनादानेन तस्य स्वस्य चाभिप्रायं प्रकटीकृतवानित्युभयार्थं समक्षादानमित्याहुः अनभीत्यादि। तस्येति धनस्य ॥३८०॥३८८॥ एवं नवभिर्द्वयोरर्थ उक्तः। अग्रिमत्रयाणां वक्तुं तत्सिद्धस्य फलस्य स्वरूपमाहुः—त्रिभिरित्यादि। त्रिप्रकरणसिद्धं फलं बोधसौकर्यायानुवदन्ति द्वाभ्यामित्येकेन। एतदध्यायत्रयोक्तं भगवत्स्वरूपत्रैविध्य स्फुटीकुर्वन्ति सर्वेषामित्यादिसार्द्धेन। सत्वत इति सात्विकान् विधाय। प्रथमाध्यायसिद्ध सर्ववाञ्छिताकारत्वं स्फुटीकुर्वन्ति तत्कालस्था इत्यादिभिर्नवभिः। अत्र सार्द्धाभ्यां साधारणाना वाञ्छिताकारत्वरूपं फलं बोधितम्। तच्च 'आसन्नच्युतसन्दर्श परमानन्दनिर्वृता' इत्यनेनोक्तम्। वाञ्छिताकारत्वं विना तद्दर्शने

सर्वतस्ते समागत्य कृष्णसान्निध्यदर्शनैः ॥३९२॥
शुद्धसात्विकभावं ते प्राप्ता रोधनमागताः ।
देहादिकं जगत्सर्वं विस्मृत्य भगवत्परा: ॥३९३॥
जाता इति फलं तेषां हरिरेव न संशयः ।
अन्ते च गोपिकाः प्रोक्ताः शुद्धसत्त्वप्रसिद्धये ॥३९४॥

आनन्दाभावादिति । तामसानां राजसभावस्य पूर्वमुक्तत्वादिदानीं सात्विकत्वं तेषां वक्तुमन्ते व्रजस्थानां कथेत्याहुः अन्ते चेत्यादि । शुद्धसत्त्वप्रसिद्धये इति । सत्वस्य प्रमितिजनकत्वेन तस्य शुद्धौ भगवत्स्वरूपयाथात्म्यावगतिरिति तदर्थमित्यर्थः ॥३९४॥

## निबन्धकठिनांशविवेचनम्

(का-३९४) अग्रे त्रयस्त्रिंशेध्याय एकोनाशीतितमे वा अन्ते च गोपिकाः प्रोक्ताः शुद्धसत्त्वप्रसिद्धय इति एतस्यार्थस्यावरणभङ्गे स्फुटतयोक्त इति ततोवधेयः । अतः परमनेनाध्यायेन सिद्धं फलितार्थमाहुस्तदन्ताः सर्व एवैते तत्फला इतिनिश्चितमित्यनेन, सर्वे भक्ता गोपिकावधयः सर्वं फलं गोपिकाफलावधीत्यस्मिन् सन्दर्भे निश्चितं विधा भागवतावधिरित्याद्विवदित्यर्थः । एतद् विविच्य दर्शयन्ति संसार इत्यादि तद्विधामित्यन्तेन, फलस्यावधित्वं ह्यन्यत्र तदभावे अत्र तत्सद्भावे, दुःखासम्भिन्नत्वे पूर्णत्वे न तु न्यूनत्वे, परमोत्कृष्टत्वे न तु निकृष्टत्वे च सति भवेद्, एवं भक्तानामप्यन्यत्र तादृशत्वाभावेन तादृशत्वसद्भावेन्यभावराहित्ये भगवद्भावस्य पूर्णत्वे परमोत्कृष्टभाववत्त्वेवधित्वं स्यादिति फलावधित्वेनैव भक्तावधित्वमर्थात् सिद्धमत्यतः फलावधिमाहुः संसार इत्यादिना, अन्यत्र विरोधादेव तदभावः, भगवता परमानुमहरूपपुष्ट्या गोपिकासु दानात् तत्सद्भावः, आहुश्च 'ते नलिननाभे'ति गोपिकानां प्रार्थना तज्ज्ञापिकेत्याहुः तथैव प्रार्थितं ताभिरिति, अस्मिन् प्रार्थनाश्लोके भगवतो नलिननाभत्वेन जगत्कर्तृत्वात् पदस्य चारविन्दत्वेन सुखकरत्वात् तापहारकत्वाच्च भक्तानां सुखकरं दुःखनाशकं तदेव तद्धृहेषु सृजतीत्युक्तम्, तेन फलस्य दुःखासम्भिन्नत्वमुक्तम्, अगाधबोधैः पूर्णज्ञानैर्वशीकृतयोगैर्योगेश्वरैरपि हृदि चिन्त्यमेव न तु प्राप्तमित्यनेन फलस्य परमोत्कृष्टत्वमुक्तम्, 'गेहं जुषा'मित्यनेन गेहस्य प्रीत्या सेवनमुक्तम्, तच्च न अहन्ताममतां विनेति संसारो निरूपितः, संसारस्यावश्यं दुःखहेतुत्वेन कूपपात उक्तः, चरणस्योक्तचरणावलम्बनत्वेनाहम्ममाभिमानजन्यदुःखसम्भावनायामपि तेनैव तन्निवृत्तिः, अनेनापि फलस्य दुःखासम्भिन्नत्वमुक्तम्, दैहिक ऐन्द्रियश्च सम्बन्धो न सदा तिष्ठति, अतः 'मनस्युदिया'दित्यनेन योगिवत् सार्वदिकः सम्बन्ध उक्तः, अनेन फलस्य पूर्णत्वमुक्तम्। 'न' इत्यनेन स्वस्मिन् तत्प्रार्थनोक्ता । ननु ताभिः प्रार्थनेपि भगवताऽदाने कथं तत्सिद्धिः स्यात् तत्राहुः सम्मतं चापि वै हरेरिति, यद्यपि मनसि

निरोधश्चापि तासां हि सर्वभावेन रूपितः।
तदन्ताः सर्व एवैते तत्फला इति निश्चितम् ॥३९५॥
संसारो भगवांश्चैव विरुद्धं द्वितयं फलम्।
उभयैर्यत्सुखं तद्धि तासां पुष्ट्याऽभवत्तदा ॥३९६॥
तथैव प्रार्थितं ताभिः सम्मतं चाऽपि वै हरेः।

ननु तस्याः किं प्रयोजनमित्याकाङ्क्षायामाहुः-निरोध इत्यादि। ननु स्वरूपसम्बन्धात्मकफलावधिनिरोध एतासां सर्वभावेन प्रागेव सिद्ध इति पुनः किं तत्कथयेत्यत आहुः-तदन्ता इत्यादि। एते सर्व एवादित आरभ्य ज्ञानोपदेशान्ता उपायाः। तत्फला ज्ञानसहितसर्वभावपूर्वकनिरोधफलाः। तथा च पूर्वं सर्वभावे सत्यपि तदुत्तरं परोक्षोपदेशेन परोक्षज्ञाने जातेऽपि यावत्तत्प्रत्यक्षं न भवति तावत्सर्वभावदाढ्यांभावान्न सम्यङ्निरोधसिद्धिः सर्वभावानुभवाभावात्। एतत्कथयेदं निश्चितमित्यर्थः। तदेतद्विविच्य दर्शयन्ति संसार इत्यादिभिः सार्द्धैश्चतुर्भिः। अभवदिति सर्वात्मकेन भगवता अभवत्। अत्र गमकमाहुः-तथैवेत्यादिभिः। 'आहुश्च ते

पदोदयमात्रप्रार्थनं न हरेः, तथा सति पदस्यैकदेशत्वान् न पूर्णं फलं स्यात्, तथापि पूर्वं भगवतोपदेशवाक्येषु 'दिष्ट्या यदासीन् मत्स्नेहो भवतीनां मदापन' इति कथनादेतासां स्नेहः सम्पूर्णभगवत्प्रापक एव न त्वेकदेशप्रापक इति, अत्र पदोदयप्रार्थनं तु तद्दैन्यज्ञापकव्याजेन सम्पूर्णोदयार्थमिति ज्ञेयम्, एतेन यत्रैव परमं दैन्यं तत्रैव भगवान् शीघ्रं हरित्वज्ञापनाय प्रकटो भवति गजेन्द्र इवेति ज्ञापनाय हरेरित्युक्तम्। ननु भगवतः सम्मतौ किं ज्ञापकमित्याशङ्क्य भगवद्वाक्यमेवेत्याशयेन श्रीभागवतगीतास्थानि वाक्यान्येयाहुर्न ज्ञानमित्यादि, उक्तवानित्यन्तेन, एकादशे विंशाध्याये भक्तिप्रकरण इदं वाक्यम्, "तस्मान् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह", अत्र स्नेहात्मकभक्तियोगादेव योगित्वं, न त्वष्टाङ्गयोगेन, 'मदात्मन' इत्यत्र मय्यात्मान्तःकरणं यस्य, अहङ्कारान्तःकरणे यस्येत्यर्थः, द्वयमप्यभिप्रेतम्, तादृशे भक्ते ज्ञानवैराग्योरभावेपि फलविलम्बः फलाभावश्च नेति तयोरसाधनत्वमुक्तम्, तथा सति ज्ञानाभावादहन्ता वैराग्याभावान् ममता चोक्तेति पूर्वश्लोकोक्तसंसारो ज्ञापितः। इतः पूर्वंप्येकादशस्कन्धवाक्येषु 'मयि हृदि स्थित' इत्युक्तत्वात् फलरूपो भगवान् प्राप्त एवेत्युक्तम्, भगवत्प्राप्तावपि भगवत अनन्तानि रूपाणि सन्ति, तत्र कस्य

'न ज्ञानं च वैराग्यं' यतः प्राह हरिः स्वयम् ॥३१७॥
'अव्यक्ता हि गतिर्दुःखं' यतः सर्वाणि चोक्तवान् ।
जीवतश्च स्थितिर्मृग्या तथा वृत्त्यादि सर्वथा ॥३१८॥
स्वाभाविकं न दुःखाय परत्रेह च निश्चितम् ।

'नलिननाभे'तिप्रार्थनावाक्ये तथा सिद्धेरित्यर्थः । ननु भगवत्सम्मत्यभावे प्रार्थनामात्रं न गमकमित्यपेक्षायामाहुः सम्मतमित्यादि । यतो हेतोर्भगवानेकादशे 'जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ।

---

रूपस्य प्राप्तिरितिसन्देहवारणार्थमक्षरपर्यन्तस्य निरासं वक्तुं अव्यक्ता हि गतिर्दुःखमिति-गीतावाक्यमुपन्यस्तम्, अक्षरप्राप्तौ साधनकाले भूयान् क्लेशः फलकाले च भगवत औदासीन्यरूपं भक्तानां महद् दुःखम्, अतोऽक्षरप्राप्तिर्भक्तानां नाभीप्सिता, नापि पूर्णपुष्टिमार्गे भगवता दीयते, अनेन फले दुःखासम्भिन्नत्वमुक्तम्, यत्राक्षरप्राप्तिरूपमपि दुःखं न, तत्रान्य-दुःखस्य का वार्ता, अतः परं फलस्य परमोत्कृष्टत्वं पूर्णत्वं च ज्ञापयितुमेतदग्रिमाणि गीतावाक्यान्युपन्यस्यन्ति, ये तु सर्वाणि चेति, अत्र प्रतीकमात्रेणान्वयत्सं श्लोकद्वयं ज्ञेयम्, तु शब्देन पूर्णपुष्टिस्थभक्तेतरभक्तनिरासः, येषां मदर्थे लौकिकवैदिककर्मपरित्यागपूर्वकं मत्परत्वं भगवत एव फलत्वेन ध्यानपूर्वकमनन्यतया भगवदुपासनम्, तदा मृत्युसंसारसागरादुद्धारकत्वस्वभावोऽहमक्षरात् परस्तेषां भवामीति तद्वयो भवामीत्यर्थः, अत्राक्षरात् परत्वेन फलस्य सर्वोत्कृष्टत्वं वश्यत्वेन पूर्णत्वं च ज्ञापितम्, तथासत्ये-तादृशभगवद्वचनैर्गोपिकाप्रार्थितं भगवतः सम्मतमितिसिद्धमन्यथैतादृशभक्तेभ्योऽप्येतादृश-फलादाने भगवतोऽनृतवादित्वं स्यादिति। अतः परं ज्ञानवैराग्याभावसूचिताहम्ममत्वेन जीवतामेव भक्तानामीदृशं फलं सूचितमितितद्विवेचनायाहुर्जीवत इत्यादि, अहम्ममाभिमानेन जीवतां स्थित्यर्थं गृहं जीवनार्थं वृत्त्यादिकं च सर्वथापेक्षितम्, तत्रेह लोके मनुष्याणां परलोक इन्द्रादीनां च स्वस्वगेहेषु स्थितानां स्वस्ववृत्त्या जीवतामेव परमं सुखं नान्यत्र, अतः स्वाभाविकं गृहवित्तादिकं न दुःखाय, अतो भगवानपि परतन्त्रत्वदुःखं निवारयितुं स्वतन्त्रत्वसुखञ्च सम्पादयितुं गोपिकानामेव गेहेषु गोपरूपेणैव स्थित्वा मनोरथान्तमानन्दं ताभ्यः प्रयच्छति, न तु ताः स्वगेहेषु स्थापयित्वा स्ववृत्त्या च जीवयन्निति, तथा सति रुक्मिण्यादिमहिषीतुल्यतया भक्तावधित्वं फलावधित्वं च न स्यात्, भगवतो व्यापिवैकुण्ठेऽपि गोपरूपत्वम्, तत्रत्यभक्तानां गोपीत्वं च बृहद्वामनीयकथासन्दर्भे स्फुटमिति तद् गृहं स्वाभाविकमिति न परतन्त्रतादुःखम् किन्तु परमसुखमेवेति तादृशं गोपिकाभिर्याचितमित्यर्थः ॥

१ येन । ये तु ।

लोकद्वयेऽपीदं तुल्यं हरेर्नान्यत्परं सुखम् ॥३९९॥
विरोधयन्त्योन्यमन्यत्र याचितं तेन तद्विधम् ।
अतिदेशार्थमन्येषां निकटे कथनं मतम् ॥४००॥

'ततो भजेत मां भक्त्या श्रद्धालुर्दृढनिश्चयः । जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् । प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मनेः । कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह'तिसन्दर्भेण स्वस्मिन् जातश्रद्धस्य प्रवृत्तिनिवृत्त्यात्मकवैदिकसर्वकर्मसु जातास्वैहिककामस्वरूपज्ञानेऽपि तत्त्यागाशक्तस्य स्वस्मिन् श्रद्धोत्कर्षपूर्वकं भमेदमेव कर्तव्यं नान्यदिति निश्चयदार्ढ्यपूर्वकं कामगर्हापूर्वकतद्भोगपूर्वकं भक्त्या श्रवणादिनवकावृत्तिं विधाय असकृत्तद्विचारे तथाभजने च क्रियमाणे तादृशस्य हृदये स्वस्य स्थितिं तया हार्दसर्वकामनाशं ततः स्वदर्शनं तेन हृदयग्रन्थिभेदं सर्वसंशयच्छेदं चोक्तवान् । ततोऽखिलात्मकभगवत्साक्षात्काररूपफलस्य जातत्वे साधनभूतज्ञानवैराग्ययोर्नभावाचयोरथैयस्त्वयुक्तत्वात् । तेन सर्वात्मभावपूर्वकभजनस्य सर्वात्मकभगवत्साक्षात्कारान्तता भजनानुवृत्तिश्च सिद्ध्यति । तदत्र 'मयि भक्तिर्हि'त्यारभ्य 'पश्यताभातमक्षर' इत्यन्तेन वरप्राप्तिवत्सिद्धम् । तदेव शुकेन जीवकोशात्मकतत्प्रतिबन्धकध्वंसपूर्वकमवृदितम् । न चात्र ज्ञानान्ततामात्रं भगवदभिमेतम् । गीतायां 'अव्यक्ता हि गति'रित्यनेन तत्फलापकर्षोक्तिपूर्वकं 'ये त्वि'तिसन्दर्भेण स्वस्यैवोत्कर्षस्य फलत्वस्य च कथनात् । अत एवं ज्ञापने यदुक्तं मनाडीसिद्धेधप्रकारकस्वदर्शनोत्तरभाविनादरानुसंधानपूर्वकनिरोध एवात्र फलत्वेनाभिमत इति । तदेतदुक्तम 'न ज्ञान'मित्यारभ्यो'रुक्थानि'त्यन्तेन ॥१९५॥३९७॥ ननु कोशध्वंसस्यकालाद्विदेहकैवल्यमेव फलत्वेनाभिप्रेतं न निरोध इति शङ्कायामाहुः जीवत इत्यादि । 'आहुश्च त' इत्यारभ्य ' ततः कामैः पूर्यमाणः सव्रजः सहयान्वव' इत्यन्तग्रन्थेन तेषां देहस्थितेस्तत्रगममात्रं तथा, किन्तु निरोध एव विवक्षितत्वः फलमित्यर्थः । ननु यद्येवं तदेदानीमेतादृशनिरोधस्य सिद्धत्वाप्रार्थनायाः किं प्रयोजनमित्यत आहुः-स्वाभाविकेत्यादि । स्वाभाविकमिति । 'आत्मा तद्वन्मम तुल्य'मिति स्वाभाविकमित्वादुःखजनकम् । अन्यत्रेति । एवं प्रकारफनिरोधदानस्थले ॥३९८॥३९९॥ एवं मार्दोष्टमिश्रिषु प्रथमो विचारितः ।

द्वितीयं विचारयन्ति अतिदेशार्थमित्यादि । अथागारम्य तयेति

१ मतम् ।

स्त्रीणां स्वस्वपतौ स्नेहः सहजस्तन्निवृत्तये ।
कृष्णस्त्रीणां विवाहानां कथा त्वत्र निरूप्यते ॥१०१॥
लोकाद्भयं गोपिकाभिः पूर्वमेव निवारितम् ।
पुरुषोत्तमभावेन वैदिकं च निवारितम् ॥१०२॥
उत्कर्षे तु श्रुते स्त्रीणां पूर्वभावो विनश्यति ।
पश्चात्तापश्च जायेत विवाहख्यापनं ततः ॥१०३॥
कृष्णे कामाद्यभावाय दास्यं सर्वत्र वर्ण्यते ।
सर्वभावेन सर्वासां विवाहकरणे क्षमः ॥१०४॥
सुतरां भक्तियुक्तानां लक्ष्मणायाः कथा ततः ।
द्रौपदी पुष्टिमार्गस्था ततः पृच्छति यत्नतः ॥१०५॥
तदुत्कण्ठापराः सर्वा रुक्मिण्याद्याश्च देवताः ।
जाता इति पुरा प्रोक्तास्फलावेलाद्विशिष्यते ॥१०६॥
विस्मयाविष्टचित्तानां भविष्यति तथा हरिः ।
पूर्वोक्तानामपि तथा क्रमवृद्ध्या क्षणे क्षणे ॥१०७॥
महिषीणां यथा भावस्तथा साधु भविष्यति ।
लौकिकानखिलानेवं समुद्धृत्य मनीषया ॥१०८॥
वैदिकानृषिदेवांश्च पूर्वभावस्य सिद्धये ।

पदाद्गोपिकावद्युधिष्ठिरादीनां स्त्रीणां च यथाधिकारं निरोधबोधनार्थमनुवादपूर्वकं कथनमित्यर्थः । स्वस्वपतिस्नेहनिवृत्तौ प्राप्तस्य (लोकवेदनिवृत्तौ प्राप्तस्य) लोकवेद-विरोधदोषस्य परिहारायाहुः-लोकादित्यादि । विशिष्यत इति । 'तद्भावमापुरपि नित्ययुजां दुराप'मिति पूर्वाध्यायवाक्यादन्यत्रापि तदतिदेशस्य समानन्यायप्राप्तला-त्तथेत्यर्थः । साधनाभावेऽन्यासां कथमेवं भाव इत्यत आहुः-विस्मयेत्यादि । तदुक्तमग्रिमारम्भश्लोके 'श्रुत्वा पृथे'त्यादिना । शेषग्रन्थ उत्तानार्थः । एवमष्टाभि-र्द्वितीयो विचारितः ।

तृतीयं विचारयन्ति-लौकिकानित्यादि । 'मनीषये'त्यस्य 'स्तोत्रं चकार-'त्यनेनान्वयः । पूर्वभावस्येति पूज्यत्वस्य । *न्यायस्तु भारते पाद्मादिषु च

* भगवद्भक्त्या भगवदावेशे जाते भगवता तस्य सन्मानने कृते स जीवस्तत आरभ्य सर्वलोकानां पूज्यो भवति । १ दिवेदेव ताः

ततः प्रभृति पूज्यन्त इति न्यायेन वै हरिः ॥४०९॥
स्तोत्रं तेषां चकाराऽग्र्ये निरोधार्थं तु ते पुनः।
विपरीतं सर्वमाहुः शास्त्रार्थोऽयं हि पुष्टितः ॥४१०॥
सान्निध्यादेव सर्वेषां हृद्येवं समुपागतम्।
अनेनैवोपदेशोऽभूत्फलं चाऽपि समं मतम् ॥४११॥
प्रमेयबलमासाद्य यादवानां फलं पुनः।

प्रसिद्धः। तुः पूर्वपक्षनिरासे। अयमेवात्राभिप्राय इत्यत्र गमकमाहुः- ते पुनरित्यादि हिंहतौ। तेनान्यदपि कार्यं भगवता साधितमित्याहुः--अनेनेत्यादि। उपदेश इति। सभासत्प्रभृतीनाम्। फलं चापि स्वसम्मतमिति यथाधिकारो निरोधः। ॥४०८॥४११॥ नन्वेवं सर्वेषां पूर्णे फले कथिते पुनः किमवशिष्टं येन वसुदेव-यज्ञकथावतारितेत्याकाङ्क्षायां तत्प्रयोजनं वक्तुं प्रथमतः प्रश्नप्रयोजनमाहुः- प्रमेयेत्यादि।

॥ निबन्धकठिनांशविवेचनम् ॥

(का. ४११) अग्रे पञ्चत्रिंशाध्याय एकाशीतितमे वा सान्निध्यादेव सर्वेषां हृद्येवं समुपागतमिति कृष्णसान्निध्यान् मुनिसान्निध्याच्च चैव सर्वेषां कुरुक्षेत्रे समागतानां हृदये एवं समागतम्, कृष्णवचनैर्ब्राह्मणानां साधनेषु प्राथम्येन गुरुत्वेन सर्वलोकपूज्यत्वं ब्राह्मणवचनैश्च कृष्णस्यैव पुरुषोत्तमत्वात्। सब्राह्मणसर्वलोकपूज्यत्वं परमफलत्वं चेति, एवं सर्वेषां हृदि समागतमित्यर्थः।

अत्रैवाग्रे अनेनैवोपदेशोभूदितिपादत्रयम्, अनेन कृष्णस्य मुनीनां च वचनप्रतिवचनेन सर्वेषां भगवन्मार्गोपदेशोभूत्, यथा नामकरणप्रस्तावे गर्गवचनैर्नन्दस्य नन्दवचनैश्चान्येषां गोपानामितिवदित्यर्थः, अथ प्रमेयबलमासाद्य सर्वेषां समं मतं फलं चापि ह्यभूदित्यर्थः।

(का. ४१२) प्रमेयबलमासाद्य यादवानां कृतं यद् राजसप्रकरणे फलं तदुद्धव-प्रश्नरूपया नीत्या पुनः सन्देहजननात् पुनः प्रमाणेनोज्यत इतिपदयोजना।

(का. ४१३) अग्र ईशलीलां सुदुर्बोधामित्यादि, वसुदेवे कर्मनिर्ह्रासार्थं पृच्छति सति ते मुनयः को वेद ईश्वरो लीलार्थं वसुदेवे बाधकं कर्मापि स्थापितवानितिसंशयं गताः, तदा नारदः सन्देहवारकः, पूर्ववद् यथा चैद्यमुक्तौ युधिष्ठिरस्य मायावत्याः प्रद्युम्नविषयः प्रद्युम्ने द्वारकां नीते वसुदेवादीनां प्रद्युम्नविषयकः सन्देहो निवारितस्तद्वन् मुनीनामपि ॥

कृतं सन्देहजननात्प्रमाणेनोच्यते पुनः ॥४१२॥
वसुदेवस्य सम्प्रश्नस्ततो यागार्थमुच्यते ।
ईशलीलां सुदुर्बोधां मत्वा ते संशयं गताः ॥४१३॥
नारदः पूर्ववत्प्राह सर्वसन्देहवारकः ।
सात्विकप्रक्रियायां हि प्रमाणं न हि दर्शितम् ॥४१४॥
ततः कृष्णकृतं सर्वं लौकिकं मेनिरेऽखिलाः ।
अतो यागोत्सवो जातो लौकिकं वैदिकं तथा ॥४१५॥
एकीभूयाऽभवद्भक्तौ तेन सर्वेऽभवन्समाः ।
सर्वेषां सर्वभावो हि फलादपि हरिः फलम् ॥४१६॥
सात्विकप्रक्रियायां हि सर्व एव निरूपिताः ।
निर्गुणत्वं समापन्ना निरोधोऽत्रैव रूपितः ॥४१७॥

एतत्प्रकरणीयप्रमेयप्रकरणे प्रमेयबलमासाद्य यादवानां दोषाभावरूपं फलं नीत्वालम्बेन सन्देहजननात्पुनः सदोषं कृतम्, तत्पुनः प्रमाणेनोच्यते ततो हेतोः सम्प्रश्न इत्यर्थः। कृतमित्यत्र गतमित्यर्थः प्रतिभाति। ते इति सात्विकाः यादवाः। ननु तावन्मात्रेण कथमेवं संशय इत्यत आहुः-सात्विकेत्यादि। खला इति यादवो नितरामपीतिवत्। संशय-निवृत्तिप्रकारमाहुः-अत इत्यादि। अत इति। एतस्य संशयस्य निवृत्त्यर्थम्। अभवद्भक्ताविति भक्त्यर्थमभवत्। फलितमाहुः-तेन सर्वेऽभवन्समा इति। सर्वस्य लौकिकवैदिकस्य भक्त्यर्थत्वभवनेन सर्वे राजसा यादवा निवृत्तचित्तवैषम्या-स्तुल्यरूपाः सात्विका अभवन्। तथा चैवं राजसादीनामैकरूप्यभवनस्यावशिष्टत्वात्त-दर्थमेतत्कथावतारणमित्यर्थः। एवं सर्वमाफलं निरूप्योपसंहरन्तो निगमयन्ति सर्वेषा-मित्यादि। तथा च छान्दोग्योक्तरीतिकाहङ्कारादेशात्मादेशाभ्यां यदुक्तं तदत्र निष्पन्नं यदा तदात्र निरोधः स्कन्धप्रतिपाद्यः पूर्णः सिद्ध इत्यर्थः ॥४१२॥४१७॥
एवं त्रयोदशाधिकेन शतेन सात्विकप्रकरणं विचारितम्।

॥ इति सात्विकप्रकरणं समाप्तम् ॥

## अथ गुणप्रकरणम्।

हरिणा केवलेनैव धर्मेणैवाखिलं कृतम्।
इति संशयनाशाय गुणानां प्रक्रियोच्यते ॥४१८॥
निर्धर्मको वा भिन्नो वा निरोधं कुरुते यदि।
तदा व्यर्थं समस्तं स्यादिति षड्गुणवर्णनम् ॥४१९॥
येनैतावत्कृतं सर्वं स कृष्णो भगवान् परः।
इति दर्शयितुं षड्भिरध्यायैः षड्गुणान् जगौ ॥४२०॥
ऐश्वर्येण समग्रेण प्रथमं ज्ञानदो हरिः।
पश्चात्पुत्रप्रदश्चाऽपि बाह्याभ्यन्तरभेदतः ॥४२१॥
ज्ञानेनान्तर आनन्दः पुत्रादिभ्यस्तथा बहिः
पितृमातृविभेदेन वैदिकं लौकिकं तथा ॥४२२॥
ऐश्वर्यभक्तिसिद्ध्यर्थं प्रकटीकृतवान् हरिः।
गुरुत्वं देवतात्वं वा न स्वीकृत्य सुतत्वतः ॥४२३॥
तदुक्तमेव निखिलं सर्वं ब्रह्मेति बोधितम्।

(अथ गुणप्रकरणम्)

अतः परमेकपञ्चाशद्भिर्गुणप्रकरणं विचारयन्तः प्रकरणप्रयोजनं त्रिभिराहुः-हरिणेत्यादि। ननु केवलधर्मिणा करणे को दोषो येन तच्छङ्कापाक्रियत इत्यत आहुः-निर्द्धर्मक इत्यादि। तथा च निर्द्धर्मकेन करणे सर्वस्य मायिकत्वापत्त्या वैयर्थ्यम्, भिन्नरूपेण करणे मुख्यफलाभावेन सर्ववैयर्थ्यमतस्तदुभयनिरासायेयं प्रक्रियेत्यर्थः। तर्हि सधर्मकः कया विधयोच्यत इति शङ्कायामारम्भे प्रकरणविभागे अन्तर्याम्यधिदैवादीत्यादिना यदुक्तं तत्स्मारयन्तस्तां विधामाहुः-येनेत्यादि ॥४१८॥४२०॥ एवं त्रिभिः प्रयोजनकथनेन प्रकरणस्यावश्यकता निरूपिता।

अतः परं प्रथमार्थमैश्वर्यं विविच्य दर्शयन्ति, ऐश्वर्येणेत्यादि-सार्द्धद्वादशभिः। अत्र प्रथमं वसुदेवस्तुतिस्तत उपदेशस्ततो देवकीप्रार्थनम्, ततः पुत्रानयनं ततस्तत्प्रसङ्गपतितमुक्तम्। तेन कथमैश्वर्यबोध इत्याकाङ्क्षायां कार्यद्वारेत्याहुः। बाह्याभ्यन्तरभेदत इत्यस्य समग्रपदेनान्वयः। कथमवगम इत्यत आहुः ज्ञानेनेत्यादि। तथा च द्विविधानन्दस्य विभज्यदानेन तयोस्तस्य बोधनात्तयेत्यर्थः। तत्र ज्ञानदानेनैश्वर्यप्रकटनमुपपादयन्ति-गुरुत्वमित्यादि।

क्वचित्तु ब्रह्मभावो हि खण्डज्ञानमिहोच्यते ॥४२४॥
लोकेऽधुना तदेवास्ते जीवेश्वरविभेदतः ।
मायाविनस्तु मन्यन्ते जीवमात्मानमीदृशम् ॥४२५॥
वसुदेवोक्तमखिलं वैष्णवाः पुरुषोत्तमम् ।
वस्तुतो यादृशं सर्वं तत्कृष्णेन निरूप्यते ॥४२६॥
अतिदेशप्रकारेण स्थापितं चाऽपि वैष्णवम् ।
दृष्टान्तार्थं यतः साधुर्जीवोऽप्येतेन सिद्ध्यति ॥४२७॥

अयमर्थः । कर्तुमकर्तुमन्यथाकर्तुं समर्थो हीश्वरः । साधनं विनापि कर्तुम्, फलोपधानानुकूलसामग्रीसत्तायामपि प्रतिबद्धुम्, विरुद्धसाधनेन कर्तुं समर्थ इति तदर्थः । एतादृशत्वमत्र प्रकटीकर्त्तव्यम् । तत्र श्रीवसुदेवे 'यत्र येने'त्यादिना सर्वरूपत्व-सर्वशक्तिमत्त्वं सर्वकारणत्वं सर्वनियामकत्वादिकं च भगवत उक्तम् । भगवता तु तदुक्तमङ्गीकृत्य स्वस्मिन्सुतत्वस्थापनपूर्वकं सर्वेषां तथात्वं नानात्वेऽप्येकत्वेन बोधितम् । तथा च न ह्येकः साधनं विना नाना भवति, न वा नानात्वसामग्रीसत्तायामपि तद्रूपे विद्यमानेऽप्येकं सर्वं भवति । न चैवं विरुद्धसाधनेनाविरुद्धं सर्वं भवतीत्यादि । साक्षात्कारितं तदपि फलोपहितं येन श्रीवसुदेवस्य नानाधीविनाशः । तस्मात्स-मग्रैश्वर्यमेव ज्ञानरूपकार्येण बोध्यमित्यर्थः । तदेतद्विशदीकुर्वन्ति सार्द्धैश्चतुर्भिः-क्वचि-दित्यादिभिः । क्वचिदिति । उपासनासूत्रेषु जैमिनीयेषु बोधायनवृत्तौ वेति प्रतिभाति । ब्रह्मभाव इत्यत्र ब्रह्मवाद इति पाठश्च प्रतिभाति ॥४२१॥४२४॥ तयोः सूत्रवृत्त्योरिदानीमप्रसिद्धत्वात्तादृशमतसत्तायां तदनुसारिमतप्रसिद्धिं प्रमाण-यन्ति-लोक इत्यादि। लोक इति। मध्वरामानुजयोर्मते यथायथं तयोर्मते जीवेश्वर-योरत्यन्तभेदस्य शरीरशरीरिभावेन भेदघटिताभेदस्य च प्रतिपादनादित्यर्थः । मतान्तर-माहुः—मायाविन इति मायावादिन इत्यर्थः । तृतीयं पञ्चरात्रमतमाहुः-वासुदेवे-त्यादि । एवं मतान्तराण्यनूद्य भगवन्मतस्वरूपमाहुः—वस्तुत इत्यादि । वसुदेवैर्यादृक्त्वं भगवतः प्रतिपादितम्, भगवता तत्सर्वं स्वस्मिन्नङ्गीकृत्य 'सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचर'मिति स्वातिदेशेन सर्वस्य तथात्वमुक्तम् । तेनोभयव्यपदेशन्यायेन भेदाभेद उक्तो भवतीति वस्तुस्थित्या ब्रह्मस्वरूपं निरूप्यते । किञ्च, अतिदेशेनैव प्रकृतिविकृतिभावस्यापि सूचनाद्वैष्णवं मतमाधिदैविकत्वादरूपमपि स्थापितम् । तस्य प्रयोजनं दृष्टान्तसिद्धिः । यतो हेतोरेतेन दृष्टान्तेन जीवोऽपि साधुः सिद्ध्यति । ईश्वरात्मकः सिद्ध्यति । तेन सर्ववादानवसरं नानावादानुरोधि ब्रह्माखण्डमिति भगवन्मतस्वरूपमित्यर्थः ॥४२५॥४२६॥४२७॥

एतेन सर्ववेदानामर्थो ज्ञानाधिकारतः।
प्रच्युतानामीश्वरत्वबलादेव निरूपितः ॥४२८॥
गुरुपुत्र इवाऽत्रापि कालग्रस्ता विमोचिताः।
षडेते षड्गुणत्वाय देवकीसुतदेहिनः ॥४२९॥
समानत्वनिवृत्त्यर्थं स्नेहस्तस्यास्तु वर्ण्यते।
नन्दादिवदिदानीं हि देवक्यपि पुरा स्थिता ॥४३०॥
अतः स्नेहदशायां हि स्तन्यं नित्यं हरिः पपौ।
पीतशेषमतः प्रोक्तं वैष्णवत्वाय मुक्तये ॥४३१॥

एतेनैश्वर्यसिद्धिमाहुः-एतेनेत्यादि। अर्थ इति अर्थज्ञानम्। एवं सार्द्धश्चतुर्भिरनधिकारेऽपि ज्ञानदानं 'तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहादि'तिन्यायेन बोधितम्, तेन समग्रैश्वर्यं साधितम्। क्रियया तद्वत्त्वं साधयन्ति गुरुपुत्रेत्यादि। समानत्वनिवृत्त्यर्थमिति। सर्वेषां तुल्यवयस्कत्वनिवृत्त्यर्थम्। तथा च कालग्रस्तानां स्वस्पर्शमात्रेणात्मदर्शनोत्पादनरूपविमोचनक्रियया जन्मान्तरमन्तरेणैव तद्देहस्यासुरयोनिनिवृत्तिपूर्वकं मातृस्नेहोत्पादकयथावस्थितपूर्वरूपसम्पादनक्रियया च समग्रैश्वर्यं बोधितम्। अतःपरं प्रासङ्गिकं विचारयन्ति। ननु भगवानेकादशवर्षो व्रजादागतः, इदानीं च वृद्धया इत्युभयथापि स्तनपानासम्भवात्पीतशेषत्वकथनं कथं सङ्गच्छत इत्यत आहुः-नन्दादिवदित्यादि। हि यतो हेतोरिदानीं नन्दादिवत्कुरुक्षेत्रस्थदर्शनजन्यदशायां यथा नन्दादयो निरोधपूर्णा जातास्तथा देवक्यपि पुरा पूर्वकाले

॥ निबन्धकठिनांशविवेचनम् ॥

(का. ४३०) षट्त्रिंशाध्याये द्व्यशीतितमे वा पीतशेषत्वोपपादने नन्दादिवत्यादि, इदानीं कृष्णस्य मथुरायां द्वारकायां च स्थितिसमये नन्दादीनां विरहदशास्ति, तद्दशायां परमस्नेहोद्रेकेण यदा बाह्यमपञ्चमननुरुन्धायान्तर्मुखा कृष्णैकनिष्ठा भवन्ति ते नन्दादयस्तदा भगवानपि प्रकटो भवति, सर्वां च लीलां दर्शनस्पर्शनादिव्यवहारविषयो गत्वा करोति, तद्वत् पुरा भगवतो मजस्थितिसमये देवक्यपि विरहदशां प्राप्य स्थिता आसीत्, तदा परमस्नेहोद्रेकेणान्तर्मुखत्वे भगवानपि प्रकटो भूत्वा नित्यं स्तन्यं पपौ, अतः पीतशेषत्वम्, अस्य पक्षस्य केवलभावुकवेद्यत्वात् सर्वलोकवेद्यं पक्षान्तरमाहुः प्राकृततद्दशायां वा सद्यः पीतं विनिर्गम इति॥

प्राकृतत्वदशायां वा सद्यः पीतं विनिर्गमे ।
उच्छिष्टभोजिनो मायां तरन्त्येव न संशयः ॥४३२॥
एवमैश्वर्यचरितमेकेन विनिरूपितम् ।
ततो वीर्यकथां प्राह तथैवैकेन सा त्रिधा ॥४३३॥
एतेषां सङ्गतिः षण्णां न परस्परमुच्यते ।
गुणत्वाय कथापक्षः पूर्वमेव निवारितः ॥४३४॥
बुद्धिवीर्यं क्रियावीर्यं क्रिया च द्विविधा मता ।
सिद्धमात्मानमेकं हि द्विरूपं कुरुते यतः ॥४३५॥
अतक्यभावमापन्नस्तथाऽन्येषां च तान् प्रति ।
मायाविवाहे भगवान् बुद्धिवीर्यं चकार ह ॥४३६॥
माया तु त्रिविधा प्रोक्ता शक्तिर्वै वासुदेवगा ।
अधिभूता समस्तानां मोहिकैव स्थिता भुवि ॥४३७॥
मायावती तु कामस्य द्वितीया विनिरूपिता ।
दैविकी त्वियमाख्याता पतिस्तस्याः स्वयं हरिः ॥४३८॥

निरोधपूर्णा स्थिता, अतस्तथेति तथोक्तं सुखेन सङ्गच्छत इत्यर्थः। नन्वेवं सति तदैवमुक्तं स्यान्नत्वेत्यरुच्या पक्षान्तरमाहुः--प्राकृतत्वेत्यादि। अर्थस्त्वतिरोहितः ॥४२८॥४३१½॥ एवं सार्द्धद्वादशभिः प्रथमाध्यायो विचारितः

द्वितीयं वीर्याध्यायं विचारयन्ति षोडशभिः--ततो वीर्येत्यादिभिः। ननु तर्हि कथाद्वयं कुत इत्यपेक्षायामाहुः--तथैवेति। यथा पूर्वाध्याय ऐश्वर्यं कथाद्वयेन द्विविधमुक्तं तथा च वीर्यमपीत्यर्थः। नन्वत्र राज्ञः प्रश्नात्सुभद्राविवाह उच्यते इति कथामात्रत्वेनोचिता, न तु वीर्यबोधकत्वमपीत्याशङ्कायामाहुः--कथापक्ष इत्यादि। पूर्वमिति। प्रथमस्कन्धविमर्शे कथामात्रमित्यादिभिस्त्रिभिः समाध्युपलब्धसविचारे। तथा च न वीर्यबोधकत्वहानिरित्यर्थः।* द्वैविध्यं विभजन्ति बुद्धीत्यादि। द्वैविध्यं मैथिलकथायां सेत्स्यतीत्याशयेनाहुः- सिद्धमित्यादि। अन्येषामिति मुनीनाम्। तान् प्रतीति मैथिलान् प्रति। बुद्धिवीर्यमुत्पादयन्ति--मायेत्यादि, मायाविवाह इति। मायाया विवाहे। सुभद्राया मायात्वादिकं व्युत्पादयन्ति--

* त्रैविध्यम् पाठः।

ईश्वरत्वात्तु दासी सा कन्यैव भवितुं क्षमा ।
सा पुनर्देवकीमोहात्तस्यां जाता निजेच्छया ॥४३९॥
तस्या भोक्ता न वै जीवो भगवान् पुरुषोत्तमः ।
सम्बन्धान्नैव भोक्ता स्याल्लोकदोषान्न कन्यका ॥४४०॥
सर्वदा स्यातुमुचिता वेदस्तस्या न युज्यते ।
अतो विवाहः कठिनो लोकेऽप्यत्र न दुष्यति ॥४४१॥
अत आवेशिनं कृष्णं नरं प्रवाजिनं तथा ।
वेषात्पापण्डिनं कृत्वा चौर्येणैतां ददौ हरिः ॥४४२॥
बलस्तु मूलवार्ता हि गृहे गुप्तांशसंयुतः ।
न जानाति ततः क्रुद्धः कृष्णेन च निवारितः ॥४४३॥
एतद्बुद्धिवलं प्रोक्तं येन लोकेऽपि सम्मतिः ।
जनकः श्रुतदेवश्च भगवद्वीर्यबोधकौ ॥४४४॥
प्रार्थनां चक्रतुरतो द्विरूपोऽभूत्तदिच्छया ।
मुनीनां च द्विरूपत्वं तेषां स्मृत्या च सम्मतम् ॥४४५॥
न च ते द्विविधा जाता नाऽपि कृष्णस्तथाऽभवत् ।
किन्तु कृष्णेच्छया जातास्तेषां चाऽप्यत्र विस्मयः ॥४४६॥
अतः क्रियाबलं प्रोक्तं यथा स्वप्ने तथाऽभवत् ।

माया त्वित्यादि । आविर्भावस्याः कुत उत्पत्तिरित्यत आहुः--देवकीमोहादिति । 'उपगृह्यात्मजामेव'मित्यत्रोक्तान्मोहात् । न युज्यत इति । श्रुतिगीतौ हन्तव्यत्वेन प्रार्थनाज्ञानुकूलो भवतीत्यर्थः । गुप्तांशसंयुत इत्यत्र गुप्तात्मसंयुत इति पाठः प्रतिभाति ॥४३१॥४४४॥ जनकश्रुतदेवयोः क्रियावीर्यबोधकत्वं व्युत्पादयन्ति--प्रार्थनामित्यादिना । अत इति प्रार्थनातः । हरिरिति शेषः । तदिच्छयेति भगवदिच्छया । स्मृत्या च सम्मतमिति । गौतमो वृद्धगौतम इत्यादिप्रसिद्ध्येति प्रतिभाति । तथाऽभवदिति । सत्यत्वेऽपि तथाऽभवदित्यर्थः । अत्र ' कृत्वा तावन्त-

१ द्वितीयो ।

एकत्राऽत्रस्थितः कालमन्यत्रैकं दिनं तथा ॥४४७॥
अग्रे कालद्वयं तुल्यं तेन सर्वस्य विस्मयः।
एतदर्थं तु मुनयः सह नीताः स्वपौरुषम् ॥४४८॥
प्रदर्शिता यतः सर्वे तद्वाक्याद्वीर्यवेदिनः।
श्रुतिर्गीता यशः प्राह सर्वसन्देहवारिका ॥४४९॥
लौकिकं चेद्युक्तिसिद्धं कर्तृत्वादि भवेद्धरेः।
अलौकिकस्य करणाद्यशो जातमलौकिकम् ॥४५०॥
*अष्टाविंशतितत्त्वानि यथारूपे हरीच्छया।
तथैव नाम्नि यशसि तावत्यः श्रुतयो मताः ॥४५१॥
तस्मात्सन्देहनिर्धारो मनसश्च निवेशनम्।
निर्गुणे भगवद्रूपे वेदैरेवेति निश्चयः ॥४५२॥
श्रीशक्तेरग्रिमाध्यायस्तत्रैवं निर्णयः कृतः।
हरिरेव स्वयं भुङ्क्ते श्रियं नाऽन्यस्तु कश्चनः ॥४५३॥
यस्तु मोहात्कश्चिद्भुङ्क्ते तं दुःखे पातयत्यजः।
भक्तस्य तन्न युक्तं हि तस्मात्तां विनिवारयेत् ॥४५४॥
अन्ये देवाः श्रियं दत्त्वा तथाऽन्यानपि वै वरान्।
स्वयं सङ्कटमायान्ति तस्माच्छ्रीर्नैव युज्यते ॥४५५॥

मात्मानं' 'तावन्ति विभ्रद्रूपाणी'तिवद्रूपकरणभरणयोरनुकलादेकेनैव रूपेण परिच्छिन्ने-नैककालिकभिन्नदेशिककार्यकरणं क्रियावीर्यबोधकं सिद्ध्यति। कालमिति। 'दिनानि कतिचिद् भूमन्नि'त्युक्तं बहुदिनात्मकं कालम् ॥४४५॥४४८॥ एवं षोडशभिर्वीर्याध्यायो विचारितः।

सार्द्धस्त्रिभिर्यशोऽध्यायं विचारयन्ति-श्रुतिर्गीतेत्यादि। लौकिक-मित्यादि। लौकिकं चेद्भवेद्युक्तिसिद्धं भवेदित्यन्वयः। शेषं स्फुटम्।

सार्द्धस्त्रिभिरग्रे श्र्यध्यायं विचारयन्ति-श्रीशक्तेरित्यादि। तदिति। दुःखे पातनम्। नैव युज्यते इति। अन्यदत्ता न युज्यत इत्यर्थः।

* अत्रत्यं निबन्धकठिनांशविवेचनं स्कन्धान्ते ५२४तमे पृष्ठे द्रष्टव्यम्।

शाकुनेयकथा प्रोक्ता तदर्थं हरसङ्कटे।
ततः परं तु ज्ञानस्य निर्णयो हरिमेधसः ॥४५६॥
क्षमा तस्योत्तमं लिङ्गं कृष्ण एव प्रतिष्ठिता।
तस्या निर्णयसिद्ध्यर्थं भृगूपाख्यानमुच्यते ॥४५७॥
तथा ब्राह्मणवार्ताऽपि सर्वयादवसन्निधौ।
क्षमा कृष्णे परा प्रोक्ता समर्थे ज्ञानसम्भवे ॥४५८॥
उपदेशेऽपि नाऽन्यस्य ज्ञानमस्तीति बोधितम्।
अर्जुनस्य कथा प्रोक्ता सर्वगीतार्थवेदिनः ॥४५९॥
अतः परन्तु वैराग्यं कथाऽध्याये निरूप्यते।
तेनैव पूर्णतां याति निरोधः सकलोऽपि हि ॥४६०॥
कृष्णो विरक्तः किं वाच्यस्तत्सम्बन्धास्त्रियोऽपि हि।
कामैकरसपूर्णाश्च विरक्ताः सर्वथा मताः ॥४६१॥
एतावदर्थनिर्धारे कथा यावस्य ईरिताः।
तासां चाऽत्रोपसंहारः क्रीडया विनिरूप्यते ॥४६२॥
एवं सर्वान् समुद्धृत्य क्रीडत्यस्माकमीश्वरः।
क्रीडायां प्राप्तसंसारः स्त्रीणामपि निर्वायते ॥४६३॥

ज्ञानाध्यायं विचारयन्ति सार्धस्त्रिभिस्ततः परं त्वित्यादि। प्रोक्तेति तदर्थं प्रोक्ता। स्फुटमन्यत् ॥४५०॥४५९॥

सप्तभिर्वैराग्याध्यायं विचारयन्ति अतः परमित्यादिभिः। स्कन्धसमाप्तौ वैराग्यनिरूपणप्रयोजनमाहुः—तेनैवेति इतरनैरपेक्ष्येण। नन्वत्र कथं भगवद्वैराग्यबोध इत्यत आहुः-कृष्ण इत्यादि। अत्र वैराग्ये निरूप्ये क्रीडानिरूपणस्य किं प्रयोजनमत आहुः एतावदित्यादि। एतावदर्थनिर्द्धार इति। करणात्मकव्यापारात्मकफलात्मकनिरोधस्य सपरिकरस्य निर्द्धारे। तथा च निरोधोपसंहारं बोधयितुं तदुक्तिरित्यर्थः ॥४६०॥४६३॥

१ क्रियावतां।

कुरर्यादिदशार्थास्तु निर्गुणेन युता गुणाः ।
महिषी हृदयापन्नाः सन्देहं वारयन्ति हि ॥४६४॥
मनसा तु तिरोधानाद्विह्वलास्ता निरूपिताः ।
तेन कृष्णार्थता प्रोक्ता तासां सर्वक्रियासु हि ॥४६५॥
स्कन्धार्थस्तु निरोधो हि ततस्तेनोपसंहृतिः ।
अग्रेऽपि ये भविष्यन्ति कीर्त्तनात्तेऽपि तादृशाः ॥४६६॥

( इति गुणप्रकरणम् )

प्रकरणमिह पूर्यतेऽनवद्यं
त्रयमपि विश्वजयाय मादृशानाम् ।
निजपदसमवाप्तये च नित्यं
निजगुरुणा हरिणैव लोकवन्द्यम् ॥४६७॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपनिबन्धे
श्रीभागवतार्थप्रकरणे दशमस्कन्ध-
विवरणं सम्पूर्णम् ।

ननु संसारनिवृत्तौ किं गमकमित्यत आहुः–कुररीत्यादि । सन्देहमिति संसारसन्देहम् । यदि संसारः स्यादेवं भगवदासक्ता न स्युः । आसक्तौ गमकमाहुः–मनसेत्यादि । समाप्त्यध्याय एतन्निरूपणप्रयोजनमाहुः–स्कन्धार्थ इति । उपसंहारप्रकारसूचितमर्थमाहुः--अग्रेऽपीत्यादि । त्रयमिति । इतः प्राक्तनं प्रकरणत्रयम् । विश्वजयायेति । 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्रुत्युक्तविश्वमायानिवृत्तये ॥४६४॥४६७॥

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य
दर्शिता दशमस्कन्धनिबन्ध-
योजना सम्पूर्णा ॥



**का०-४५१ ( निबन्धकठिनांशविवेचनम् ) ५२१ तमे पृष्ठेऽनुसन्धेयम्।**

(उत्तरार्धे) अष्टात्रिंशेऽध्याये चतुरशीतितमे वा वेदस्तुतौ श्रुतीनां ब्रह्मपरत्वनिर्णयः, तत्राष्टाविंशतितत्त्वनिरूपिकाणां श्रुतीनामत्रत्यैर्वाक्यशेषरूपैरष्टाविंशतिभिः श्लोकैर्निर्णीय इत्थं ब्रह्मपरत्वमिति, प्राथमिकानां चतुर्णां श्लोकानां तु प्रकृतिपुरुषाहङ्कारमहत्तत्त्वप्रतिपादकश्रुतिनिर्णायकत्वं सुबोधिन्यां श्रीमदाचार्यैरेव स्फुटं निरूपितम्, अनेन न्यायेनाग्रेऽपि ज्ञेयमितिसूचितं च, परं स्फुटं नोक्तमित्याधुनिकानां बुद्ध्यारूढं न भवतीतिगुरुचरणप्रसादाद् यथामतिभातं लिख्यते।

तत्र–उदरमुपासत इत्यनेनाकाशप्रतिपादिकानां श्रुतीनां निर्णयः,आकाशशरीरस्य ब्रह्मण उपासना कर्मयोगादिभ्यः श्रेष्ठा, कर्मयोगयोरुदरहृदयरूपत्वेनाधःस्थितत्वात् तस्य शिरोरूपत्वेनोर्ध्वस्थितत्वात् साक्षाद् भगवद्धामत्वेन कृतान्तमुखे पातनिवर्तकत्वादिति। पद्यं ५ तत्त्वं ५।

स्वकृतविचित्रेत्यनेन तेजःप्रतिपादिकानां श्रुतीनां निर्णयः विरजबुद्धीनां त्यक्तव्यवहाराणां सर्वत्र स्थितो भगवानग्निवदेकरसत्वात् समानप्रीतिदायक इति। पद्यं ६ तत्त्वं ६॥

स्वकृतपुरेष्वित्यनेन वायुतत्त्वप्रतिपादिकानां श्रुतीनां निर्णयः, ताः श्रुतयो वायुवज् जीवस्य विषमं प्रवेशं ज्ञापयित्वा तदर्थिनो जीवस्य भगवद्भजनं साधयन्तीति। पद्यं ७ तत्त्वं ७॥

दुरवगमात्मेत्यनेन जलतत्त्वप्रतिपादिकानां श्रुतीनां निर्णयः,यथा मेघादिजलस्य सर्वानन्ददायकत्वमेवं भगवच्चरितामृताब्धेरपीति। पद्यं ८ तत्त्वं ८॥

सदनुपथमित्यनेन भूतत्त्वप्रतिपादिकानां श्रुतीनां निर्णयः। भूकार्यभूतानि शरीराणि भगवद्भजनेनुगुणत्वान् न बाधकानि किन्तु तदभिमानस्तदभिमानवतां दुष्टानां सङ्गस्त्विष्टानि दुष्टानीन्द्रियाणि चेति। पद्यं ९ तत्त्वं ९॥

निभृतमरुन्मनोक्षेत्यनेन मनस्तत्त्वप्रतिपादिकानां श्रुतीनां निर्णयः, भगवच्चरणे प्रविष्टं दृढं मन एव भगवत्प्रीतिसाधनं न तु प्रकारविशेषः प्रयोजक इति। पद्यं १० तत्त्वं १०॥

क इह न्वित्यनेन चक्षुस्तत्त्वप्रतिपादकश्रुतीनां निर्णयः, भगवद्भजनेन भगवदावेशसहितान्येव चक्षूंषि भगवद्दर्शनसाधनानि, न केवलानीति। पद्यं ११ तत्त्वं ११॥

जनिमसत इत्यनेन श्रोत्रतत्त्वप्रतिपादिकानां श्रुतीनां निर्णयः, ज्ञानैकघनपरब्रह्मप्रोक्ताद् वेदाद् भिन्नानि मतानि श्रावयित्वा जीवं भगवद्बहिर्मुखमपि करोति, अतः सावधानतया स्थेयमिति। पद्यं १२ तत्त्वं १२॥

सदिव मन इत्यनेन त्वगिन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः, त्वगिन्द्रियं हि परमार्थपर्यवसायि यथार्थवस्तुग्राहि स्वदृष्टान्तेनात्मविदामनुभवस्यापि परमार्थपर्यवसायित्वं स्थापयति दोषास्तु पश्चादन्यकल्पिता एवेति। पद्यं १३ तत्त्वं १३॥

तव परि य इत्यनेन हस्तेन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः, तद्धि येषां सर्वात्मभावेन भगवत्परिचर्यायां व्यापृतं तेषां सर्वत्र जय एव, न तु कुतोऽपि पराजय इति। पद्यं १४ तत्त्वं १४॥

समकरण इत्यनेनैव रसनेन्द्रियवागिन्द्रियोभयप्रतिपादिकानां श्रुतीनां निर्णयः स्थानैक्यात्, रसनेन्द्रियं भगवद्भोगावशिष्टं चेद् भुङ्क्ते, तदा स्वयं पूतं सत् स्वसम्बधिनं जीवमपि पुनाति, वागिन्द्रियं च भगवद्गुणगानपरं तथेत्यर्थान् ज्ञेयम्, भगवन्निष्ठं तु भगवदंशरूपानधिकारिणः स्वस्वाधिकारे प्रवर्तयन् सर्वेषां भयेन भगवदाज्ञाधीनत्वं ज्ञापयतीति। पद्यं १५ तत्त्वे १५-१६ ।

स्थिरचरजातय इत्यनेन गुदेन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः, गुदेन्द्रियं हि देहांशं मलं देहात् पृथक्कृत्य सदोषं करोति, न तु देहस्थितम्, तद्वत् भगवतः पृथग्भूता एव दोषभाजो भवन्ति न तु भगवत्सम्बद्धा इति। पद्यं १६ तत्त्वं १७ ।

अपरिमिता ध्रुवा इत्यनेन गन्धतन्मात्रप्रतिपादिकानां श्रुतीनां निर्णयः, तद्धि द्रव्याधिकदेशवृत्तित्वात् स्वदृष्टान्तेन चैतन्यगुणकं जीवमणुं बोधयित्वा तस्य भगवन्नियम्यतां ज्ञापयतीति। पद्यं १७ तत्त्वं १८।

न घटत उद्भव इत्यनेनोपस्थेन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः,तद्ध्युभययोगेन सर्वोत्पादकम्,तद्वद् भगवानपि प्रकृतिपुरुषसंयोगेन सर्वोत्पादक इतिज्ञापयतीति। पद्यं १८ तत्त्वं १९।

नृषु तवेत्यनेन चरणेन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः, तद्धि सुबुद्ध्या भगवत्समीपगमने व्यापृतं जीवस्य संसारपरिभ्रमणादिसर्वदुःखनिवारकम्, दुर्बुद्ध्यान्यत्र व्यापृतं जीवस्य सर्वदुःखहेतुरिति । पद्यं १९ तत्त्वं २० ॥

विजितहृषीक इत्यनेन स्पर्शतन्मात्रप्रतिपादिकानां श्रुतीनां निर्णयः, स्पर्शसुखप्रधाने संसारसिन्धौ वर्त्तमानाः परमार्थसुखहेतुं गुरुचरणस्पर्शं विहाय योगादिसाधनैरपि यतमाना विघ्नविहता मरणान्तदुःखहेतुमेव स्पर्शं लभन्ते, न तु सुखहेतुमिति। पद्यं २० तत्त्वं २१ ॥

स्वजनसुतेत्यनेन रसतन्मात्रप्रतिपादिकानां श्रुतीनां निर्णयः, स्वजनादीनां जीवनसम्पादकत्वात् जीवतस्त्वदनमावश्यकमिति लौकिको रसनेन्द्रियैकवेद्यो मधुरादिरसोनुभवकाले सुखं नानुभावयन्नपि परिणामे प्रायो दुःखहेतुरपि भवति, भगवद्रसस्तु सर्वेन्द्रियवेद्योविरतं सुखहेतुरेवेति। पद्यं २१ तत्त्वं २२ ॥

भुवि पुरुपुण्य इत्यनेन घ्राणेन्द्रियप्रतिपादिकानां श्रुतीनां निर्णयः, घ्राणेन्द्रियं हि गुप्तमपि स्वसुखहेतुवस्तु स्वग्राह्यगुणेन जानाति, पश्चात् तत् तल्लग्नं कमले भ्रमर इव ततो न निवर्त्तते, एवं घ्राणसदृशबुद्धयो नराः कीर्तिगन्धेनानुभावेन च तीर्थपर्यादिषु गुप्तं भगवन्तं ज्ञात्वा तल्लग्नास्तत्सुखमनुभूय न ततो निवर्त्तन्ते, नान्यं वाञ्छन्तीति। पद्यं २२ तत्त्वं २३ ॥

सत इदमुत्थितमित्यनेन शब्दतन्मात्रप्रतिपादिकानां श्रुतीनां निर्णयः, शब्दतन्मात्रं हि ध्वन्यात्मकमर्थरहितमनुभवकाले क्वचिद् गानादौ किञ्चित् सुखं ददाति, न तु परमार्थे,

तद्वद् वेदभगवन्मतविरुद्धानि सर्वमतानि कुतर्कबहुलान्यापातसुखजनकान्यपि ध्वनिवत् परमार्थशून्यानि न भगवत्पदप्रापकानीति। पद्यं २३ तत्त्वं २४ ॥

न यदिदमग्र इत्यनेन रूपतन्मात्रप्रतिपादिकानां श्रुतीनां निर्णयः,रूपतन्मात्रं हि द्रव्याकृतिरूपं कारणात् कार्यस्य भेदं बोधयित्वा भ्रान्तिहेतुर्भवति, एवं जगन्निष्ठानखिलान् पदार्थान् कारणाद् ब्रह्मणो भिन्नान् बोधयित्वा भ्रान्तिजनकम्, अतो न रूपात्मकाकृतिज्ञाताः पदार्थाः सत्यत्वेन (भिन्ना) ज्ञेयाः, किन्तु वेदादिशब्दबोधिता (अभिन्ना) एवेति। पद्यं २४ तत्त्वं २५ ॥

स यदजयेत्यनेन तमोगुणप्रतिपादिकानां श्रुतीनां निर्णयः, तमो ह्यज्ञानरूपं प्रलयहेतुः, तद्धि जीवेषु संसृष्टं स्वरूपाज्ञानं सम्पाद्य जडभावं प्रापयित्वा सर्वसुखनाशं कृत्वा, अन्ते तेभ्यो मृत्युमपि प्रयच्छति, अतः सुधिया सत्सङ्गेन सत्त्वसेवनपूर्वकं निर्गुणप्रभुचरणोपसरणेन च तन्निवृत्त्यर्थं यतितव्यमिति। पद्यं २५ तत्त्वं २६ ॥

यदि न समुद्धरन्तीत्यनेन रजोगुणप्रतिपादिकानां श्रुतीनां निर्णयः, रजो विक्षेपकं, इष्टविस्मरणहेतुः, अत इष्टालाभजदुःखजनकं तदन्वेषणादिबहुक्लेशदायकं च, अतस्तन्निवृत्त्यर्थमपि सत्सङ्गादिना सुधिया यतितव्यम्, अत्र पद्ये अनिवृत्तरजोगुणानां कामजटोद्धृतिरहितानां निर्व्यलीकं यतिधर्ममाचरतां चेत् पूर्वार्धोक्तव्यवस्था, तदा किमु वक्तव्यमुत्तरार्धोक्तानां प्राणपोषकयतीनामुत्तरार्धोक्तव्यवस्थायामिति। पद्यं २६ तत्त्वं २७ ॥

त्वदवगमीत्यनेन सत्त्वगुणप्रतिपादिकानां श्रुतीनां निर्णयः। अत्र त्वदवगमीत्कथनेन यादृशं तमोरजोभ्यामसम्भिन्नं भगवत्प्रमितिजनकं तादृशं सत्त्वमुच्यते, तादृशे सत्त्वे सम्पन्ने भगवदनुभवजनितानन्दात् सततश्रवणादिजनितानन्दाच्चान्यसांसारिकसंसर्गाभावान्न कदाचिदपि दुःखं किन्तु निरन्तरं परमं सुखमेवेति। पद्यं २७ तत्त्वं २८ ॥

द्युपतय इत्यनेन सत्त्वस्य निर्गुणतापर्यवसायित्वनिर्णयः, सत्त्ववृद्ध्या भगवदनुभवे जाते निरन्तरं भगवत्सेवनेन श्रवणादिना चागणिततदानन्दोद्रेकात् सत्त्वस्यापि निवृत्तौ पूर्णानन्द एवावशिष्यत। इति पद्यं २८ ॥ इति श्रुतिगीतायां निबन्धकठिनांशविवेचनम्।




१ भिन्नामितिपाठः आदर्शे।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

## अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# अथैकादशस्कन्धविवरणम् ।

सप्ताशीत्या तथाऽध्यायैर्निरोधो दशमे त्रिधा ।
तामसादिविभेदेन भौतिकादिविभेदतः ॥१॥
अथैकत्रिंशताध्यायैर्मुक्तिरेकादशे स्फुटा ।
जीवेशयोर्द्विधाभेदाच्चतुर्धाऽपि निरूप्यते ॥२॥

श्रीबालकृष्णाय नमः ।

## अथ एकादशस्कन्धनिबन्धस्य योजना ।

अथैकादशस्कन्धार्थं निबध्नन्तः सङ्गतिबोधनाय सर्वस्कन्धार्थमनुवदन्ति सप्तेत्यादि । तथा च दशमस्कन्धे त्रिविधानामाभीक्ष्ण्येन यन्निरोधकथनं तदेकैकस्याधिभौतिकादिभेदेन त्रिविधनिरोधबोधनार्थम् । तेन तादृशनिरोधे जाते ततः स्वरूपावस्थानम्, न तु न्यूने, अतस्तथा कार्यकारणभावोऽत्र सङ्गतिरित्यर्थः ॥१॥

एवं सङ्गतिं बोधयित्वा प्रस्तुतं स्कन्धार्थं निरूपयन्त एकदेशे तत्प्रतिपादनव्यावृत्त्यर्थमध्यायसङ्ख्याकथनपूर्वकं विशेषलक्षणत्वबोधनाय नामनिर्देशपूर्वकमाहुः--अथेत्यादि । सङ्ख्यातात्पर्यं द्वितीयसुबोधिन्यां मुक्तिलक्षणव्याख्याने उक्तम् । अन्यथारूपं तत्त्वरूपं तस्य परित्यागः । स्वरूपमेकम् । अवस्था द्विविधा । तत्त्वान्यष्टाविंशतिः । एवमेकत्रिंशद्भेदा भवन्तीति । 'हेतुर्जीवोऽस्य सर्गादेरविद्या कर्मकारकः । यं चानुशायिनं प्राहुरव्याकृतमुतापरे' इति द्वादशे स्कन्धे महापुराणसामान्यं नवमं लक्षणं लक्षितम् । तदर्थस्तु, अस्य जगतः सर्गादेः अविद्याकृतजीवाऽदृष्टजन्यतया तत्कर्मकर्त्ता जीवो हेतुरित्युच्यते । तं हेतुं केचन चैतन्यप्राधान्येनानुशायिनमाहुः, अपरे उपाधिप्राधान्येनाव्याकृतमाहुरिति । तथा च हेतुस्वरूपं जीव इतिसिद्धम् । जीवस्तु 'बालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेय' इत्यादिश्रुतावुत्क्रान्तिपादे च केवलचिदंशरूपः सिद्धः । 'एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयत' इति चतुर्थस्कन्धीयनारदवाक्ये उपाधि-

जीवमुक्तिर्द्विधा प्रोक्ता सायुज्याद्ब्रह्मभावतः।
ब्रह्मणोऽपि द्विधा ज्ञेया नाट्यत्यागात्स्वकात्स्वतः ॥३॥
आद्या पञ्चभिरध्यायैर्द्वितीया तत्त्वसम्मितैः।
एकैकेन तथा शिष्टावभिनेयौ परं यतः ॥४॥
विद्यया प्रथमा मुक्तिः प्रकृतेस्त्यागतः परा।
ज्ञानेन पूर्वा भक्त्याऽन्या प्रथमे दश बोधकाः ॥५॥
गुणानिर्गुणभेदेन द्वितीये भगवान् परः।
ब्राह्मणश्च तथा हंसो भीष्मो भिक्षुः पुरूरवाः ॥६॥
पञ्चाऽन्ये भगवाँश्चापि द्विरूपः सप्त बोधकाः।
ऐश्वर्यादियुतः कृष्णः पूर्णो बोधक ईर्यते ॥७॥
नारदो निर्गुणस्तत्र कविप्रभृतयः परे।

सहितः सिद्धः। अत्रापि मतभेदेन द्विधोक्तः। एकादशेऽपि भगवद्वाक्येषु 'जीवो जीवेन निर्मुक्तो गुणैः स्वाशयसम्भवै'रित्यत्र तथाङ्गीकृतः। तत्र प्रकृते 'मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिरि'ति लक्षणात्केवलो विवक्षित इति चैतन्यप्राधान्येन सोऽपि ब्रह्मात्मक इति ब्रह्मैव जगन्मूलकारणमिति मुक्तिर्हेतुविशेषत्वेनैकादशे स्फुटा, न तु जीवत्वेन। हेतोर्द्विरूपत्वादत्रोक्तरीत्या चतुर्धा निरूप्यत इत्यर्थः ॥२॥ एतेन प्रकरण-विभोगोऽप्युक्तः। चातुर्विध्यं स्फुटीकुर्वन्ति जीवेत्यादि। 'सायुज्याद्ब्रह्मभावत' इत्यत्र क्रमो न विवक्षितः। एकादशीयसुबोधिन्यामुपपत्त्या तथोक्तत्वात्। स्वकादिति नाट्यत्यागस्य विशेषणम्। स्वत इति नित्यमुक्तस्वभावत्वात्। प्रकरणद्वयेऽप्यध्यायान् विभजन्ते--आद्येत्यादि। आद्या ब्रह्मभावरूपाः। द्वितीया सायुज्यरूपा। तत्त्वस-म्मितैरिति चतुर्विंशतिभिः। ननु तर्हि शिष्टयोर्द्वयोः किं प्रयोजनमत आहुः--एकैकेनेत्यादि। शिष्टौ ममताहन्तानाशौ एकैकेनाभिनेयवतोऽभिनयः प्रयोजन-मित्यर्थः। स्वतो मुक्तिस्तु 'राजन्परस्य तनुभृत्यादि'श्लोकत्रयेण ज्ञेया। तथा चाध्यायद्वयं ब्रह्ममुक्तिबोधकमित्यर्थः ॥३॥४॥ प्राकरणिकाध्यायसङ्ख्याबीजमाहुः--विद्ययेत्यादि। तयोर्यथायथं साधने आहुः-ज्ञानेन पूर्वा भक्त्यान्येति। वक्तॄनाहुः--प्रथम इति ज्ञाने। द्वितीय इति भक्तिरूपे साधने। द्वितीये षड्वक्तार इति भ्रमं वारयन्ति-पञ्चेत्यादि। द्विरूप इति मूलरूपोऽवताररूपश्चेत्यर्थः। सप्तमप्रयोजनमाहुः--ऐश्वर्येत्यादि ॥५॥७॥ प्राथमिकानां दशानां प्रयोजनमाहुः-नारद इत्यादि।

वैराग्यं भगवद्धर्माः सर्वनिर्णय एव च ॥८॥
नित्यं कथायाः श्रवणं पूजा चेत्यङ्गपञ्चकम् ।
अभिप्रायात्तु वैराग्यं पूर्वत्राङ्गं निरूपितम् ॥९॥
प्रक्रिया वोधिका ज्ञेया शेषयोर्वीजभावतः ।
द्वितीयस्य तु मुख्याङ्गं यत्र सर्वं प्रतिष्ठितम् ॥१०॥
चतुर्मूर्त्तिर्हरिः प्रोक्तस्त्रयाणां पूर्वमीरितम् ।
सङ्कर्षणस्य चरितमत्र स्पष्टं निरूप्यते ॥११॥
ज्ञानशक्तिस्तस्य मुख्या वासुदेवस्तु मोक्षदः ।
अर्थकामौ द्वितीयस्तु धर्मं यच्छति मध्यमः ॥१२॥
उपदेष्टा क्रियायां च निर्दोषत्वाय युक्तितः ।
अक्लिष्टकर्मा कालादेस्तथोपायं करोति हि ॥१३॥

विषया प्रथमेत्यत्रोक्ताया विद्यायाः पञ्चाङ्गानि वोधयितुं पञ्चाध्याया इति । तदर्थानाहुः-वैराग्यमित्यादि । ननु प्रथमेऽध्याये यदुकुलशापमात्रमुच्यत इति कथं तत्र वैराग्यबोधकतेत्यत आहुः-अभिप्रायादित्यादि । शेषयोर्ज्ञानाङ्गभूतयोरहन्ताममतानाशयोर्वीजभावतो वैराग्यस्य वीजभूतत्वेन पूर्वात्राध्यायेऽभिप्रायाद्वैराग्यमङ्गं निरूपितम् । यदि नैवमभिप्रेयाद्वसुदेवनारदसम्वादोत्तरं देवस्तुत्याद्यारम्भ एव वदेदतः प्रक्रियाबोधिका ज्ञेया, ज्ञानप्रकरणमेवाभिप्रायबोधकं ज्ञेयमिति तथेत्यर्थः । द्वितीयप्रकरणारम्भे भगवत्स्तुत्यादेस्तात्पर्यं वदन्ति-द्वितीयस्येत्यादि । द्वितीयस्येति, भक्त्याख्यस्य साधनस्य । मुख्याङ्गमिति विषयत्वेन तत्स्वरूपनिर्वाहकत्वान्मुख्याङ्गम् । यत्रेति मूलभूते परब्रह्मणि । तथा च तद्बोधनाय स्तुत्यादिकमित्यर्थः । ननु तर्हि भक्तिस्तद्विषयं ब्रह्म च वक्तव्यम्, ज्ञानाद्युपदेशकथनस्य किं प्रयोजनमत आहुः-चतुर्मूर्त्तिरित्यादि । ईरितमिति चरितमितिशेषः । तस्येति सङ्कर्षणस्य । द्वितीय इति मोक्षलीलोत्तरं प्रसङ्गतः सर्गकथने विवक्षितत्वात्तत्कर्त्ता प्रद्युम्नो द्वितीयः । धर्ममित्यादिपादत्रयेणानिरुद्धचरित्रमुच्यते । तथा च ज्ञानादिनिरूपणस्य चतुर्मूर्त्तिचरित्रबोधनं प्रयोजनम् । तस्यापि प्रयोजनं भक्तिविषयनिष्कर्ष इत्यर्थः । नन्वस्मिन् स्कन्धे मुक्तिस्तत्साधनं च वक्तव्यं तच्चात्र सम्वादद्वयेनैव सिद्ध्यतीति मौसलकथनस्य किं प्रयोजनमत आहुः-अक्लिष्टेत्यादि । तर्हि चारद्वयं किमित्युक्त-

१ न्याय ।

तदर्थं मौसलं प्रोक्तं संक्षेपेण पुरोदितम् ।
अन्ते चतुर्णां चरितं सर्वमेवोपसंहृतम् ॥१४॥
द्वयं निर्गलितं ह्यत्र भगवच्चरितेन हि ।
तदा स्थितास्तु निर्द्वन्द्वाः सुखं प्राप्य परं गताः ॥१५॥
नामारूढचरित्रस्य कीर्तनाच्चाऽपरे तथा ।
लोकदृष्ट्या चरित्रस्य ग्रहणं बोधितं भवेत् ॥१६॥
अतो विशेषं विज्ञातुं पुनः पृच्छति तत्त्वतः ।
भगवानेव सर्वस्य कर्त्तेत्यत्र निरूपितम् ॥१७॥
उपक्रमेण निर्दुष्टः कथया चाऽपि बोधितः ।
ज्ञानं पुरा भगवता वसुदेवाय बोधितम् ॥१८॥
गुरुत्वभावनाभावाद्विस्मृतस्तत्पुनर्हरिः ।
नारदं स्थापयित्वाऽऽह मन्यते तं यतः पिता ॥१९॥
गोपिकावद्बहिर्दृष्टौ व्यसनत्वं हि भासते ।
संसारे निखिले तस्य त्यागेच्छा च प्रजायते ॥२०॥
अतः सम्यक्प्रबोधाय नारदोऽत्र निरूपितः ।

मित्यत आहुः—सङ्क्षेपेणेत्यादि । ननु भगवच्चरित्रत्वेन कथनस्य किं प्रयोजनमत आहुः—द्वयमित्यादिसार्द्धम् । तथा चैतत्कार्यद्वयार्थं चरित्रत्वेन कथनमित्यर्थः । अत्राद्यं पाण्डवेषूक्तमिति तद्वदन्येष्वपि देशान्तरीयेष्ववगन्तव्यम् । निरोधस्य सर्वत्र तुल्यत्वात् । द्वितीयं तु 'य एतां प्रातरुत्थाये'तिवाक्याद् बोध्यम् ॥११॥१५॥ एवं सार्द्धैः पञ्चदशभिः सपरिकरः स्कन्धार्थः प्रकरणार्थश्च विचारितः ।

(अ. १) प्रथमाध्यायार्थं विचारयन्तो 'ब्रह्मण्यानामि'ति राजप्रश्नस्य 'बिभ्रद्वपुरि'त्यादेस्तदुत्तरस्य च तात्पर्यमाहुः—लोकेत्यादि । निरूपितमिति । उत्तरग्रन्थेन निरूपितम् । बोधित इति भगवानित्यनुषज्यते । एवं द्वाभ्यां प्रथमाध्यायो विचारितः ।

(अ. २) द्वितीयाध्यायार्थं विचारयन्तो वसुदेवे ज्ञानस्य पूर्वमुपदिष्टत्वान्नारदेन किमत्र कार्यमित्याकाङ्क्षायामाहुः—ज्ञानमित्यादिसार्द्धचतुष्टयम् । व्यसनित्वं दुःखित्वम् । तथा च गुणातिक्रमेण बहिर्दृष्टिनिवृत्तिर्नारदकार्यमित्यर्थः । नन्वत्र द्विविधा यत्कारो युक्तास्तथाप्येकेनैवाध्यायेन तदुक्तं कुतो नोक्तमित्याकाङ्क्षायामाहुः—

पुष्टिमार्गस्थितं मत्वा कदाचिन्नैव मन्यते ॥२१॥
अतो मर्यादया सिद्धान्नव योगीश्वरान् जगौ।
त्रैगुणातिक्रमे जाते नारदोक्तं हि भासते ॥२२॥
नवानां भूमिकाः प्रोक्ताश्चतस्रो ह्यधिकारतः।
अतोऽध्यायैश्चतुर्भिर्हि तदुक्तं विनिरूप्यते ॥२३॥
तत्र सर्वोत्तमो यस्तु तस्य कार्यद्वयं मतम्।
भगवद्धर्मकरणं ततो भागवतो भवेत् ॥२४॥
अथवा भगवद्भक्तैस्तद्धर्मास्तु समाचरेत्।
उत्तमस्य तु चत्वारि कर्त्तव्यानीति रूप्यते ॥२५॥
आदौ मायापरिज्ञानाद्वैराग्यं सुदृढं मतम्।
ततस्तत्तरणोपायं गुरुसेवादिकं चरेत् ॥२६॥
ततो ब्रह्म परं ज्ञात्वा यज्ञान् कुर्यादहर्निशम्।
वैदिकांस्तान्त्रिकान् वाऽपि तदर्थं वेदनिर्णयः ॥२७॥
तत्राऽशक्तस्य सततं कथाश्रवणमीर्यते।
सर्वावतारैर्यज्जातं तस्मिश्चेत्तः सुखी भवेत ॥२८॥
ततोऽपि प्रथमो यस्तु प्राकृतः स निगद्यते।
तस्या भजननिन्दायां सन्निवेशः पुरा भवेत् ॥२९॥
ततो युगानुरूपेण भजेत् स्वस्याऽधिकारतः।

नवानामित्यादि। हि यतो हेतोरधिकारतो जनकप्रश्नसिद्धः श्रोत्रधिकारविचारेण भूमिकास्तद्वृत्तयः प्रकारा वक्ष्यमाणसर्वोत्तमादिभेदेन चतस्रः प्रोक्ता अतस्तथेत्यर्थः। तत्र प्रथमां मुख्यां विद्यां प्रदर्शयन्ति सार्द्धेन तत्रेत्यादिना। भगवद्भक्तैरिति। सहार्थे तृतीया। इयं प्रथमाध्यायसिद्धा। द्वितीयस्यामाहुः-उत्तमस्येत्यादिसार्द्धाभ्याम्। रूप्यत इति द्वितीयाध्याये रूप्यते ॥१६॥२५॥ तत्तरणोपायमिति। मायातरणोपायम्।

(अ. ३-४) तृतीयस्यामाहुः-तत्राशक्तस्येत्यादि।

(अ. ४-५) चतुर्थस्यामाहुः-ततोऽपीत्यादिसार्द्धेन। सन्निवेश इति अभिनिवेशः। आग्रहदार्ढ्यमिति यावत्। स्वस्याधिकारत इति।

भक्तिं चाऽग्रे स्वयं प्राह कृतार्थत्वं च पुष्टितः ॥३०॥
ज्ञानस्य पूर्वसिद्धत्वात्कार्यमत्र निरूपितम्।
मोहाभावस्तु तेनैव सिद्धमेवाऽखिलं यतः ॥३१॥
चतुर्विंशतिभिः प्रोक्ता द्वितीया प्रक्रिया यतः।
अतः प्रकृतिनाशाय षष्ठाध्यायो निरूप्यते ॥३२॥
आद्यो मूलेन हरिणा स्वीकृतं त्याज्यतेऽमरैः।
त्यागस्वीकरणे जाते तदुच्छिष्टोपजीविनाम् ॥३३॥
भक्तानां तज्जिहासेच्छा तत्र ज्ञानं क्रियाऽथवा।
बोधनीयौ हि हरिणा तत उद्धवसङ्कथा ॥३४॥

प्राकृताधिकारानुसारेण। नन्वेवं जघन्येऽधिकारे कथं मुक्तिरित्यत आहुः- भक्तिमित्यादि। प्राहेति पदं देहलीदीपवदुभयत्र सम्बद्ध्यते। तथा च भगवदुक्तकरणाद्भगवदनुग्रहाच्च मुक्तिरित्यर्थः। नन्वियं वसुदेवनारदसम्वाद-कथा ब्रह्मवादबोधनायोपन्यस्ता। तत्र श्रोतुः स चेच्छुकस्यैव भवेत्तदा युज्येत, तथा त्वत्र न दृश्यते इति कथमस्यास्तादर्थ्यमित्यत आहुः-ज्ञानस्येत्यादि। कार्य-मिति ज्ञानिनः कर्त्तव्यम्। तेनेति कार्यश्रवणेन, तथा च तच्छ्रवणेन 'यतोऽजह-त्तुर्मोहमात्मन'इति मोहाभाव उक्तस्तेनैवाखिलं साधनकदम्बकं सिद्धमतो ब्रह्मभावे कः सन्देह इत्यर्थः। तेनेतः परमभिमानस्थितिस्तु भगवदिच्छया विवक्षितलीलार्थमिति भावः ॥२६॥३१॥ एवं लोकदृष्टेयेत्यादिभिः प्रथमं प्रकरणं विचारितम् ॥

(अ. ६) अतः परं सार्द्धपञ्चषष्टिभिर्द्वितीयं प्रकरणं विचारयन्ति-चतुर्विंशतीत्यादि। तत इति ब्रह्मभावप्रक्रियोत्तरम्। तेन तस्मात्प्रकारादयं प्रकार उत्कृष्यते। अत्र भगवत एव साधनत्वेन पुष्ट्याधिक्यादित्याशयेनाहुः-अत इत्यादि। अत्र गमकमाहुः-आद्य इत्यादि। सृष्ट्यादौ विभागोत्तरम्। जीवस्य मूलप्रकृति-संसर्गः केवलया मूलेच्छया, प्राकृतसंसर्गस्तु तयाभिमानजननात्। अत आद्यो मूलप्र-कृतिनाशो मूलेन हरिणेति। तद्बोधनाय ब्रह्माणं प्रति यादवान् प्रति भगवदुक्तयो बोधिनास्तेन सोऽध्यायस्तथा। ततः स्वीकृतं स्वत्वेनाभिमन्यमानं परैरग्रिमाध्यायोक्तैः साधनैस्त्याज्यत इति। तत्रापि गुरुत्वेन भगवानेव साधनमित्याशयेनाहुः-त्याग इत्यादि। तज्जिहासेच्छेति प्राकृतजिहासोत्पादिका भगवदिच्छा। बोधनीयाविति। इष्ट इति शेषः। द्विहेती। तत इति तथा भगवदुद्यमबोधनार्थम्। तथा च

३ नरैः।

त्रयोविंशतिभिः प्रोक्ता प्राकृतो हि तथा गणः
प्रश्नस्तु कृष्णवाक्यार्थस्तेनाऽऽदावेव रूपिता ॥३५॥
प्राकृताङ्कुरवत्पूर्वं हरिः सङ्क्षेपतो जगौ ।
सर्वत्र सुलभत्वाय भक्त्यै ज्ञानं निरूपितम् ॥३६॥
तदिच्छां तु पुरस्कृत्य न तु तस्याऽधिकारतः ।

स्वकृतसाधनजन्यप्रकृतिप्राकृतसंसर्गनाशापेक्षया भगवत्कृतनाशस्य विलक्षणत्वात्तत्फलेऽपि वैलक्षण्यमिति पूर्वस्मादयं प्रकार उत्कृष्ट इत्यर्थः । एतेन निरोधेऽपि यत्र तत्त्वातिक्रम उक्तस्तत्राप्येषैव दिगनुसन्धेयेति बोधितम् । ननु त्रयोविंशतिभिश्चेत्सा कथा निरूप्या, तदा प्रश्नस्तेष्वेव कुतो नोक्त इत्यत आहुः-प्रश्न इत्यादि । रूपितेति पाठे एतस्य कथापदेन योजना, एवं सार्द्धैस्त्रिभिः प्रथमाध्यायो विचारितः ।

(अ. ७) द्वितीयं विचारयन्ति-प्राकृतेत्यादि। प्राकृताङ्कुरवदिति। महत्तत्त्ववत्। 'विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुर' इतिवाक्यात्। अयैतद्बोध्यम्। 'एष ते ऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रह' इति भगवता सम्वादोपसंहारे वक्तव्यम्। तेनात्रोपक्रमेऽपि स एवोपक्रान्त इति ज्ञायते । तत्र भगवता 'यदात्थे'त्यादिभिस्त्रिभिरुद्धवोक्तानुवादमुखेन स्वाभिप्रायमुक्त्वा 'न वस्तव्य'मितिद्वाभ्यां बाह्यं साधनमुपदिश्य 'यदिदं मनसे'त्यादिद्वाभ्यां प्राकृताङ्कुरवत्सर्वमुक्तम्। तत'स्तस्माद्युक्तेन्द्रियग्राम' इत्यादिभिश्चतुर्भिः प्राकृताङ्कुरनाशायान्तरं ज्ञानरूपं साधनमुपदिशता 'पश्यन्मदात्मकं विश्वमि'ति ब्रह्मवादः सङ्क्षेपेणोक्तः। एवं सति 'यदिद'मित्यत्र यन्मायिकमुक्तं तद्बोद्धे प्रपञ्चे पर्यवसास्यति। स च विषयतारूपो द्वितीयस्कन्धे 'ऋतेर्थ'मित्यस्य सुबोधिन्यां विचारितः । श्रुतौ च 'न तं विदाथे'तिमन्त्रे 'माया ह्यन्यदिवे'तिब्राह्मणे चान्तरालिकः सिद्धः । अत्र च 'इन्द्रियायनसृष्टे, त्यत्र 'ईक्षेत विभ्रम'मित्यादौ 'लयमुद्धवे'त्यादौ च वक्ष्यते । तस्य च प्राकृतत्वं 'द्वे अस्य बीजे' इत्यत्र वक्ष्यते । स च साङ्ख्यादिस्मृतिसिद्ध एवात्र पुरःस्फूर्तिमादाय वैराग्यार्थमनूद्यते । वैदिकस्तु 'स एष जीव' इत्यादिभिः सार्द्धैश्चतुर्भिर्वेदोत्पत्तिपूर्वकं वक्ष्यते । 'कालेन नष्टा प्रलय' इत्यादिना प्रपञ्चयिष्यते च, तज्ज्ञानं च 'प्राकृताङ्कुरनाशक'मिति। तेनात्र सङ्क्षिप्तज्ञानेन महत्त्वाभिमाननाशोऽध्यायार्थ इतिसिद्ध्यति। नन्वस्मिन् प्रकरणे भक्त्या ब्रह्मभावरूपमुक्तौ वक्तव्यायां ज्ञानं किमित्युपदिश्यत आहुः-सर्वत्रेत्यादि ॥३२॥३६॥ ज्ञाने भक्त्यर्थत्वेन मुख्यभक्तेरेव प्रकरणित्वं प्रकरणसमाप्तौ व्युत्पादयिष्यामः । तदिच्छामिति । 'वातरशना ये ऋषय' इतिवाक्यसूचितां ब्रह्माख्यधामयानेच्छां पुरस्कृत्य ज्ञानस्य भक्त्यर्थतायाः ('परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्' इति चतुर्दशाध्यायेन ज्ञानं निरूप्य पञ्चदशेऽध्याये स्वस्मिन्पुरुषोत्तमत्वज्ञानपूर्वकभजनमुपसंहृतम् । 'यो मामेवमसम्मूढो जानाति

तथाऽपि सेवको मुख्यः स्वाधिकारं न दृष्टवान् ॥३७॥
अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः।
इति निश्चित्याऽधिकारे यदुक्तं तद्धि पृच्छति ॥३८॥
ततस्तु भगवान् प्राह स्वतः सर्वं विचिन्त्य ताम्।
अन्वयव्यतिरेकाभ्यां तदा प्रोक्तं फलिष्यति ॥३९॥
अन्वयादिविवक्षायामशक्तिश्चेत्तदोच्यते।
गुरुशिष्यौ सदा तुल्यौ तदा ज्ञानं फलिष्यति ॥४०॥
इदानीं यदुतुल्योऽयं गुरुस्तेन जडो मतः।
पञ्चविंशतितत्त्वानामध्यासविनिवृत्तये ॥४१॥
तावन्तो गुरवः प्रोक्ता येनाऽवस्था दृढा भवेत्।
वैराग्यं समता चैव सर्वैरेव फलिष्यति ॥४२॥
त्रिभिर्जडकथा प्रोक्ता कायवाङ्मनसां यथा।
दोषा नष्टा भविष्यन्ति तथावस्थात्रयस्य च ॥४३॥

पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारते'त्यनेन) गीतायामुक्तत्वात्तदर्थं ज्ञानमुपदिष्टम्। अधिकारविचारेण त्वग्रे भक्तिरेवोपदेष्टव्येत्यर्थः। नन्वधिकार उत्कृष्यमाणे कुतो ज्ञानेच्छेत्यत आहुः-तथापीत्यादि। न दृष्टवानिति नानुसंहितवान्। तथा चाधिकाराननुसन्धानादिच्छेत्यर्थः। अननुसन्धानं कुत इत्यत आहुः-अयोग्येत्यादि। तथा च भगवान्भजतां मुकुन्द' इतिवाक्येन मुख्यभक्तेरदेयत्वेन तद्दित्सासन्देहादधिकाराननुसन्धानम्। अतस्तत्र यद्दातुं युक्तं हि निश्चयेन तज्ज्ञानं पृच्छतीत्यर्थः ॥३७॥३८॥ तर्हि भगवान् किमित्यधिकारमनुसृत्य नोक्तवानित्याकाङ्क्षायामधिकारमनुसृत्यैवोक्तवानित्याहुः-तत इत्यादि। तदेति। अनुमानैरन्वयव्यतिरेकाभ्यां ज्ञायमाने मयि प्रोक्तं फलिष्यति तन्मदुक्तं ज्ञानं त्वदधिकारानुसारेण भक्तिं ब्रह्म वा प्रापयिष्यतीतिभावः। तर्ह्यवधूतसम्वादं कुत उक्तवानित्यत आहुः-अन्वयादीत्यादि। इदानीमिति अधिकाराननुसन्धानदशायाम्।

अतः परमवधूतप्रकरणमध्यायात्मकमिति[1] तदनुसारेण विचारयन्ति पञ्चेत्यादि। अवस्थेति जडावस्था। अत्र 'पञ्चविंशः स्वात्मोपशिक्षिताभि'त्यनेनोक्तो देहो ज्ञेयः। तस्य च तत्त्वत्वं जीवाधिष्ठितत्वेन ज्ञेयम्। त्रिभिः कथने बीजमाहुः-त्रिभिरित्यादि। अवस्थात्रयस्येति जाग्रदादिबुद्ध्यवस्थात्रयस्य। एवमध्यायत्रय-

१ सप्तमादित्रयाध्यायात्मकमित्यर्थः।

उभयत्र ततो युक्तिं वक्ष्यति स्नेहभावतः ।
ततोऽपि भगवान् प्रीतः पुष्टिं वक्ष्यति युक्तितः ॥४४॥
एवं षड्भिरिहाध्यायैरेकं ज्ञानं निरूप्यते ।
मर्यादापुष्टिभेदेन नाऽधिकारस्तदा यदि ॥४५॥
तदा तत्सिद्धये चैव प्रक्रियान्तरसङ्कथा ।
एवं सर्वत्र विज्ञेयं ब्रह्मा हंसो द्वितीयके ॥४७॥
कपोतान्ताः शरीरस्य प्रकृत्यष्टनिवृत्तये ।
मनसश्चन्द्रमाः प्रोक्तो बुद्धेश्चापि तथा रविः ॥४७॥
अहङ्कारनिवृत्त्यर्थं कपोतो विनिरूपितः ।
गुणत्रयनिवृत्त्यर्थं द्वितीये नवधोच्यते ॥४८॥
कामस्येन्द्रियवर्गस्य तथाऽऽशाया निवृत्तये ।
कर्ममार्गे तथाकर्मभावात्कर्म विशिष्यते ॥४९॥

प्रयोजनमुक्तम् । तेनैतैर्वैराग्यसमते एव, न तु तत्त्वनाशः, तत्त्वनाशस्तु भगवदुक्तत्वेनैव रूपेणेति बोधनायाग्रिमाध्यायत्रयप्रयोजनमाहुः—उभयत्रेत्यादि । उभयत्रेति अध्यायद्वये । प्रीत इति उत्कृष्टाधिकारं प्राप्यापि तदनभिमन्य दीनभावावलम्बनेन ज्ञानप्रश्नात्प्रीतः । पुष्टिमिति स्वरूपप्रापकं स्वरूपविषयकं ब्रह्मवादरूपम् । तर्ह्येतावतैवोत्तरसिद्धेरग्रिमग्रन्थस्य किं प्रयोजनमत आहुः—नाधिकार इत्यादिना । तदेति तादृशः । तदा तत्सिद्धये इति तादृशे न्यूनाधिकारे तादृशाधिकारसिद्ध्यर्थं 'ब्रह्मा हंसो द्वितीयके' इति न्यूनेऽधिकारे ब्रह्मा प्रश्नकृत् हंस उत्तरवक्तेत्यर्थः । एवमग्रिमकथाप्रयोजनमुक्त्वा द्वितीयाध्यायार्थं विशेषेण विचारयन्ति कपोतान्ता इत्यादि । तेनेह पृथिव्यादयः पार्थिवाद्यध्यासनिवृत्त्यर्था इत्यर्थात् सिद्धम् ॥४७½॥

(अ. ८) अग्रिमं विचारयन्ति-गुणत्रयेत्यादि । त्रिवृतोऽहङ्कारस्य निवृत्त्यर्थमिति भावः ॥४८॥ तत्र प्रकारमाहुः—कामस्येत्यादि । अत्र कामनिवृत्त्यर्थं पतङ्गः । इन्द्रियवर्गनिवृत्त्यर्थमजगरसिन्धुप्रभृतयः । आशानिवृत्त्यर्थं पिङ्गला । नन्वत्राजगरेण कर्मनिवारणे किं बीजमत आहुः—कर्ममार्ग इत्यादि । कर्मभावादिति । साधनत्वेन कर्मण एव विद्यमानत्वात् । तथाऽकर्मेत्यत्राकर्मेतिपदच्छेदः । तथा

ज्ञानमार्गे तथा कर्म क्रियातोऽपि विशिष्यते।
गीतया न विरोधोऽत्र साध्यावस्था तु सा मता ॥५०॥
सिद्धावस्था त्विह प्रोक्ता परीक्षार्थं तु भोजने।
सोऽपि चेत्तुल्यभावः स्यादन्तरेण ततो गुणः ॥५१॥
अतः समुद्रं प्रोवाच तस्य चन्द्रेण वर्धनम्।
दृष्ट्वा तद्विनिवृत्त्यर्थं स्त्रियं प्रोवाच तादृशीम् ॥५२॥
ततो निवृत्तोऽप्यशनाद्दशमायाति दुर्मतिः।
ततस्तद्विनिवृत्त्यर्थं मधुकारादिरूपणम् ॥५३॥
ततो भिक्षार्थगमने स्त्रियं बाधकमाह हि।
तया साऽपि परित्याज्या सर्वनाशोऽन्यथा भवेत् ॥५४॥
पौनरुक्त्यं ततो नास्ति प्रसङ्गादपि वारिता।
सर्वस्य मूलं जिह्वेति ततः सा विनिरूपिता ॥५५॥
ततोऽप्याऽऽशा तु महती राजसोऽयं तु मध्यमः।
सात्त्विकस्याऽपि सद्बुद्धेर्विद्यादेः सङ्ग्रहो यदि ॥५६॥
तदाऽपि सर्वनाशः स्यात्कुररस्तन्निरूपितः।

चापकृष्टत्वमेव बीजमित्यर्थः। नन्वेवं सति 'ज्यायसी चे'दिति गीतायामर्जुनप्रश्ने भगवता 'संन्यासः कर्मयोगश्चे'त्यादिना कर्मयोगस्य विशिष्टत्वं यदुक्तं तस्य विरोध इत्यत आहुः–गीतयेत्यादि। ननु सिद्धावस्थाया अजगरेणैवोक्तत्वात्सिन्धुनिरूपणस्य किं प्रयोजनमित्यत आहुः–परीक्षार्थमित्यादि। भोजने इति। केनचित्कारिते इतिशेषः। सोऽपीति भुक्तवानपि। गुण इतिसिद्धावस्थोत्कर्षः। तदग्रे पतङ्गनिरूपणप्रयोजनमाहुः तस्य चन्द्रेणेत्यादि। मधुकारादीत्यादिपदेन मीनः। ननु वारद्वयं स्त्रिया बाधकत्वं किमित्युच्यत इत्यत आहुः–ततो भिक्षेत्यादि। अयं त्विति। एतदध्यायोक्ताधिकारी तु ॥४९॥५५॥ एवं सार्द्धाष्टभिः संम्वादछितोयाध्यायो विचारितः।

(अ. ९) तृतीयं विचारयन्ति–सात्त्विकस्येत्यादि। अत्र विद्यादिसङ्ग्रहनिवृत्तिबोधनाच्छन्दतन्मात्रनाशोऽध्यायार्थः प्रतिभाति। तदिति तस्मात्।

१ अत्र "प्रपाद" इतिपाठ प्रतिभाति। सम्वादपाठे [illegible] अवधूतसम्वादरूप इत्यर्थः।

तत्सिद्धये गुरुर्बालस्तथाऽपीष्टं न सिद्धयति ॥५७॥
ततस्त्वटनमेकस्य मनः कृष्णे निवेश्य च ।
अपेक्षितानां सर्वेषामन्यथा सिद्धिरुच्यते ॥५८॥
सर्वाभावे हरिः सर्वं सर्वकर्त्ता प्रदास्यति ।
वस्त्वन्तरत्वे जीवस्य ब्रह्मभावोऽपि साध्यते ॥५९॥
विवेकसहितो देहः सर्वत्रैव च साधकः ।
युक्तिस्तु द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥६०॥
बाह्याः सर्वेऽत्र लोका हि जीव आन्तर उच्यते ।
बाह्ये प्राह क्वचिद् ग्राह्यान्नोऽन्यथा शक्यता भवेत् ॥६१॥
अतः साधुरिहोद्दिष्टः स्वयं सङ्ग्यथवा भवेत् ।
कदाचित्ते भक्तिमार्गं वदेयुरिति तां जगौ ॥६२॥
मार्गद्वयस्य श्रवणात्सन्देहो जायते ध्रुवम् ।

कुमारीशरकृतोस्तात्पर्यमाहुः–ततस्त्वित्यादिपादद्वयेन। सर्पोर्णनाभिपेशस्कृतां त्रिभिरर्द्धैराहुः–अपेक्षितानामित्यादिभिः। स्वात्मोपशिक्षितामित्यादेराहुः· विवेकेत्यर्द्धेन ॥५६॥५८॥ एवं चतुर्भिस्तृतीयो विचारितः।

( अ. १०-११-१२ ) अतः परं पौष्टिकत्रयीं विचारयन्तो द्वाभ्यां युक्तिकथने हेतुमाहुः–युक्तिस्त्वित्यादि। तथा च लोकजीवयोर्हेयत्वे युक्तिर्यथायथं द्वाभ्यामुच्यते। तत्र लोकानां संस्पर्शजभोगप्रधानत्वात्तद्धेयबोधनेन स्पर्शतन्मात्रनाशस्तदर्थः। एवं बद्धजीवहेयत्वबोधनेन रूपतन्मात्रनाशोऽर्थः। लिङ्गे रूपवैशिष्ट्याल्लिङ्गत्याजनस्यात्राभिप्रेतत्वादिति। 'अन्तरायैरविहत' (अ. १० श्लो० २२) इत्यादेस्तात्पर्यमाहुः प्राहेत्यादि। क्वचिदिति पुरुषविशेषे। अशक्यतेति त्यागाशक्यता। एवं पूर्वो (दशमः) विमृष्टः। द्वितीयं (एकादशं) विमृशन्ति अत इत्यादि। अतस्त्यागस्यावश्यकत्वात्साधुर्वक्ष्यमाणविध इह युक्तिप्रकरणे उद्दिष्टो बोधनार्थमुक्तः। अन्यथा ज्ञानं स्थिरं न स्यादिति। साधुमाहुः स्वयमित्यादि, सङ्गीति भगवत्सङ्गी। एकादशे· सङ्गी द्वादशे स्वयमिति विभागः। नन्वत्र भक्तिं किमित्युक्तवानित्यत आहुः–कदाचिदित्यादि। भगवदिच्छायां सत्यां ते भगवत्सङ्गिनो भक्तिमार्गं वदेयुरिति हेतोस्तां गौणमुख्यभेदेन द्विविधां भक्तिं जगौ तदुक्तविश्वासार्थमविकारमनुसृत्योपदिदेशेत्यर्थः ॥५९॥६१॥

नन्वेवं गुह्यतमगुगोप्यश्रवणेऽपि कथं सन्देह इत्यत· आहुः–मार्गेत्यादि।

१ सर्वत्र। २ ना।

सन्देहविनिवृत्तिर्हि वचनान्नैव जायते ॥६३॥
अतो यथा न जायेत तत्र युक्तिर्निरूपिता।
मूलमध्यावसानैश्च तत्स्वरूपनिरूपणम् ॥६४॥
तत्स्वरूपपरिज्ञाने सत्त्वादिविनिरूपणम्।
अन्तःकरणधर्मादेरेवं दोषा निवारिताः ॥६५॥

उपक्रमे ज्ञानस्य सुगोप्यत्वेन भक्तेश्च श्रवणेन तुल्यत्वानुसन्धानात्सन्देहः। किञ्च, जायते ध्रुवम्। तत्र त्यागार्थं दृश्यमानस्य मायिकत्वं विपर्ययभावाय विश्वस्य स्वात्मकत्वं चोक्तम्, अत्र तु बाह्यः सत्सङ्ग आन्तरभावार्थं सर्वात्मभावेन शरणगमनं चोक्तमत उभयत्र साधनयोर्विरोधाभिश्रयो न जायत इत्यर्थः। उत्तरप्रकारतात्पर्यमाहुः-- सन्देहेत्यादि। वचनादिति युक्तिरहितादाज्ञारूपाद्वाक्यात्। तत्रेति तदर्थम्। युक्तिरिति 'अयं हि जीव' इति सार्द्धश्लोकोक्ता। एतया एकस्य शक्तिविश्लेषाज्ज्ञानात्वेऽवगते तस्य मूलैक्याबाधकत्वाज्जिज्ञासया सुखेनैव नानात्वभ्रमापोह इति। द्वितीयं साधनमाहुः-मूलेत्यादि। मूलं स्वयं 'मे व्यक्तिरि'तिकथनात्। मध्यं वेदवाणीप्रभृति। अवसानं त्रिप्लिष्टशक्तिसावस्था। इदं भगवदात्मके विश्वे 'य एष' इत्यादिनोक्ते द्वितीये 'मायामये तु प्रकृतिपुरुषौ मूलं द्वे अस्य बीजे' इतिकथनात् मध्यं 'शतमूल' इत्यादिनोक्तम्। अवसानं मायामयत्वम्। एवं मूलमध्यावसानैस्तयोः पूर्वमुपक्रान्तयोर्विश्वयोः स्वरूपनिरूपणं च सन्देहनिवृत्त्यर्थमित्यर्थः। अनेनोत्तरग्रन्थेन श्रीमदुद्धवस्य ज्ञानमार्गं एव सन्देहो न भक्तिमार्ग इति तदधिकारोत्कर्षः सिद्धः। एतदभिसन्धायैव भगवता परमगुह्यरूपा सुगोप्या चेति द्विविधा भक्ति'राज्ञयैवमि'-त्यादिना द्विविधाः सद्भिः सत्तमत्वेन भक्ततमत्वेन वोपदिष्टाः। अन्यथा ज्ञानानुकल्परूपामुपासनारोपभूतां भक्तिं 'यद्यनीशो धारयितुम्' इत्यादिभिश्चतुर्भिरुक्त्वा ततः 'कृपालुरकृतद्रोह' इत्यादित्रिभिः सार्धं चोक्त्वा तेन ज्ञानस्य तदनुकल्पस्य तत्साधकस्य च स्वरूपे सपरिकरे बोधिते, उपक्रान्तस्योत्तरस्य च सिद्धत्वान्न वदेत् प्रयोजनाभावात्। 'तस्मात् सत्तम'मारभ्य 'शरणगमनं'पर्यन्त उपदेशस्तदधिकारानुसारेणेति निश्चयः। तेन 'सर्वत्र सुलभत्वाये'त्यारभ्य 'पृच्छती'त्यन्तग्रन्थे ज्ञानस्य भक्त्यर्थत्वं यदुक्तं तन्निर्विवादम्। अत्र समाप्तौ वदन्तीति कथनाद्रसतन्मात्रनाशस्तत्र प्रतिभाति ॥६२॥६३॥ एवमध्यायत्रयार्थमुक्त्वा सप्तमादिषडध्यायी विचारिता॥

(अ. १३) अतः परं त्रयोदशारम्भेऽप्येतस्यैव शेष इत्याहुस्तत्स्वरूपेत्यादि। सप्तम्यत्र तादर्थ्ये। मायिकप्रपञ्चस्वरूपपरिज्ञानार्थमित्यर्थः। तेन सिद्धमाहुः अन्तःकरण-

तदात्मकत्वाद्दोषो हि न पूर्वैर्विनिवार्यते ।
अतो गुरुरिहान्यो हि वक्तव्यः पूर्वतो महान् ॥६६॥
तदर्थं प्रश्नकर्तारस्तादृशा सनकादयः ।
हंसो हि सहजं नीरं त्यक्त्वा गृह्णाति तत्पयः ॥६७॥
निर्णयस्तत्र हंसेन कृतः सर्वत्र सम्मतः ।
उभयस्य परित्यागः स तु कृष्णो यदा भवेत् ॥६८॥
परमश्रद्धया भक्त्या तदावेशात्प्रवेशतः ।
चतुर्धा तद्धि भवति सर्वदोषनिवृत्तितः ॥६९॥

**धर्मादे**रित्यादि । अन्तःकरणे धर्माः सङ्कल्पादयः, आदिपदेन बाह्यं कर्म. तस्य दोषा बन्धकत्वरूपाः । एवं तत्त्वप्रकारयोर्बोधनेन निवारिता इत्यर्थः । तदग्रे हंसगीताकथनं कुत इत्यत आहु:-**तदात्मकत्वा**दित्यादि । अन्तःकरणस्य बोधनप्रकारस्य च सात्विकत्वेन गुणात्मकत्वात् । पूर्वैरुक्तैः साधनैर्दोषो भेदबुद्धिरूपो न निवार्यते । अतस्तथेत्यतः कथनमित्यर्थः । **तादृशा** इति अवतारत्वादवधूततुल्याः तथा च तद्गुरोर्हंसस्य पूर्वस्मादाधिक्यमर्थसिद्धमित्यर्थः । आधिक्यज्ञानप्रकारमाहुः **हंसो** हीत्यादि । विरुद्धयोर्मिश्रितयोरनपेक्षितादपेक्षितोद्धरणं बोधनप्रकारे विशेषः । दत्तस्य देहे पारक्यबुद्धिरेव । 'देहो गुरुरि'तिश्लोके तथासिद्धत्वात् । अत्र तु देहानुसन्धानाभावः । 'देहं च नश्वरमि'त्यत्र तथा बोधनात् । अतोऽपि विशेष इति प्रकार इत्यर्थः । हंसोत्कर्षमुक्त्वा तदुक्तानामुत्कर्षमाहुः-**निर्णय** इत्यादि । सर्वत्रेति भक्तौ ज्ञानादौ च । निर्णयस्वरूपमाहुः-**उभयस्ये**त्यादि । उभयस्येति गुणत्रयस्य स्वचित्तस्य च । स इति जीवः । कृष्णत्वभवनोपायमाहुः-**परमे**त्यादि । एतैर्हेतुभिश्चतुर्धा दोषनिवृत्तितो हि निश्चयेन तत्कृष्णत्वं भवति तदोभयपरित्यागो भवतीत्यर्थः । अत्रेदं बोध्यम् । 'परमा श्रद्धा फलसुखमङ्ग'मिति सर्वत्रैव प्रसिद्धम् । भक्तिश्च गुणातीतत्वोत्तरं ब्रह्मभावसाधिकेति गीतायां 'मां च योऽव्यभिचारेणे'त्यत्र सिद्धम् । तदत्र 'इति मे छिन्नसन्देहा' इत्यादिद्वयेनोक्तम् । प्रवेशश्च भक्तेः परत्वे तदप्यत्र 'परये'तिभक्तिविशेषणेन सिद्धम् । तत्र प्रवेशः परया भक्त्या तादृशी भक्तिश्च ब्रह्मभावोत्तरम्, स च ज्ञानस्य परमकाष्ठापन्नत्वे ज्ञानस्य तादृशत्वं च 'बुद्ध्या विशुद्धया युक्त' इत्युक्तप्रणाड्या शान्तरे इति तदर्थं पूर्वं बुद्धिशोधनमावश्यकम् । तत्रोपायश्च गुणचित्तयोरन्योन्यसंत्यागः । स च तदैव

निश्चयार्थोऽयमेवेति वक्तुं श्रेयोनिरूपणम्।
अन्यच्चेच्छ्रेय एतादृगुपायो वा भवेत्तदा ॥७०॥
न कृष्णत्वं फलं पूर्णं नाऽपि त्यागस्तथोभयोः।
अतो निर्णयसिद्ध्यर्थं प्रमाणस्योच्यते गतिः ॥७१॥
प्रमेयबलमासाद्य युक्तिश्चाप्यत्र रूप्यते।

भवति यदा बुद्धौ भगवदावेशेन नात्मनिवृत्तिः। सा च च सर्वं भगवानिति परोक्षे ज्ञाने। तदत्र युक्तिभिः साधनीयमिति। तदर्थं 'मनसा वचसा दृष्ट्ये'त्यनेन सर्वस्य स्वाभिन्नत्वमुपदिश्य तत्राहं पदेन किं जीवात्मा परामृश्यत उत ब्रह्मेति सन्देहनिवृत्त्यर्थमग्रिमे श्लोकद्वये जीवस्य स्वात्मकत्वकथनेन पूर्वोक्ताहंपदार्थो ब्रह्मैवेति बोधयित्वा गुणचित्तयोस्त्यागार्थं बुद्धेर्जाग्रदादिवृत्तित्रयं जीवस्य तद्वैलक्षण्यं च वृत्तित्रयसाक्षित्वेन बोधयित्वा त्यागोपायं 'त्यागः सगुणत्वेऽसा'मिति त्यागस्वरूपं चोक्त्वा 'यावन्नानार्थधीरि'ति द्वाभ्यां भेदबुद्धेर्मिथ्यात्वं तद्धतोऽसत्वं चोक्त्वा जीवस्य वृत्तित्रयवैलक्षण्यज्ञानाय 'यो जागर' इत्यनेन स्मृत्यन्वयादिति युक्त्या साक्षित्वं निर्णीयाग्रिमेण शिष्टसंशयलेशनिःशेषनिवृत्त्यर्थं स्वभजनं कार्यमिति बोधयित्वा 'ईक्षेत विभ्रम'मित्यनेन गुणसर्गादिमिथ्यात्वे युक्तीराह। एवं सत्यत्र चित्तप्रभवगुणानामुपक्रान्तत्वादग्रे चोपदेशस्वरूपस्य सांख्ययोगगुह्यत्वेनोक्तत्वात्तत्तन्मुनिमनःकल्पितभेदवादसिद्धत्रिगुणसर्गस्यैव नश्वरत्वादिधर्मकस्यैव मिथ्यात्वं तद्बीजयोः स्वात्मभिन्नत्वादिति सिद्ध्यति। नत्वभेदवादसिद्धस्यैच्छिकस्य। एवं च 'मनसा वचसे'त्यनेन यदुक्तं तदाञ्जस्येन सिद्ध्यति। अत एव 'तत्राञ्जसे'तिपदं 'ईक्षेते'त्यत्र चेदमितिपदम्। एतमेव सप्तमे द्वादशे च बोध्यमित्येतदर्थमेव हंसगीताया उपक्षिप्तत्वात्। अतो गीतायामप्येतादृशमेव ज्ञानं भक्तिहेतुत्वेनाभिप्रेतं श्रुतौ ब्रह्मसूत्रेषु च, तद्भाष्यविद्वन्मण्डनादिभ्योऽवगन्तव्यम्। अत एवं परोक्षज्ञाने युक्तिभिर्जाते ततो भजनेन निःशेषसंशयनिवृत्तावावेश इति बोधनाय दृष्टिं ततः प्रतीत्यादित्रयेण विद्यमानस्यापि भ्रमाजनकत्वमभेदनिष्ठया सिद्धस्य देहाननुसन्धानं देहस्य कर्मवशेन स्थितिं चोवाच। एवं सर्वसाधनसम्पत्तौ संशयच्छेद इति छिन्नसंशया इत्यनेनावेशस्यापि लाभ इति पूर्वोक्तमत्रोक्तं चाविवादम् ॥६८॥६८॥ एवं त्रयोदशाध्यायो विचारितः।

एतस्य निर्णयस्य श्रुत्यभिप्रेतत्वज्ञापनायाग्रिमाध्याय इत्याशयेनाहुः—**निश्चये**त्यादिद्वयम्। **उपायो** वेति। अन्य इति शेषः। **नापि त्याग** इति। पूर्णं साधनमिति शेषः। **उभयो**रिति। गुणचेतसोः। एवं द्वाभ्यां 'नियमान् यमा'-नित्यन्तस्यार्थ उक्तः। अतः परमुक्तार्थपोषार्थम् 'आद्यन्तवन्त 'इत्यारभ्य मद्भिनाऽन्य'-

१ युक्ति।

सेवकत्वे हीनभावदोषोऽपि विनिवार्यते ॥७२॥
श्रद्धा त्वेतावता सिद्धा ततो भक्तिर्निरूप्यते।
स्वरूपतः साधनतः फलतश्चाऽपि रूपिता ॥७३॥
तस्याश्च साधनं ध्यानं ततस्तदपि रूपितम्।
तत्र बाधकहानाय ध्यानभेदा निरूपिताः ॥७४॥*
आवेशार्थं प्रवेशार्थं कृष्णात्सर्वं भवेदिति।
एतावता द्वितीयस्तु खण्डः पूर्णो निरूपितः ॥७५॥
ज्ञानेनाऽपि प्रवेशो हि भजेदिति पुनर्हरिम्।

दित्यन्तग्रन्थ इति तस्य तात्पर्यमाहुः-प्रमेयेत्यादि। प्रमेयबलम् स्वस्वरूपबलम्। युक्तिरिति। फलान्तरस्याद्यन्तवत्त्वादिरूपा स्वार्पितात्मनोन्यानिच्छारूपा च। यदि पूर्णं साधनात्मकं श्रेयोऽन्यत्स्यात्, तदा तत्फलरूपा लोका आद्यन्तवत्त्वादिधर्माणो न स्युः। यदि पूर्णं फलमन्यत् स्यात् मय्यर्पिताप्यन्यदिच्छेदिति। यतो नैवमतो नेवमिति। तथा च श्रुतौ कर्मफलानां तथात्वकथनादात्मलाभस्य सर्वत उत्कर्षकथनाद्वाक्यान्वयाधिकरणविचारितरीत्या भगवत एवात्मत्वात्तस्यैव फले श्रुतेस्तात्पर्यमित्यर्थः। नन्वस्त्वेवं फलांशे तथापि भक्तौ नानात्वस्य विद्यमानत्वादस्वातन्त्र्यादीश्वराद्भयं तु स्यादेवेति न साधनोत्कर्ष इत्यत आहुः-सेवकत्व इत्यादि। एतेन 'न तथा मे प्रियतम' इत्यादिश्लोकत्रयतात्पर्यमुक्तम्, तथा चास्वातन्त्र्येऽप्यत्र न भयरूपो दोष इत्यर्थः। एतावता ग्रन्थेन यत्सिद्धं तदाहुः-श्रद्धेत्यादि। सिद्धेति पूर्वाध्याये सङ्क्षेपेणोक्ता निर्द्धारिता। 'बाध्यमानोऽपीत्या'देस्तात्पर्यमाहुः-ततो भक्तिरित्यादि। 'बाध्यमान' इत्यारभ्य 'भुवनं पुनाती'त्यन्तेन स्वरूपतः, 'यथाग्निने'ति द्वाभ्यां साधनतः, 'विषयानि'त्यादिभिः फलतः। निवारिता इति 'मयैतद्ध्यानमङ्गलम्' इतिकथनान्निवारिताः। ध्यानस्य प्रयोजनमाहुः-आवेशार्थं प्रवेशार्थमिति। चित्तस्य भगवत्यावेशार्थं भगवतश्चित्ते प्रवेशार्थमित्यर्थः। सर्वं भवेदिति द्रव्यज्ञानक्रियाभ्रमनिवृत्तिर्भवेत्। अत्र द्रव्ये'स्वयं पारक्य'मिति ज्ञाने विषयो मायिक इति भगवद्भिन्न इति क्रियायां भगवद्भजनादन्यत्कर्त्तव्यमिति भ्रमो बोद्धव्यः सप्तमस्कन्धीयभावाद्वैतवाक्यात्। एवं सर्वभवनोक्त्या यत्सिद्ध्यति तदाहुः-एतावतेत्यादि। एतावता ग्रन्थेन भ्रमनिवृत्त्या कृष्णत्वे द्वितीयः खण्डः सुदृढस्नेहरूपो भक्तेर्विशेषांशः पूर्णो निरूपित इति सिद्ध्यतीत्यर्थः। तत्र प्रकारं स्फुटीकुर्वन्ति ज्ञानेनापि प्रवेशो हि भजेदिति। हिर्हेतौ। तथा चात्र क्रियाभ्रमनिवारणोक्त्या भक्त्यर्थता निश्चीयत इति भावः। एतेन पञ्चदशाध्यायस्याप्यर्थ उक्तः।

* अत्रत्यं निबन्धकठिनांशविवेचनं स्कन्धान्ते ५५८ तमे पृष्ठेनुसन्धेयम्।

यावानित्यादि विज्ञातुं विभूतिं पृच्छते पुनः ॥७६॥
ततः स्वात्मानमेवाऽह गुरुमर्जुनसारथिम्।
विभूतिः सकला प्रोक्ता भक्त्यैवाऽहं भवेदिति ॥७७॥
तदर्थं धर्मसम्प्रश्नः शुद्धो भक्तो भवेदिति।

तत्रापि समाप्तौ 'सर्वासामपि सिद्धीनामि'त्यादिद्वयेन सर्वप्रभुत्वसर्वात्मलयोः कथनात्। तेन सिद्धिपूत्कर्षभ्रमवारणायैवान्तरायतया तदुपस्थितिकथनमिति सोऽप्यध्यायो भक्तिबोधनस्यैव शेष इति। एवं चतुर्दशे मनोनाशः। पञ्चदश आकाशस्य वायोर्वेति मतिभाति।

(अ. १६) षोडशे 'येष्विं'त्यनेनोक्तः प्रकारप्रश्नो विभूतिप्रश्नश्च भक्तानुपयुक्त इवेति तत्प्रयोजनमाहुः-पुनरित्यादि। पृच्छत इति चतुर्थ्यन्तम्। अयमर्थः। गीतायां 'भक्त्या मामभिजानाती'त्यत्र यावत्त्वादिरूपेण ज्ञानं प्रवेशहेतुभूतमुक्तं तदेवात्र 'ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृश' इत्यनेन भजनात्पूर्वकालिकत्वेन परामृष्टम्। एतावान् परं विशेषः। तत्र यावत्त्वादिरूपेणाऽभिज्ञानं भक्त्योक्तम्। अत्र तु तेन रूपेण यतः कुतश्चिज्ज्ञानमभिज्ञात्वाभावादनावश्यकमितिबोधितम्। तेन तादृशज्ञानस्याभिज्ञात्वे एव प्रवेशं प्रति व्यापारता नेतरथेतिफलति। तथा -तत्त्वत इत्यस्य तत्प्रकारयैवेत्त्वत इति चार्थः फलति,तथाभिज्ञानं परया भक्त्या ब्रह्मभावे इति। ततः पूर्वं विवक्षितज्ञानं दुर्घटमतो यादृशमभिज्ञातुं 'येषु येषु च भावेषु यथा त्वां परमर्षय' इत्यनेन प्रकारविशिष्टस्वरूपं हरिं पुनः पृच्छते 'स्वयमेवात्मानमिति' वाक्येनान्यस्य तत्स्वरूपाभिज्ञत्वाभावात्। यावत्त्वयत्त्वे च विज्ञातुं विभूतिं पृच्छते उद्धवाय ततस्तज्ज्ञापनाय स्वात्मानमेवाह 'अहमात्मोद्धवामीषा'मितिश्लोकेनाह। 'गुरुमर्जुनसारथिमेवमेतदहं पृष्ट'इत्यादिना भक्तमियत्तयाह। यत्त्व ज्ञानाय सर्वेषामात्मत्वादिकं यादृशत्वज्ञानाय सर्वरूपत्वादिकं यावत्त्वज्ञानाय विभूतिं चाहेत्यर्थः ॥७०॥७६३॥ नन्वभिज्ञानाभावे केवलस्य ज्ञानस्यानावश्यकत्वात् किमर्थं सर्वविभूतिकथनमित्याकाङ्क्षायामाहुः-विभूतिरित्यादि। तथा च मुख्यभक्त्यर्थं भगवद्रूपताया विवक्षितत्वात्तस्याश्च विभूतिरूपत्वाभवनात्तन्मात्रतानिवृत्त्या भक्त्या भगवत्त्वाय तत्कथनमित्यर्थः। एवं चात्र विभूतिकथनोत्तरं 'मनोविकारा एवैते यथा वाचाभिधीयत'इतिवाक्ये येन लोकसिद्धेन प्रकारेण वाचाऽभिधीयते तेन प्रकारेण 'अपागादग्नेरग्नित्वमि'तिवन्मनोविकारा एव, न तु तद्रूपाः,किन्तु मद्विभूतिरूपा मदंशरूपा एवेत्यर्थाद्विभूतिज्ञाने यावत्त्वयत्त्वज्ञानं भवतीति बोध्यम् ॥७७॥ एवं षोडशाध्यायो विचारितः।

(अ १७-१८) सप्तदशाष्टादशावपि भक्तिशेषौ स्फुटावित्याहुः-तदर्थमित्येकेन। सप्तदशस्यारम्भे 'यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षण' इति

वर्णाश्रमवतां धर्मस्तदर्थं विनिरूपितः ॥७८॥
तथाऽपि ज्ञानमार्गस्य परिज्ञानमिहेच्छति ।
तदा भीष्मो गुरुः प्रोक्तो धर्मराजश्च पृच्छति ॥७९॥
तत्र सर्वपदार्थानां निर्णयः सर्वकर्मणाम् ।

'यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत्। स्वधर्मेणे'तिकथनाद्धर्मसम्प्रश्नो भक्त्यर्थम्, स्वधर्मस्य भक्त्युपयोगस्तु तद्धर्मस्य सप्तमस्कन्धे दुर्वासनानिवारकतायाः स्थापितत्वेन शुद्धिजनकत्वादिति। एतदुत्तरे समाप्तौ 'इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् । सर्वभूतेषु मद्भावो मद्भक्तिं विन्दतेऽचिरादि'तिकथनाच्च भक्त्यर्थमेव निरूपित इत्युभयाध्यायी भक्तेरेव शेषावित्यर्थः । अत्र साध्यरूपा भक्तिः प्रेमात्मिका, साधनरूपा तु श्रवणाद्यात्मिका 'नन्यभागि'त्यनेन सूचिता। अन्यथा साध्यसाधनभावलोपापत्तेः। स्वधर्मस्तु साधनभूताया एव भक्तेरङ्गभूतः। न च स एव भक्तिसाधनमिति शङ्क्यः, 'अनन्यभागि'तिविशेषणवैयर्थ्यापत्तेः। अतो भजेदनन्यभागित्युभयकथनादुक्त एवार्थः। अत एव 'धर्मः स्वनुष्ठितः पुंसा'मित्यादीनि वाक्यानि। एवं सप्तदशाष्टादशौ विचारितौ ॥

(अ. १९) ऊनविंशाध्यायं विचारयन्ति-तत्र वर्णाश्रमधर्मस्य भक्तिशेषत्वकथनोत्तरमूनविंशारम्भे 'यो विद्याश्रुतसम्पन्न' इत्यादिना ज्ञानिनस्तपस्तीर्थेत्यनेन ज्ञानं च प्रशस्य 'तस्माज्ज्ञानेन सहितमि'त्यनेन ज्ञानस्य भजनाङ्गत्वं पूर्वाध्यायोक्तधर्मस्येवोक्त्वा 'ज्ञानविज्ञाने'त्यनेन मुनीनां ज्ञानयज्ञेन संसिद्धिं चोक्त्वा ज्ञानिप्रशंसायां 'मायामात्रमिदं ज्ञात्वे'ति दृश्यमानस्य मायामात्रत्वं यदुक्तं तदुद्धवदेहेऽप्यस्तीतिबोधनाय 'त्वय्युद्धवाश्रयती'त्युक्तम् ।

तथा पूर्वाध्यायेऽपि 'नैतद्वस्तुतया पश्ये'दिति 'यदेतदात्मनि जग'दिति-द्वाभ्यां दृश्यमानस्यावस्तुत्वं स्वात्मनि विद्यमानस्य शरीरात्मकस्य जगतो मायात्वं च विचार्य पतितेनेत्युक्तम्, तच्छ्रुत्वात्र सन्देह उत्पन्नः किं जगतो मायिकत्वेन ज्ञानं भजनाङ्गमुत ब्रह्मात्मकत्वेनेति तेन पृच्छतीत्याहुः-तथापीत्यादि । इह भगवद्वाक्ये तथापि मायिकत्वेन प्रकारेणापि ज्ञानमार्गस्य परिज्ञानं भक्त्यङ्गत्वेन सन्देहनिवर्त्तकं सम्यग् ज्ञानमिच्छतीत्यर्थः। तदा भगवांस्तत्सन्देहनिरूपणार्थं सर्वर्षिसम्मतिं बोधयितुं स्वयमुत्तरमनुक्त्वा युधिष्ठिरभीष्मसम्वादमुखेनाहेत्याहुः तदेत्यादि ॥७८॥ ७९॥ सम्वादविषयमाहुः तत्रेत्यादि । तस्मिन् सम्वादे मोक्षधर्मेषु कथ्यमानेष्वेतन्नयमुक्तं तदनुवदति- भगवाञ्चैवे'त्यादिना। तत्र 'नवे'त्यादिकं ज्ञानस्वरूपलक्षणम् ।

तस्यायमर्थः। भूतेषु ब्रह्मादितृणस्तम्बान्तेषु नवैकादशपञ्चत्रीन, प्रकृतिपुरुष-

सत्यादीनां तथा रूपं ज्ञानार्थं विनिरूपितम् ॥८०॥

इदङ्कारपञ्चतन्मात्राणि नव, इन्द्रियाण्येकादश, भूतानि पञ्च, गुणास्त्रय एवमष्टाविंशति-सङ्ख्याकान् भावांस्तत्त्वानि येन ज्ञानेन वै निश्चयेनेक्षेत, अथैवमीक्षोत्तरमप्येष्वष्टाविंश-तिष्वेकं सदेवेतीक्षेत तज्ज्ञानं मम मतसम्बन्ध्येव निश्चितं भीष्मेण निर्णीतम्। तथा च सदित्याकारकं कैवल्यं येन भासते तज्ज्ञानमित्यर्थः। इदमेव गीतायां 'सर्वभूतेषु येनैक'मिति सात्त्विकज्ञानत्वेनोक्तम्। अत्रापि पञ्चविंशे 'कैवल्यं सात्त्विकं ज्ञानमि'ति वक्ष्यते। अथ (श्लोक० १५) 'एतदेव हि विज्ञान'मितिद्वाभ्यां विज्ञानस्वरूपं लक्षितम्। तत्रायमर्थः। एतद्वक्ष्यमाणं हि निश्चयेन विज्ञानं यद्यस्मादेकेन न तथा न कारणा-न्तरसमवधानं विना स्थित्युत्पत्त्यप्ययाः सम्भवन्त्यतो भावा ब्रह्मादितृणस्तम्बान्ता-स्त्रिगुणात्मकास्तेषां स्थित्यादीन् येन पश्येदेतदेव विज्ञानं निश्चितमित्यर्थः। द्वितीयमाहुः आदावित्यादि। यदेकं कारणं आदावन्ते चकारादवस्था विशेषेषु मध्ये च एकस्मात्त-ज्यात्कार्यात्सृज्यं कार्यान्तरं अनुलक्षीकृत्य इयात् गच्छेत् कार्यस्याद्यन्तमध्येषु यद-नुस्यूतं भवेत्तत्प्रतिसङ्क्रामे कार्यस्य प्रलये पुनर्यच्छिष्येत अलीनं तिष्ठेत्, तदेव सद्वस्तुभूतमन्यत्तु आगन्तुकमारोपितं चेति यज्ज्ञानं तदपि विज्ञानमिति भीष्मेण निश्चितमित्यर्थः। तथा च सर्वमष्टाविंशतितत्त्वात्मकमिति ज्ञानस्य युक्त्या त्रिगुणवैशिष्ट्यज्ञानं विज्ञानम्, केवलं सदिति ज्ञानस्यान्वयव्यतिरेकाभ्यां सर्वं सदिति ज्ञानं विज्ञानमिति फलति। उभयोर्मध्ये पूर्वस्य प्रयोजनमाह श्रुतिरित्यादि। एतच्चतुष्टयरूपेषु प्रमाणेष्वनवस्थानाच्च विद्यतेऽवस्थानं निश्चयो यस्येत्यनवस्थानस्तादृशाद्विकल्पात्स विचारको विरज्यते। तथा च विकल्पाद्विरक्तिः प्रयोजनमित्यर्थः। द्वितीयस्य प्रयोजनमाह- कर्मणामित्यादि। तथा च नश्वरत्वा-द्विरिञ्चिपर्यन्तममङ्गलदर्शनात्तत्र श्रद्धानिवृत्त्या मूलकारणे ब्रह्मणि श्रद्धाप्रयोजन-मित्यर्थः। एवमुभाभ्यां तत्र निश्चितं प्रयोजनमुक्तम्। अत्र सर्वत्र मोक्षधर्मवाक्येषु निश्चितो योऽर्थः स उक्तः। 'सद्भक्तियोगं च महद्भिमृग्य'मित्यस्योत्तरमाह-भक्ति-योग इत्यादि। पुरेति द्वादशाध्याये। परमिति अव्यभिचारित्वादेकादशाध्याया-दारभ्यैतावन्तमुक्तेभ्योऽन्येभ्यश्चोत्कृष्टम्। 'एतदग्रे 'यदात्मनी'ति त्रिभिश्चित्तादीनां लक्षणमुक्तम्। एवं ज्ञानमारभ्यैश्वर्यपर्यन्तानां स्वरूपस्य सर्वेषिसन्निधौ भीष्मेण निश्चितस्य कथनेन विकल्पस्य मायामयत्वज्ञानं तेभ्यो वैराग्यजननाय वैराग्यं गुण-वैतृष्ण्यपर्यन्तं यदा भवति तदा तस्य ब्रह्मभावानुगुणत्वात्परमभक्त्युपयोगित्वं न तु तु साक्षादिति बोधितम्।

तत उद्धवप्रश्नानुरोधेन यमादीनां यत्स्वरूपमुक्तं तदपि मुख्यविज्ञाना-ङ्गत्वेनेत्याहुः-सत्येत्यादि।

मार्गत्रयविरोधस्य परिहारस्तथोच्यते ।
अधिकारिविभेदेन मार्गभेदो निरूप्यते ॥८१॥
सर्वाशक्तौ का कथेति शङ्कां वारयितुं पुनः ।
शुद्धिप्रकरणं प्रोक्तं तथा शास्त्रविनिर्णयः ॥८२॥
अन्तःकरणवज्जीवप्रकृत्योरपि संशयः ।

अत्र सत्त्वादीति कथनमेतेषां सन्निपत्युपकारकत्वं बोधयति ॥८०॥ अतो द्विविधज्ञानस्य भक्त्यङ्गताप्रकारबोधनायोनविंश इति विचारितम्।

(अ.२०) विंशं विचारयन्ति । तत्र त्रिकल्पस्यावास्तवत्वे बोधिते पूर्वकाण्डवैयर्थ्येन वेदविरोधशङ्कोत्पद्येति तन्निवृत्त्यर्थं विंशोऽध्यायः, सोऽपि परम्परया भक्तिशेष इत्याशयेनाहुः-मार्गत्रयेत्यादि । तथा च पूर्वकाण्डे यो भेदो नानाप्रकारेणोक्तः स जघन्याधिकारिणां वैराग्यार्थमतस्तस्य न भेदे तात्पर्यम्, किन्तु वैराग्य इति न पूर्वकाण्डवैयर्थ्यं न वा पूर्वोत्तरकाण्डविरोध इति परम्परया भक्त्यर्थत्वात्तस्यापि भक्तिशेषत्वं निर्बाधमित्यर्थः ॥८१॥ एवं विंशो विचारितः ।

(अ. २१) एकविंशं विचारयन्ति । तत्रारम्भे 'य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् । क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति त' इत्युपक्रम्य 'स्वे स्वेऽधिकारे या निष्ठा सगुण' इत्यनेन भक्तानां भक्तेरधिकारे, ज्ञानिनां ज्ञानस्य, कर्मिणां कर्मणश्च या निष्ठा स गुणः, तदभावो मार्गान्तरनिष्ठा च दोष इत्युक्त्वा शुद्धिप्रकरणमुक्तं ततो वेदार्थनिर्णय उक्तस्तस्य तात्पर्यमाहुः-सर्वशक्तावित्यादि । तथा च यो भगवदुक्तमार्गोपायानां यथावत्साधनासमर्थोऽथ च तत्र श्रद्धावांस्तदर्थमनुकल्पो वक्तव्य इति जघन्याधिकारिणा शुद्धिप्रकरणोक्तरीत्या तत्तच्छुद्धिमवगत्य शनैःशनैः सङ्गस्त्यक्तव्य इत्येतत्त्रितयानुकल्पत्वेनोक्तं तेन वेदे गुणदोषकथनमनुकल्पबोधनार्थं न तु वस्तुभेदबोधनार्थमिति वेदार्थनिर्णयोऽप्युक्त इति सोऽध्यायोऽपि विप्रकृष्टपरम्परया भक्तेरेव शेष इत्यर्थः ॥एवमेकविंशो विचारितः ॥

(अ. २२) द्वाविंशं विचारयन्ति-तत्र पूर्वाध्यायसमाप्तौ भेदस्य मायामात्रत्वानुवादेनोत्तरकाण्डे भेदस्य निषेधाद्वेदानामभेद एव तात्पर्यमितिश्रुते ऊनविंशाध्यायोक्ता तत्त्वानामष्टाविंशतिसङ्ख्यापि मायिकयेव सिद्ध्यतीति सा कुतोऽङ्गीकृतेति ज्ञातुं कति तत्त्वानीति सङ्ख्याविषयकः प्रश्नस्तत्रापि भगवता मतान्तराणामेव यौक्तिकत्वमुक्तम्, न तु स्वमतस्येति भेद एव पर्यवसितो नाभेदस्तथा सति प्रकृतिपुरुषविवेकार्थं वैराग्यं न तु साक्षाद्भक्त्यर्थमित्यवगत्य पृच्छतीत्याशयेनाहुः-अन्तःकरणेत्यादि । यथा सनकादीनां 'गुणेष्वाविशते चेतो गुणाश्चेतसि चे'ति गुणचेतसोः स्वरूपभेदज्ञानेऽपि तदन्योन्यसंत्यागहेतुसन्देहस्तद्वदत्र जीवप्रकृत्योः (स्वरूपभेदज्ञानेऽपि) स्वरूपवैलक्षण्यज्ञानेऽप्यन्योन्यसंश्लेषाच्च भेदज्ञानमिति सन्देहः प्रकृतिपुरुषयोभावित्या-

उभयं हरिरेवेति तत्र चै निर्णयः कृतः ॥८३॥
मायया त्रिविधं भानं न प्रवृत्तिधियां भवेत्।
तदाऽपराधसम्बन्धादन्यदाऽपि न मुच्यते ॥८४॥
एतच्छङ्कापरित्यागो मनोदोषान्न च स्वतः।
तस्मान्मानसदण्डे हि नाऽपराधः कदाचन ॥८५॥
दण्डस्य च परिज्ञानं यथातिक्रमणं सहेत्।

दिभिरुक्त इत्यर्थः। उत्तरमन्यस्यार्थमाहुः--उभयमित्यादिसार्द्धाभ्याम्। एवं प्रश्ने कृते भगवान् संख्यायाः सार्थकत्वं वास्तवभेदस्य मायिकत्वं च समर्थयितुं 'प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभे'त्यादिना प्रकृतिपुरुषभेदस्य वाचारम्भणत्वाय वैकारिकत्वं तदर्थं स्वमायाया आध्यात्मिकादित्रिविधबुद्धिजनकत्वं चोक्त्वा दृष्टान्तेनोपाधितः परस्परसापेक्षतयैकस्यैवांशतस्त्रैविध्यमंशिनस्ततो भिन्नत्वं च बोधयित्वा 'आत्मा यदेषामपरोऽयमाद्यः स्वयानुभूत्याऽखिलसिद्धसिद्धि'रित्यर्द्धेनाकाशे स्थितस्य सूर्यस्येव प्रकृत्यादिभ्यो व्यतिरिक्तस्यात्मन आद्यत्वं स्वधर्मेणानुभवेन सर्वानुभावकत्वं चोक्त्वा, एवं त्वगादीत्यादिनेन्द्रियाणां त्रैविध्यं विकारस्य प्रधानजन्यत्वं पूर्वोक्तनानातत्त्वप्रकारवादस्यात्मस्वरूपाज्ञानजन्यत्वाद्व्यर्थस्यापि त्वलोकपदोक्तस्यात्मज्ञानमात्रपर्यवसितानां भगवतः सकाशात्परावृत्तबुद्धीनां बुद्धौ सर्वदा स्थित्या तस्य विवादस्यानिवृत्तिमाह। तेन प्रकृतिपुरुषौ न वस्तुतो भिन्नौ, किन्तु धर्मभेदेन वाचारब्धौ निवृत्त्यर्थकव्यवहारोपयोगिनौ। यथा पूर्वकाण्डोक्तो भेदो वस्तूनां निवृत्यर्थकव्यवहारोपयोगी तद्वदिति वस्तुत उभयं हरिरेवेति अपामादग्नेरभिन्नत्वमितिवन्निर्णयः कृतः। तेनोक्तरीत्या त्रिविधं मायया भगवद्विमुखानां भवतीत्यभेद एव तात्पर्यमित्यर्थः। ततः 'त्वत्तः पराञ्चत्तधिय' इत्यादिना तत्संसारप्रकारप्रश्ने 'मनः कर्ममय'मित्यादिना संसारानिवृत्तिं तेषामाह। तेन भगवद्विमुखे भेदबुद्ध्यनुवृत्त्याऽपराधसम्बन्धान्न मुच्यत इत्युक्तम्। ततः 'तस्मादुद्धव मा मुह्स्वे'त्यादिना तन्निवृत्तिप्रकारमाह। तेनैतादृशी शङ्का मनोदोषादेव जायत इति दुष्टे मनसि सा न निवर्त्तते तस्मान्मनोदण्डः कर्तव्य इत्युक्तमित्यर्थः। अत्रापि प्रापञ्चिकानां मायिकत्वं वैराग्यार्थमुच्यत इति प्रकरणादेव सिद्धम्। वैराग्यं च भक्त्यर्थमिति पूर्वमुक्तमग्रे च वक्तव्यम् ॥८२॥ ॥८५॥ एवं द्वाविंशो विचारितः ॥

(अ.२३) अतः परं भेदोऽपारमार्थिकोऽप्यागन्तुको वा आरोपितो वेति सन्देहोऽवशिष्यते सोऽग्रे चतुर्विंशे निवारणीयः। साम्प्रतं तु प्रश्नानुरोधेन त्रयोविंशे मनोदण्डस्य दण्डितमनसश्च परिज्ञानप्रकारमेव भगवानुक्तवानित्याहुः--दण्डस्य चेत्यादि

तस्य साधनविज्ञाने गुरुर्भिक्षुर्निरूप्यते ॥८६॥
तथा चेद्भावयत्येष तदा स्याद्दण्डितं मनः ।
मनसस्तु परित्यागे न किञ्चिन्मृग्यतेऽपरम् ॥८७॥
यदा पुनः साधकत्वं तस्य वाञ्छति कर्हिचित् ।
तदा साङ्ख्यप्रकारेण सर्वं ज्ञात्वा न मुह्यति ॥८८॥
गुणैश्चेन्मोहमायाति तदा तेषां जयो यथा ।
तच्च तेषां स्वरूपं च तावन्मात्रनिवारणे ॥८९॥
निर्गुणानां पदार्थानां स्वरूपं विनिरूपितम् ।

द्वाभ्याम् । तथा चात्र मनसः परित्यागे सति न साधनान्तरापेक्षेति सिद्धेरयमध्यायः पूर्वाध्यायस्यैव शेष इत्यर्थः ॥ एवं त्रयोविंशो विचारितः ।

( अ. २४-२५ ) अतः परमभेददार्ढ्याय भेदस्वरूपविषयकं सन्देहं वारयितुं स्वोक्ताष्टाविंशतितत्त्वपक्षस्योपयोगित्वं च बोधयितुं द्वावध्यायावित्याशयेन तौ विचारयन्ति-यदा पुनरितिसार्द्धाभ्याम् । तावन्मात्रनिवारण इति । अष्टविंशतितत्त्वमात्रत्वनिवारणार्थम् । अयमर्थः । ऊनविंशे तस्माज्ज्ञानेन सहित'मितिद्वाभ्यां ज्ञानसम्पत्तेर्भक्तिशेषत्वमुक्तम् । ततो नवैकादशेति त्रिभिर्गौणमुख्यभेदेन द्विविधं ज्ञानविज्ञानयोः स्वरूपमुक्तम् । तत्र ज्ञानसम्पत्त्या यदा भजेत्तदा संन्यासी सन् विंशत्रयो-विंशोक्तरीत्या मनो दण्डयित्वा भजेत् । यदा तु न तत्राधिकारस्तदा आश्रमान्तरे चतुर्विंशपञ्चविंशोक्तरीत्याऽष्टाविंशतितत्त्वपक्षोक्तभेदस्या-गन्तुकत्वमवगत्याधिदैविकवादमाश्रित्य विज्ञानसम्पत्त्या भजेदिति चतु-र्विंशपञ्चविंशयोस्तात्पर्यम् । 'येन मे निर्जिता सौम्ये'त्यादिभिः सार्द्धैश्च-तुर्भिरवगन्तव्यमिति । तेन वैराग्यं श्रद्धा च साक्षात्परम्परया वा यथा-धिकारं भक्तेरेव शेषौ । भजनप्रकारश्च 'मल्लिङ्गमद्भक्तजने'त्येकादशोक्तः, 'पुनश्च कथयिष्यामी'त्यूनविंशोक्तश्च यथाधिकारं बोध्यः । भक्तिस्व-रूपादिकं च 'न रोधयती'त्यादि द्वादशोक्तं बोध्यमितिबोधितम् । ततश्च मुख्याधिकारे द्वादशोक्ता शरणागतिरेव साधनम् । मध्यमे ऊनविंशोक्तमात्मसमर्पणपूर्वकं भजनम् । जघन्य एकादशोक्तरीतिकमिति सर्वत्र भक्तिशेष एवेति ॥८६॥८९॥ एवं चतुर्विंशपञ्चविंशौ विचारितौ ।

एवं जातोऽपि सङ्गेन पुनश्चेन्नाशमेति हि ॥१०॥
तथा पुरुरवाः प्रोक्तः स्वात्मानं स्वयमुक्तवान्।
सङ्गान्नष्टः पुनः सङ्गं विमुच्य लभते गतिम् ॥११॥
जन्मान्तरे स्मृत्यभावे सङ्गान्नष्टो यदा भवेत्।
तदा का गतिरित्यत्र हरिपूजा निरूपिता ॥१२॥
तेन जातिस्मरो भावी तस्या ज्ञानं हरिः स्वयम्।
जातिस्मरस्य वदति सर्वसाधनपूर्वकम् ॥१३॥
तत्रोपपत्तिर्निखिला वर्णितोद्धवबुद्धये।
तथा रोगाद्यभावाय साधनानि हरिर्जगौ ॥१४॥

(अ. २६-२७) अतः परं षड्विंशोऽप्येतस्यैव दोषो वैराग्यबोधनेनेत्याहुः–एवं जातोऽपीत्यादिसार्द्धेन, प्रोक्त इति गुरुः प्रोक्तः। सप्तविंशोऽप्येतच्छेप इत्याहुः-जन्मान्तर इत्यादि। 'दैवीसम्पद्विमोक्षाये'ति वाक्यात्। दैव्यां सम्पदि विमोक्ष आवश्यकः। तादृशस्य यदि वासनावशात्सङ्गस्तदा प्रतिबन्धस्तस्मिन् सत्येव यदि देहः पतति दैव्याः सम्पदो धर्माश्च प्रारब्धनाशे पुनरुद्बुध्यन्ते तदा तस्य मुमुक्षायां का गतिः कथं निस्तार इत्याशयेन प्रश्ने नानर्षिभिर्नानाप्रकारेणोक्तस्य कर्मकाण्डस्य सङ्क्षेपरूपा हरिपूजा तादृशाधिकार्यर्थं तृतीययोगरूपं साधनमुक्तम्। तेन ज्ञानमिव तदपि भक्तेरेव शेषः। परं विप्रकर्षेण प्रकारविशेषेण चेति विशेषः। उपसंहारे 'भक्तियोगं स लभते' 'एवं यः पूजयेत मा'मित्यनेन निःश्रेयसलप्रश्नोत्तरणादित्यर्थः। ॥१२॥ एवं सप्तविंशो विचारितः॥

(अ २८) अष्टाविंशं विचारयन्ति तेनेत्यादिद्वाभ्याम्। वदतीति पूर्ववत्प्रतिबन्धाभावार्थं वैराग्यस्यावश्यमपेक्षितत्वात्तदर्थं मायावादं भक्त्यर्थं ब्रह्मवादं च वदतीत्यर्थः। एतावता 'निःसङ्गो विचरेदिहे'त्यन्तस्यार्थं उक्तः। निखिलेति मायावादसम्बन्धिनी ब्रह्मवादसम्बन्धिनी च। अनेनार्द्धेन उद्धवप्रश्नस्य 'यावद्देहेन्द्रिये'त्यारभ्य 'द्वयं पण्डितमानिना'मित्यन्तस्य ग्रन्थस्य चार्थं उक्तः। तथा रोगेत्यर्द्धेन 'योगिनोऽपक्वयोगस्ये'त्यारभ्यान्तस्यार्थं उक्तः। न च 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्य'मिति पातञ्जलसूत्रात प्रकृतिप्राकृतवैराग्यस्य तेषां भेदवादिनामप्यभीष्टत्वात्तदर्थं तद्विहाय मायावादस्य किमित्यादरणमिति शङ्क्यम्। जीवविषयकवैराग्यस्याप्यत्र विवक्षितत्वेन

तत्राऽशक्तं तदानीं हि फलप्रेप्सुं विचार्य हि ।
उद्धवं सुगमं प्राह प्रकारं सर्वमिश्रितम् ॥१५॥
तत्राप्यशक्तं तं ज्ञात्वा बदर्यां प्रेषयत्यजः ।
साधनान्याह तत्राऽपि यत उक्तं हृदि स्पृशेत् ॥१६॥
एवं चतुर्विंशतिभिर्जीवमुक्तिर्निरूपिता ।

तदादरणात् । प्रकृतिः पुरुषश्चेति विकल्पो'ऽविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः,'देहेन्द्रियप्राणमनोऽभिमानो जीवोऽन्तरात्मे'त्यादिवाक्यैस्तथानिश्चयात् । न च मायावाद एव तात्पर्यमिति शङ्क्यम्, 'ज्ञानं विवेको निगम' इत्यादिवाक्यचतुष्टये 'यथा हिरण्यं सुकृत'मित्यादिभिः कार्यजातस्य ब्रह्मत्वनिरूपणविरोधप्रसङ्गात् । तस्माद्वैतप्रतिपक्षस्यैव मायिकत्वं न स्वैच्छिकस्येति ब्रह्मवाद एव तात्पर्यमिति निश्चयः । तस्मादयमप्यध्यायो भक्तेरेव शेषः परम्परयेतिबोधितम् ॥ ९०॥९४॥ एवमष्टाविंशो विचारितः ॥

(अ. २९) ऊनत्रिंशं विचारयन्ति तत्राशक्तमित्यादिद्वाभ्याम् । तथा च सोऽप्यध्यायोऽनुकल्पबोधकत्वाद्भक्तेरेव शेष इत्यर्थः । ननूपक्रमे 'विद्धी'ति 'पश्यन्ती'ति कथनादुपसंहारे च 'एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः' इतिकथनाच्च ज्ञान एव तात्पर्यमवगम्यत इति तस्यैव प्रकरणित्वम् । भक्तिस्तु 'यद्यनीशो धारयितुमि'त्यादिना ज्ञानानुकल्पतयोक्तेति तत्र तात्पर्यस्याशक्यत्वेन प्रकरणित्वासम्भवात्सर्वस्य भक्तिशेषत्वप्रतिपादनमसङ्गतमिति चेत्—

अत्रोच्यते । लिङ्गान्तरैर्भक्तौ तात्पर्यनिश्चयेनोपक्रमोपसंहारयोर्नैर्बल्ये भक्तेरेव प्रकरणित्वस्य सिद्धत्वात्सर्वस्य तच्छेषत्वप्रतिपादनं नासङ्गतमिति । तथाहि, एकादशेऽध्याये 'अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामी'ति प्रक्रमभेदेन सुगोप्यपरमगुह्यत्वरूपामपूर्वतां प्रतिज्ञाय द्वादशाध्याये भक्तावेव तद्बोधनात् 'मत्कामा रमणं जारं मत्स्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापु'रिति । ज्ञानं विनापि भावेन सङ्गादेव स्वप्राप्तिकथनात्, तत्रापि 'शतसहस्रश' इतिकथनेन काकतालीयनिवारणात् । त्रयोदशे हंसगीतायां नानात्वभ्रमनिरूपकं ज्ञानं निरूप्य 'एवं विमृश्य गुणत' इति श्लोके नानात्वभ्रमनिवर्तकं ज्ञानं निरूप्य 'भजत माखिलसंशयाधि'मिति तस्य कण्ठत एव भजनाङ्गत्वबोधनात् । ऊनविंशेऽपि 'ज्ञानविज्ञानसम्पन्नो' 'भज मां

भक्तिमानित' इत्युपदिश्य तदर्थमेव तयोः श्रद्धावैराग्ययोश्च कथनात्। शीघ्रं भक्तिभवनार्थं परमकारणान्युपदिश्य 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत' इति तत्प्रशंसावादात्। चतुर्दशे भक्तोत्कर्षस्य भक्तिबलस्य तत्फलोत्कर्षस्य साङ्ख्ययोर्धर्मविघ्नयोस्ततो न्यूनतस्य च बोधनेन षोडशे भक्तियुक्तबुद्धचैव परिसमाप्तिबोधनेनोपपत्तेः सप्तदशाष्टादशयोर्भक्त्यर्थमेव धर्मकथनेनाग्रिमेष्वपि तन्छेपस्य तदनुकल्पस्यैव बोधनेन च सर्वत्र तस्या एव मुख्यतयाऽभ्यासाच्च भक्तावेव तात्पर्यं निश्चिते उपक्रमे ज्ञानकथनं मैत्रेयीब्राह्मणे जीवात्मोपक्रमवत्सौलभ्यार्थम्। उपसंहारे ब्रह्मवादोल्लेखश्च मायादिवादस्य परम्परयाङ्गत्वबोधनार्थमित्यवधेयम्। 'यथनीश'इत्यादिना यदनुकल्पलकथनं तदुपासनाक्षेपभूतभक्तिसाधनत्वेन पर्यवस्यदेकादशाध्ययोक्तभक्तावेव तथात्वं पर्यवसाययतीति प्रकरणादेवावसीयते। 'अथैतत्परम'मिति मुख्यभक्तिप्रक्रमभेदाच्चेति पूर्वोक्तमविवादम्। ननु 'मत्कामा रमण'मिति श्लोके स्वस्वरूपज्ञानरहितत्वमन्तर्गृहगतानामेवोच्यते। जारपदेन तद्बुद्धिविषयस्यैवोल्लेखात्। 'तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गता' इति शुकवाक्यसामानाधिकरण्येन तथा निश्चयात्। रासस्थानां तु सन्देशेन कुरुक्षेत्रे साक्षादुपदेशेन च ज्ञानस्य दानात्सहकारित्वमेव समायातीति ज्ञानकर्मसमुच्चयवज्ज्ञानभक्तिसमुच्चय एव तात्पर्यम्. न तु ज्ञानस्याङ्गत्व इति चेन्न, रमणपदोक्तविषयान्तरोल्लेखवैयर्थ्यापातात्। 'रामेण सार्द्ध'मित्यादिश्लोकत्रयोक्तरासस्थलिङ्गविरोधापातात्। 'केवलेन हि भावेने'तिश्लोकोक्तस्य केवलपदस्य गवादीनामुल्लेखस्य 'मूढधिद' इत्यन्यविशेषणस्य च विरोधात्। अतो ज्ञानोपदेशो ज्ञात्वा पाने महान् रस इति रसाधिक्यार्थमेव स्रक्चन्दनाद्युपकरणवन्न तु फलार्थमिति नात्र कोपि शङ्कालेश इति बुद्धिमद्भिरनुसन्धेयम्। ननु यद्येवं तदा 'योगास्त्रयो मया प्रोक्ता' इति फलार्थं किमिति मार्गत्रयकथनमिति चेत्? अधिकारिभेदेन भिन्नफलदानार्थमित्यनुसन्धेहि। ननु तथापि 'न निर्विण्णो नातिसक्तो' इति भक्तौ मध्यमस्याधिकारित्वं कथं सङ्गच्छते इति चेत्, तत्र, मुख्यभक्तिं लक्षीकृत्येति बुध्यस्व। न चात्र मानाभावः। तत्रैवाध्याये 'जातश्रद्धो मत्कथा'स्वित्यादिना तस्य स्वरूपमारभ्य 'कथञ्चिद्यदि वाञ्छन्ती'त्यन्तेन फलान्तमुक्त्वा 'न मय्येकान्तभक्ताना'मित्यादिभिस्त्रिभिर्मुख्याधिकारिस्वरूपकथनस्यैव मानत्वात्। अत उक्तरीत्या **सर्वसामञ्जस्यान्मुख्यभक्तेः प्रकरणित्वमक्षुण्णमिति निश्चयः॥९५॥९६॥**

प्रकृतमनुसरामः। प्रकरणमुपसंहरन्ति--एवमित्यादि। एवं सार्द्धपञ्चषष्टिभिः सायुज्यरूपजीवन्मुक्तिप्रकरणं विचारितम्।

ब्रह्ममुक्तिस्ततो द्वाभ्यां ममाहम्भावभेदतः ॥९७॥
ब्रह्म कृष्णस्तन्मयत्वं यादवादिषु संस्थितम् ।
तेषामभावकथनादभिनीतो ममक्षयः ॥९८॥
देवप्रार्थनयाहं च नटवद्वेपमन्यथा ।
त्यजतीतीश्वरस्यापि तत्र हेतुः सुरार्थना ॥९९॥
पूर्वत्र त्रितयं हेतुर्हरीच्छा पृथिवीभरः ।
उद्धृतत्वाद्देवभावः स्वपदप्रापणं ततः ॥१००॥

(अ. ३०) अतः परं ममताहन्तानाट्यत्यागरूपब्रह्ममुक्तिप्रकरणं सार्द्धत्रयोविंशतिभिर्विचारयन्ति-ब्रह्ममुक्तिरित्यादिभिः। ममाहम्भावभेदत इति। ममताहन्ता नाट्यत्यागभेदतः। एतेन ब्रह्मणो नित्यशुद्धबुद्धमुक्तस्वभावत्वस्य श्रुतिसिद्धत्वाद्बन्धाभावेन तन्मुक्तिकथनमनुपपन्नमितिशङ्का निरस्ता। अत्रैवैकादशाध्याये 'बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः, गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धन'मित्यनेन स्वमते भगवता जीवबन्धस्यापि मायाकृताहङ्कारजन्यत्वेन भ्रान्तिमूलत्वव्यवस्थापनात्सः जीवस्यापि न वास्तवः किन्त्वभिमानमात्रः, परं मायानिवृत्तिं विना (न) निवर्त्तत इति तन्निवृत्त्यर्थं भक्तिज्ञानोपासनानि यथाधिकारमावश्यकानि। स्वस्य तु माया शक्तिरूपा[illegible]दास्यं कुर्वाणा तिष्ठतीति न तद्गुणकृतः सः किन्त्वैच्छिक इति तदभावे तदभावादिति। तदेतद्विशदीकुर्वन्ति-ब्रह्मेत्यादिभिः। अभिनीत इति। ब्रह्मवादे भगवता स्वस्यैव सर्वात्मकत्वमभीक्ष्णश उक्तमिति ममत्वस्याभिनयमात्रत्वात्तेषामभावकथनेन ममत्वक्षयोऽप्यभिमानमात्र इति तथेत्यर्थः ॥९७॥९८॥ अहन्तात्यागे विशेषमाहुः-देवेत्यादि। अहमिति। अहम्भावक्षयोऽभिनीत इत्यन्वयः। एतेन 'स आत्मानमेवावेदहं ब्रह्मास्मी'ति। 'अहं सर्वस्य प्रभवः' 'अहं योगस्य साङ्ख्यस्ये'त्यादिषु योऽहम्प्रयोगः स नाभिमतविषयः किन्त्वात्मविषयः। उक्तश्रुतौ तथैव सिद्धत्वात्। अतो नटवत्कपटमानुषवेशोऽहन्ताभिनयस्तस्यात्र देवप्रार्थनया त्यागोऽभिनीत इत्यर्थः। नन्वत्र सुरार्थनायाः किं प्रयोजनमत आहुः-ईश्वरस्येत्यादि। कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थस्य प्रकारान्तरेणापि देवादिदुःखनिवारणसमर्थत्वान्मानुषवेशग्रहणे सुरार्थनैव बीजमतोऽत्रापि सैव हेतुरुक्तेत्यर्थः। तर्हि ममताक्षये को हेतुरित्यत आहुः-पूर्वत्रेत्यादि। अत्र हेतुद्वयं स्कन्धारम्भ एवोक्तम्। उद्धृतत्वादिनोक्तस्तु प्रकरणबललभ्यः। तत्रापि देवभावः श्रौतः। 'हरिं हरन्तमनुयन्ति देवा' इति तैत्तिरीये ब्रह्ममेधश्रुतेः। द्वितीयं तु 'यत एतद्विमुच्यते' इति तदर्थं प्राकट्याज्ज्ञेयम् ॥९९॥१००॥

यथा कृतं वदन्त्येष तेन जातः परीक्षितः ।
भ्रमः स्वतुल्यता तेन चैव पृष्टं तथाविधम् ॥१०१॥
तिरोधानेच्छया जाताः शकुनाभावभूमयः ।
कालः सेवकरूपाद्धि विभ्रष्टः स्वां गतिं गतः ॥१०२॥
अधिकारप्रदानेन निमित्तानि ततोऽभवन् ।
भगवांस्तत्पूर्वमेव कृतवानिति सत्यवान् ॥१०३॥
न प्रतीकार इत्याह देशो गौणोऽत्र सम्मतः ।
काले समागते तस्यास्त्रीबालानां विनाशनम् ॥१०४॥
अधर्मश्च तदा भूयाद् द्वारकाऽपि विनश्यति ।
मुक्तिश्च तेषां जायेत स्वामिकार्यं च तैः कृतम् ॥१०५॥
अतः स्वपदमेवैते प्रापणीया न संशयः ।
शापदोषनिवृत्त्यर्थं मुक्तं कारितमेव च ॥१०६॥

(अ. ३०) एवं सार्द्धैस्त्रिभिः प्रकरणार्थं विचार्य प्रथमाध्यायार्थं दशभिर्विचारयन्तो राजप्रश्नहेतुं पूर्वमाहुः-यथेत्यादि । यथाकृतमिति यथाप्रतीतिविषयीकृतम् । स्वतुल्यतेति जीवतुल्यता । भातेति शेषः । तथाविधमिति तत्तुल्यजनम् । तथा च - शुकतात्पर्यानभिज्ञानाद् भ्रम इत्यर्थः । शुकोक्तितात्पर्यं वदन्त इच्छाकारं ज्ञापयितुं भगवत्कृतेस्तात्पर्यं वदन्त उत्पातदर्शने हेतुमाहुः-तिर इत्यादिसार्द्धेन । षष्ठाध्याये शापस्य दुरत्ययत्वमुक्तमिति तत्तात्पर्यमाहुः-भगवानित्यादि । तथा चेच्छाविषयत्वादप्रतीकार्यं इत्यर्थः । स्त्र्यादीनां शङ्खोद्धारे प्रेषणस्य यादवानां प्रभासे नयनस्य च यदाज्ञापनं तत्तात्पर्यमाहुः-देश इत्यादि । अत्रेति अस्यामिच्छायां देशो द्वारकाख्यमुक्तिक्षेत्ररूपः परमकल्याणोऽपि कालापेक्षया अप्रधानो विचारितः । तत्तस्माद्धेतोराधिकारिकं कार्यं कुर्वाणे काले समागते तथा स्यादतस्तथा प्रेषणं नयनं चेत्यर्थः । 'वयमि'तिपदसूचितस्वसहगमनतात्पर्यमाहुः-मुक्तिरित्यादि । एतेन 'प्रभासं सुमहापुण्यं यास्याम' इत्यस्य व्याख्याने श्रीधरेण यदुक्तम्, 'एते देवांशा अधिकारित्वात्सद्यो मुक्तिं नार्हन्तीत्यतो द्वारकातस्तेषां प्रभासे नयनमि'ति तन्निरस्तम् । अभिषेकाद्याज्ञापनतात्पर्यमाहुः शापेत्यादि । तथा च ब्रह्मदण्डस्य दुरत्ययत्वान्मुक्तिं प्रतिबध्नीयादिति तन्निवृत्त्यर्थं तथाकथनं करणं चेत्यर्थः । एतेन 'यत्र स्नात्वा दक्षशापा'दिति ब्रह्मरूपसरस्वतीयुक्तक्षेत्रत्वं मुक्त्यभावगमकमित्यपि शङ्का निरस्ता ।

रामस्य सत्त्वदेहस्तु पूर्वमेव निरूपितः ।
जराभिमानी यो देवः स लोके कार्यतः श्रुतः ॥१०७॥
विस्मृत्य स्वात्मरूपं हि वने चरति लुब्धकः ।
पशुपक्षिमृगासक्तः शापरूपं तु यद् बृहत् ॥१०८॥
तत्पदे योजयामास पूर्णे ब्रह्मणि सुस्थिरम् ।
अधिभूतप्रकारेण हरिणत्वमुपागतः ॥१०९॥
ब्रह्म कृष्णाजिनमिति श्रुत्या तादृक्त्वमागतः ।
एवं बहिः स्थितं सर्वं स्वात्मन्येव निवेशयेत् ॥११०॥

'विमुक्तः किल्बिषात्सद्य' इत्यादिवाक्यशेषेण पापनिवृत्त्या पूर्वरूपसम्पादनस्यैव तत्र बोधनात् । अतः सेवाफलप्रतिबन्धनाशायैव नयनम् । एवञ्च 'क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः । भ्राताऽपि भ्रातरं हन्या'दिति 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यत' इति 'द्वौ सम्मताविह मृत्यू दुरापा'वित्यादिवाक्यैश्च युद्धं धर्मस्तेन मृत्युश्च मुक्तिसाधनमतो भगवतः षष्ठो गुणः प्रादुर्भूतस्तेषां मौढ्योत्पादनेन स्वजनान् विस्मारयँस्तत्समये वैराग्यं दृढीचकारेति मुक्तिप्रतिबन्धकदोषनिवृत्त्यर्थमेव तथाकारितमिति शापोऽपि ये एतमाशयं न जानन्ति तेषामेवान्यथाभानहेतुरिति भावः । तेन 'भगवन्मतकोविदा' इति मुनिविशेषणमप्येतादृशभगवदभिप्रायज्ञातृत्वस्य बोधकम् । किञ्च, मुक्तौ दित्सितायां तदुपायकारणमावश्यकम्, उपायास्तु 'कायक्लेशावहा' इति पुष्ट्यैव कायक्लेशानावहाभ्यस्तसाधनात्मके युद्धे तच्चित्तप्रेरणमितीयमपि लीला पुष्ट्यैव प्रकारदर्शनेनैव परमसुराणां व्यामोहः । तेन पद्यस्कन्धीयनिबन्धसमाप्तौ यदुक्तं 'सर्वलीलाः पुष्टिमध्ये प्रविशन्तीति मे मति'रिति तदत्रापि निष्प्रत्यूहम् । एवमन्यत्राप्यनुसन्धेयमिति दिक् ॥१०१॥१०६॥ 'रामः समुद्रवेलाया'मित्यस्य तात्पर्यमाहुः—रामस्येत्यादि । पूर्वमिति प्रथमस्कन्धनिबन्धे पञ्चरात्रवाक्येषु 'रोहिणीनन्दन' इत्यत्र । तथा च 'तत्याज लोकं मानुष्य'मित्यनेन तस्यैव त्याग उच्यते न तु नैसर्गिकस्येत्यर्थः । 'मुशलावशेषायःखण्डे'त्यादेस्तात्पर्यमाहुः - जराभीत्यादि । जरा कालकन्या । कार्यतः वलीपलितादिरूपकार्यतः । यद् बृहदिति । आधिभौतिकमक्षरांशम् । पूर्णे ब्रह्मणीति आधिदैविकेऽक्षरे । उपागत इति अक्षरात्मकशरण इति शेषः । हरिणत्वप्रयोजनमाहुः-कृष्णेत्यादि । श्रुतिस्तु 'निषसाद धरोपस्थ' इत्यादेस्तात्पर्यं वदन्तोऽग्रिमाध्याये वक्ष्यमाणं कार्यं विचारयितुं स्थितिरित्याहुः—एवमित्यादि । अयमर्थः । अत्र हि 'एवं नष्टेषु सर्वेष्वि'त्यत्रोक्तो नाशो

तत आवरणाग्निं हि प्रकटीकृत्य तत्र वै।
तिरोभूय स्वयं भूयस्तं च विद्युन्निभं तथा ॥१११॥
तिरोधानं कारयितुं व्यवसायात् स्थितः क्षणम्।
तदा देवा भ्रमं याता वैकुण्ठेऽद्य प्रयास्यति ॥११२॥
विष्णुः सगुण एवाऽयं विमानेन तदा वयम्।
सहोत्सवेन महता नेष्यामः स्वस्वमन्दिरम् ॥११३॥
भ्रमात्तु यथा नाऽभूत्तेन तेऽप्यत्र विस्मिताः।

न नैयायिकादिमतिसिद्धो ध्वंसः, किन्तु विनाशः—कारणे लय इति कपिलोक्तः सूक्ष्मभावापन्नस्य कार्यस्य कारणान्तः श्लेषः। पुराणे प्रतिसङ्क्रमस्य श्रुतौ च यत्प्रयन्तीति प्रकर्षेण गमनस्य सत्कार्यवादेनाङ्गीकारात्। अतः क्रमेण स्वस्मान्निर्गत्यैवं बहिःस्थितं सर्वं स्वात्मन्येवानेन प्रकारेण युगपत्प्रवेशयन्। ततः प्रवेशानन्तरं 'योगधारणयाग्नेय्ये'त्यनेन वक्ष्माणमावरणाग्निं 'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः। वन्हिमध्ये स्थितं सत्यं सत्यस्यान्तःस्थितोऽच्युत' इति श्रुत्युक्तम्, 'तस्य मध्ये वन्हिशिखा अणीयोर्ध्वा व्यवस्थित' इति तैत्तिरीयसन्दर्भश्रावितं जीवकलारूपं वा, उक्तसन्दर्भे 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरे'त्युक्ताया उपमाया अत्र 'सौदामिन्या यथे'ति दृष्टान्तेन स्मारणात्। प्रकटीकृत्य तत्राग्नौ वै निश्चयेन स्वयं तिरोभूय परमात्मत्वेनान्तःस्थित्वा बहिरदृश्यो भूत्वा तमग्निं विद्युन्निभं तथा विद्युद्रीत्या तिरोधानं कारयितुं व्यवसायाद् व्यवसायं कृत्वा क्षणं स्थित इत्यर्थः। तथा च 'विभ्रच्चतुर्भुजं रूप'मित्यादिभिः स्वरूपवर्णनं नित्यस्य स्वरूपस्य तिरोधानेऽपि स्थितिबोधनार्थम्। अन्यथाऽत्र प्रयोजनाभावाद्वृथा स्यात्। अत एवेच्छाशरीरिणेत्युक्तम्। अतस्तथातिरोधानमिति भावः ॥१०७॥ ॥१११॥ अतः परं 'भगवान् पितामहं वीक्ष्ये'ति श्लोकोक्तनेत्रे निमीलनस्य तात्पर्यं प्रसङ्गादत्राहुः- तदेत्यादि। तथा च भगवता सर्वेषां ज्ञानशक्तिमद्स्वनेत्रनिमीलनेन तेषां ज्ञानशक्तिस्तिरोधापिता। तेन तेषां सगुणत्वादिभ्रमो हृतः। 'सलोकान् लोकपालान्नः पाही'ति प्रार्थनायां 'यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघे'त्युत्तरणाद्विमानेन वैकुण्ठं यास्यतीति च भ्रमो हृतः। भगवांस्तु गुणातीत एवाक्षरे विद्यमानो मायाशुद्धाख्य(उत्पाद्य) तत्रैव प्रकटीभवतीति न तस्य यानम्। 'यास्यामी'ति वाक्यं तु प्रभासस्य ब्रह्मरूपसरस्वत्यधिष्ठितत्वात्तत्परम्। एतदन्त इति सप्तमी तु चर्मणीत्यादिवत्सप्तम्यर्थं। अतस्तेषां भ्रमात्तु तथा नाभूत्। तेन ते देवा अप्यत्रैव तिरोधानकरणे विस्मिता इत्यर्थः। यादवब्राह्मणस्यापि सेवाकर्तृत्वात्सदाज्ञापनादितात्पर्यं वक्तुं तत्स्वरूपा-

दारुको विष्णुलोकाद्धि समायतो जयादिवत् ॥११४॥
तत्रैव सरथो यातः स तु भक्तो बभूव ह ।
बलवद् रुक्मिणीमुख्या नाट्यं सर्वमिहोदितम् ॥११५॥
अथ चैकादशे स्कन्धे मुक्तिरेका विधीयते ।
अहन्ताममतानाशरूपा साधनसंयुता ॥११६॥
साधनाद्वितयं पूर्वं प्रक्रियाद्वितयेन हि ।

दिकमाहुः-दारुक इत्यादि। तथा च सालोक्यसामीप्ये अनुभूय सायुज्यरूपां परममुक्तिं प्राप्त इत्यर्थः। 'कृष्णपत्न्यो विशन्त्यग्नि'मित्यादेस्तात्पर्यं वक्तुं तद्देहस्वरूपमाहुः-बलवदित्यादि। परिहासाध्याये 'क स्वे महिम्नि अभिरतो भगवांस्त्र्यधीशः- क्वाहं गुणप्रकृतिरज्ञगृहीतपादे'त्यत्र तत्स्वरूपस्य गुणप्रकृतित्वेनोक्तत्वादन्यत्र मूलप्रकृतित्वेन कथनाच्च तद्देहः सत्त्वात्मकः। मुख्या इत्यनेनाष्टावक्रशप्ता व्यावर्तिताः। एवं चात्र सन्दर्भे भगवानेव स्वयं गुणातीतः परिकरस्तु मुख्यः सात्विकः, शेषस्तु राजसस्तामसश्च। तस्य सर्वस्य सूक्ष्मं शरीरं दशमस्कन्धोक्तप्रकारेण त्यक्तवासनं गुणातीतं ब्रह्मभूतं विधाय स्थूलं सगुणं शरीरमनया रीत्या त्याजितवान्। ततश्च चतुर्लक्षणीफलाध्यायोक्तरीत्या विद्वन्मण्डनोक्तरीत्या च ब्राह्मदेहस्य विद्यमानत्वादिदं सर्वं नाट्यमिहोदितमित्यर्थः। इदं यथा तथा विद्वन्मण्डनटीकासमासौ लीलानित्यतावादविवरणे निपुणतरमुपपादितमिति न पुनरत्रोच्यते ॥११२॥११५॥

एवं चतुर्भिः प्रकरणैश्चतुर्धा मुक्तिं निरूप्य पूर्वप्रकरणद्वयोक्तमुक्तेर्जीवसम्बन्धित्वेन साक्षाद्ब्रह्मधर्मत्वाभावात्तदंशे स्कन्धार्थस्य ब्रह्मलक्षणत्वहानिरित्यरुच्या पक्षान्तरमाहुः-अथवेत्यादि। एकादशे स्कन्धे एका अहन्ताममतानाशरूपा, एका मुक्तिर्ब्रह्मधर्मरूपाऽभिधीयते। तर्हि पूर्वप्रकरणद्वयं किमर्थमित्यत आहुः-साधनेत्यादि। सा मुक्तिः साधनं विना न भवतीति तैः संयुता। तत्र साधनभक्तिर्ज्ञानकर्मसमुच्चयश्चेति तद्द्वयं हि यतो हेतोः पूर्वप्रकरणद्वयेन परम्परया साक्षाच्चोपदिश्य ततो बालानां कबोधने सुखेन बोधनार्थं तमहन्ताममता-

भक्तिज्ञानक्रिये चैव ततो बालकबोधने ॥११७॥
अभिनीय तमेवार्थं दर्शयामास केशवः।
एतद्भगवतो गूढं चरित्रमिह वर्णितम् ॥११८॥
(अत्र निष्णातहृदयो भगवत्पार्श्वमेति हि) ॥११८३॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपनिबन्धे
एकादशस्कन्धविवरणं
सम्पूर्णम्।



नाशरूपमर्थमभिनीयैव दर्शयामास, 'अज्ञानसञ्ज्ञौ भवबन्धमोक्षा'विति 'बद्धो मुक्त इति' व्याख्या 'गुणतो मे न वस्तुतः।' 'गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धन'मिति वाक्याच्च स्वरूपस्थितेरेव वास्तवत्वेन विस्मृतकण्ठमणिन्यायेनैव मोक्ष इति जीवस्यापि तौ मायिकाविति बोधनाय साधनस्याहन्ताममतानाश एव पर्यवसानात्स एव मोक्षः। ब्रह्मणि त्वहन्ताममते अपि न स्त इति तन्नाशोऽपि तथा इति बोधनाय च मायिकनिवारणेनाभिनीय दर्शयामास। यतः केशव उत्पादकोपदेशकयोरपि ब्रह्मानन्दरूपफलदोऽतस्तथेत्यर्थः। एवं चात्रोपदेशरूपालीला करणं भक्त्यादिकं व्यापारः, अहन्ताममतामलयः फलमिति मलयत्वेन ब्रह्मलक्षणत्वमस्याः सिद्ध्यतीति भावः। अनया लीलयाऽऽसुरव्यामोहरूपकार्यदर्शनाद्विप्रकर्षमाशङ्क्य 'य एतां मातरुत्थाये'ति'य एतद्देवदेवस्ये'त्यादीनां तात्पर्यं वदन्तो लीलास्वरूपं फलं चाहुः—एतदित्यादि। तथा च नात्र निरूपंलेश इत्यर्थः ॥११८३॥

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य
दर्शिता एकादशस्कन्धनिबन्ध-
योजना सम्पूर्णा॥



## अथैकादशस्कन्धनिबन्धकठिनांशविवेचनम्।

### कारिका १२. ५२९तमे पृष्ठेनुसन्धेयम्।

एकादशस्कन्धे चतुर्मूर्त्तिचरित्रनिरूपणे वासुदेववस्तु मोक्षद इत्यादि, दशमस्कन्धे तामसप्रकरणे फलान्तैश्चतुर्भिः प्रकरणैर्बाह्याभ्यन्तरभेदेन स्वरूपसम्बन्धात्मको मोक्ष एव सम्पादितो मुख्यतया, अतो वासुदेवकार्यं तामसानां फलस्वरूपप्रधानत्वात्, तथा राजसप्रकरणे फलान्तैश्चतुर्भिः प्रकरणैरर्थकामावेव मुख्यतया सम्पादितौ। स्त्रीणां पुत्राद्यर्थसम्पत्तिः पुत्रादीनान्तूपाहरणादिना कामसम्पत्तिरिति यादवानां राजसत्वेन मध्यमत्वान्मध्यमावेव पुरुषार्थौ राजसेन प्रद्युम्नेन। यद्यपि धर्ममोक्षावपि "कर्हिचित् सुखमासीनम्," "अपश्यतां चानिरुद्ध"-मित्यध्यायद्वयेन निरूपितौ, तथापि तयोरर्थकामसाधकत्वेनैव विनियोगः, तथा सात्त्विकप्रकरणे सिद्धधर्मस्य प्रापफलं भुञ्जतो नृगस्यानिरुद्धात्मकेन भगवता प्रमेयबलेन धर्मो दत्तः, अन्येभ्यश्च यादवादिभ्यो धर्म उपदिष्टः "दुर्जरं बत ब्रह्मस्व"मित्यादिना, धर्ममार्गे ब्रह्मस्वापहारादिना ब्राह्मणानां क्षोभो न कर्त्तव्य इति 'मर्यादया कृतार्थोऽस्तु यदि पापं न जायत' इति सिद्धान्तान् निर्दोषत्वे सत्येव धर्मसिद्धिरितिज्ञापनाय। तथा जरासुतरुद्धराज्ञां प्रार्थनां श्रुत्वा यादवा जरासन्धजयेप्सवो जाताः, तद्वधेन राजमोक्षणं यद्यपि धर्मस्तथापि जात्यभिमानसिद्धत्वान् न मुख्यः, किन्तु वेदप्रमाणसिद्धो यज्ञात्मक एव धर्मो मुख्य इति ज्ञापनायोद्धवोक्तिरूपया युक्त्या यज्ञसाहाय्यमेव कर्तव्यमित्युपदिष्टं यादवानां निर्दुष्टत्वकरणार्थम्। तथा फलप्रकरणेपि कुरुक्षेत्रे मुनिप्रशंसारूपया युक्त्या मुनिकृतभगवद्भक्तिरूपया च युक्त्या वसुदेवयज्ञकरणतदुपदेशरूपया च भगवत्प्राप्त्यर्थं पूर्वं ब्राह्मणा एव पूज्याः, ब्राह्मणवचनैश्च वेदसिद्धो यज्ञ एव कर्त्तव्य इत्युपदिष्टम्, सात्त्विकानां प्रमाणपरत्वात्, सात्त्विकेनानिरुद्धेन प्रमाणसिद्धो धर्म एव सम्पाद्यत इत्यर्थः। दशमाध्यायान्त उद्धवप्रश्ने पूर्वाध्याये "तस्मात् जिज्ञासयात्मान"मितिवाक्य आत्मज्ञानं मोक्षहेतुरित्युक्तम्, 'वैशारदी से'तिवाक्ये वैशारद्या बुद्ध्या गुणकार्यप्रपञ्चस्य समूलस्य दाहे केवलात्मावशेषे मोक्ष इत्युक्तम्, स च आत्मा जीवो वा ब्रह्म वेति सन्देहः, बद्धो मुक्तो वेति च। बद्धत्वे कथं तज्ज्ञानेन मोक्षः स्यात्, मुक्तत्वे कथं देहसत्त्वं सम्भवति, यद्यपि "काल आत्मागमो लोक" इतिवाक्ये स्वस्यैवात्मरूपत्वमप्युक्तं तथापि कालादिसमतया त्याज्यं मध्यपातित्वेनोक्तं न तु पार्थक्येन प्राधान्येन चेत्यतः सन्देहः, तदेतदुद्धवेनोक्तं ब्रह्मरूपत्वे कथं देही? कथं वा गुणैर्बध्यते? जीवरूपत्वे देही सन् कथं गुणैर्न बध्यते? बद्धत्वे तज्ज्ञानेन मोक्षोऽसम्भावित एव, तदुपसंहार उक्तं "नित्यबद्धो नित्यमुक्त एक एवेति मे भ्रम"इति॥

स्कं॰ ११. ५४१तमे पृष्ठेनुसन्धेयम्। का॰ ७४-७५-७६

अग्रे पञ्चदशाध्यायार्थोक्तौ सत्यपि कार्यकारणभावे बाधकनिवृत्तौ सत्यामेव कारणात् कार्योत्पत्तिरितिबाधकनिवृत्तये ध्यानस्य भक्तिसाधनत्वे बाधकनिर्देशकः पञ्चदशाध्याय इत्याहुस्तत्र बाधकेत्यादि। "भूतसूक्ष्मात्मनि मयी"त्यादिनाष्टादशसिद्धिहेतुत्वेन निरूपिता ध्यानभेदाः निवारिता इतिध्यानभेदेषु क्रियमाणेषु चेतसः फलान्तरविषयत्वान् न चेतसि भगवदावेशो नापि चेतसो भगवति प्रवेशः, तथा सति न भक्त्युत्पत्तिरिति बाधकत्वात् तत्फलरूपसिद्धीनामपि भगवत्प्राप्त्यन्तरायत्वकथनाच्च निवारिता भक्तिफलार्थिना न कर्त्तव्या इति, ननु सिद्धिविषयके चित्तस्य तद्भावे किं विधेयमित्याशङ्क्य तत्रोत्तररूपं सर्वासामपि सिद्धीनामित्यादेरर्थमाहुः कृष्णात् सर्वं भवेदिति, आवेशप्रवेशव्यापारकस्वरूपध्यानेनैव भक्तिसिद्धौ भगवत एव प्राप्तौ तेनैवानायासेन सर्वप्राप्तेर्न सिद्ध्यर्थं साधनान्तरं कर्त्तव्यमित्यर्थः। एतावतेति "बाध्यमानोपि मद्भक्त" इत्यारभ्याध्यायेन, द्वितीयः खण्ड इति परमभक्तिरूपः, पूर्णो निरूपित इति साधकबाधकव्यापारफलसहितो निरूपित एवं पञ्चदशाध्यायो विचारितः।

अतः परं षोडशाध्यायस्यापि मुक्त्युपयोगं वक्तुं सप्रकारं तदर्थमाहुर्ज्ञानेनापीत्यादि, द्वयेन तत्र ज्ञानेनापि प्रवेशे हि भजेदिति तु प्रकारः, पुनरित्यादि सारथिनित्यन्तोध्यायार्थः, विभूतिरित्यादि भवेदित्यन्तं प्रयोजनम्, तत्र प्रकारोर्थ उच्यते। भक्तिव्यापारभूते यावत्त्वादिज्ञाने- ध्यायार्थभूतं विभूतिज्ञानं प्रकार इति, गीतायां "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मित्यनेन ज्ञानस्य प्रवेशसाधनत्वमुक्तम्। "नाहं वेदै"रित्यादिना "भक्त्या त्वनन्यये"त्यनेन चान्यनिषेधपूर्वकं भक्तेरेव साधनत्वमुक्तमिति परस्परविरोधे निर्णय उच्यते ज्ञानेनापीत्यादि, ज्ञानेन प्रवेशाङ्गीकारपक्षेपि भजनमावश्यकम्, यावत्त्वादिप्रकारकस्याभिज्ञारूपस्य ज्ञानस्य "भक्त्या मामभिजानाती"तिकथनेन भक्तिसाध्यस्य तद्व्यापारत्वेन प्रवेशहेतुत्वाद् भक्तेश्च भजनेनैव सिद्धेः, अत्र श्रीभागवतेपि 'ज्ञात्वाज्ञात्वे'त्यनेनानन्यभजनकर्तुरेव भक्ततमत्वकथनेन भक्तिपूर्वकालीनस्य यतःकुतश्चिज्ज्ञातस्याभिज्ञारूपस्य यावत्त्वादिज्ञानस्याप्रयोजकत्वकथनाच्च। अतो भक्तिपूर्वकालीनस्य यावत्त्वादिज्ञानस्य माहात्म्यज्ञानहेतुत्वेन भक्तिसाधकत्वम्, भक्त्यनन्तरभाविनस्त्वभिज्ञारूपस्य व्यापारत्वेन भक्तिफलप्रवेशसाधकत्वं यावत्त्वादिज्ञानं तु विभूतिज्ञानेनेति भक्तावुपयोगः, स्नेहरूपांशस्य तु भजनेनैव सिद्धेर्भजनस्यावश्यकत्वम्, शेषं टीकान्तरे स्फुटमिति ततो ज्ञेयम्॥ इति।

## एकादशस्कन्धः समाप्तः

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

अथ तत्त्वार्थदीपनिबन्धे श्रीभागवतार्थप्रकरणे

# द्वादशस्कन्धविवरणम् ।

इत्येकत्रिंशताऽध्यायैर्मुक्तिरुक्ता ससाधना ।
लीलाश्च नव सम्पूर्णास्ताभिः शुद्धो ह्यपाश्रयः ॥१॥
त्रयोदशभिरध्यायैर्द्वादशे स निरूप्यते ।
स पञ्चधाऽत्र निर्णीतो द्वितीये स त्रिधोदितः ॥२॥

श्रीबालकृष्णो जयति ।

## अथ द्वादशस्कन्धनिबन्धस्य योजना ।

अथ द्वादशस्कन्धार्थं निबन्धसङ्गतिकथनाय पूर्वस्कन्धार्थमनुवदन्तो 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ती'त्येतदर्थस्मारणपूर्वकं तदर्थमाहुः–इतीतिसार्द्धेन । शुद्ध इति निरावरणः सारतरः । अध्यायसङ्ख्याताऽत्पर्यमग्रे वक्तव्यम् । सङ्गतिरत्र ज्ञाप्यज्ञापकभावेन हेतुतारूपा स्फुटैव । अतः परं सामान्यलक्षणे "व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु, मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः । पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु । बीजादिपञ्चतां तासु ह्यवस्थासु युतायुत"मिति यल्लक्षितम् , तदर्थस्तु श्रीधरेण जीवसंसारतद्बाधयोरधिष्ठानावधिभूतं ब्रह्मापाश्रयः । तत्र दृष्टान्तः 'पदार्थेष्वि'त्यादिना निरूप्यत इत्युक्तः । स च विचारे मायामयत्रिविधजीववृत्तिरूपसंसारे स्मृत्यान्वयाच्चदधिष्ठानभूतं तद्बाधस्य चावधिभूतं साक्षिरूपं ब्रह्माश्रय इति सिद्ध्यति । द्वितीये च पदार्थेषु यथा तन्मात्रं द्रव्यं युतमवस्थास्वयुतं तथेति सिद्ध्यति । तेन जगतो विवर्त्तोपादानं परिणाम्युपादानं वा ब्रह्मापाश्रय इति सिद्ध्यति । इह तु तस्मादपि कश्चिद्विशेष इति वक्तुमत्र पञ्चप्रकरणानि सूचयन्तस्तत्स्वरूपमाहुः–स पञ्चधेत्यादि । सोऽपाश्रयोऽत्र श्रीभागवते पञ्चधा निर्णीतः । तथा चान्यत्र साधारणलक्षणानुसारेण द्वेधा नानाप्रकारेणो-

नवभिर्बोधितवपुस्तथा सृष्टिलयादिकृत् ।
आधिभौतिकभेदानां द्रष्टा सर्वान्तरः परः ॥३॥

स्कोऽत्र तु पञ्चप्रकारेण निर्णीत इत्येष विशेष इत्यर्थः। निर्णयप्रकारानाहुः-द्वितीय इत्यादिसपादाभ्याम् । तथा च'दशमस्य विशुद्ध्यर्थं'मित्यनेनोक्तं सर्गादिनवलक्षणलक्ष्यत्वमेकम् । 'आभास'श्चेत्यनेनोक्तं जगत्सृष्टिस्थितिप्रलयकर्तृत्वमपरम् । ब्रह्ममीमांसायां जन्माद्यधिकरणे कर्तृत्वस्य समन्वयाधिकरण उपादानत्वस्य च विचारितत्वादत्र च 'जन्माद्यस्य यतोऽन्वया'दित्यत्रोभयसङ्ग्रहात्कर्तृत्वमुपादानत्वस्याप्युपलक्षकम् । तत्राप्यध्यवसीयत इतिपदात्तृतीयचकाराच्च विवर्त्तोपादानत्वस्यापि सङ्ग्रहः । तेन सामान्यलक्षणं पुराणान्तरेक्तो विस्तारश्चादृतः । तेनैकदेशविचारे पूर्वलक्षणस्यापि सामान्यलक्षणत्वम् । अन्यथा महापुराणान्तरस्याप्येकशास्त्रत्वं बाधितं स्यात् । उक्तरीत्या नवानां विशेषलक्षणविचारे तु तस्य विशेषलक्षणत्वम् । अन्यत्र तेषामेतल्लक्षणाभावस्य केषाञ्चिन्नामान्तरस्य च 'सर्गोऽस्याथ विसर्गश्चे'त्याद्युक्तोद्देशलक्षणाभ्यां निश्चयादिति । एवञ्च 'वेदे रामायणे चैवे'ति 'सर्ववेदेतिहासानामिति'वाक्योक्तमपि सङ्गृहीतं भवति । 'योऽध्यात्मिकोऽयं पुरुष'-इतिद्वाभ्यामुक्तमाध्यात्मिकादित्रितयद्रष्टृत्वं तृतीयं लक्षणम् । एतस्य लक्षणस्यात्यन्तविविक्तस्वरूपबोधकत्वाय लक्ष्यस्वरूपमाहुः-सर्वान्तरः पर इति । तथा च लक्षणवाक्ये स्वाश्रयाश्रयपदमेतदर्थम् । अन्यथा 'स आत्मे'त्यनेनैव चतुर्थस्य परमात्मनः प्राप्तेरिदं न वदेत् । अत' स्वस्य पुरुषोत्तमस्याश्रयो लोकासनचरणरूपं तुरीयमक्षरं तस्याप्याश्रय इति तत्रार्थः । तथा च वेतृत्वं जीवात्मसु त्रितयवेतृत्वमन्तरात्मन्यन्तर्यामिणि स्वातिरिक्तत्रितयवेतृत्वमात्मत्वं चाक्षरेऽप्यस्तीति तद्वारणायेदं पदमिति निश्चयः । तच्च सर्वान्तरत्वमानन्दमयाधिकरणविषयवाक्यसिद्धम् , तेनैव श्रुत्यन्तरसिद्धं पञ्चमत्वं च । परमत्वञ्च 'ब्रह्मविदाप्नोति पर'मित्येतद्ब्राह्मणसिद्धम् । एवञ्च द्वितीयस्कन्ध एतत्सुबोधिन्यां यत्पक्षद्वयमुक्तमिदमेकं भगवतो रूपं भगवानेव वेति तदपि सङ्गच्छते । तेन नवलक्षणलक्ष्य आश्रयः अक्षरात्मकः दशलीलानिरूप्यत्वेन दशलक्षणलक्ष्य आश्रयः पुरुषोत्तम इति मूलाविच्छेदरूपता'न्वलक्षणलक्ष्यो हि कृष्ण' इति 'दशलीलानिरूप्योऽयं पुरुष' इति कारिकाद्वयमाश्रयस्य लीलात्वेन पुरुषोत्तमत्वेन कथनं च यथाश्रुतं प्राञ्जलमेव सङ्गच्छते इति बोध्यम्॥१॥२॥३॥

एवं रूढिं पुरस्कृत्य लक्षणान्युक्तवान् शुकः ।
लोकप्रसिद्धिं स्वीकृत्य द्वयं चाऽपि निरूपितम् ॥४॥
वेदो वा भगवान् वाऽपि शब्दार्थरसरूपधृक् ।
वेदमेव समाश्रित्य सर्वे तिष्ठन्ति मानवाः ॥५॥
केचनैव हरिं वाऽपि केवलं केचनैव हि ।

रूढिमिति । 'ब्रह्मविदाप्नोति पर'मितिश्रुत्या 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति गीतया चोक्तां रूढिम् । तर्हि प्रकारद्वयमन्यत्कुत्रेत्यत आहुः - लोकेत्यादि । लोके हि सहायत्वेन रक्षकत्वेन चोपजीव्य आश्रय इत्युच्यते तां प्रसिद्धिं स्वीकृत्य द्विविधमुपजीव्यत्वं द्वादशे निरूपितम् । अपीतिपदस्य लोकप्रसिद्धिपदेन योजना । *द्वयं स्फुटीकुर्वन्ति-वेदोवेत्यादि । शब्दार्थरसरूपधृगिति* शब्दरसरूपधृगर्थरसरूपधृगित्यर्थः । इदमग्रिमषडध्यायीविचारे स्फुटीभविष्यति । ननु पूर्वोक्तलक्षणैरेव ज्ञायमाने आश्रये एवं रूपद्वयकथनस्य किं प्रयोजनमत आहुः–वेदमेवेत्यादि । केवलमिति असङ्गोदासीनम् । तथा च लोके शब्दार्थभेदेन द्विधाऽऽश्रयणदर्शनात्तत्स्वीकारेण शब्दरसरूपस्य । द्विप्रकारकार्थरसरूपस्य च कथनमित्यर्थः ॥४॥५३॥

## निबन्धकठिनांशविवेचनम् ।

का–५. द्वादशस्कन्धे प्रकरणार्थविभागे वेदमेव समाश्रित्येति कारिकाव्याख्यानं लिख्यते, कर्मिणः सर्वे मानवा वेदमेव केवलं समाश्रित्य तिष्ठन्ति, वेदोक्तकर्मभिरेवविहितैर्निषिद्धैश्च *शुभाशुभफलं मन्यन्ते न त्वीश्वरमङ्गीकुर्वन्ति,* केचन *मर्यादा*स्थाः ज्ञाननिष्ठा भक्ताश्च हरिं चापि समाश्रित्य तिष्ठन्ति वेदप्रतिपाद्यत्वेन हरिं मन्यन्ते, केचन पूर्णानुग्रहभाजः पुष्टिस्थाः केवलं वेदनिरपेक्षं हरिमेव समाश्रित्य तिष्ठन्ति, तदुक्तं "ते नाधीतश्रुतिगणा" इति "केवलेन हि भावेने"ति च, तत्रापि ये ज्ञानसहितास्तेपि वेदं भगवदाज्ञात्वेन मन्यन्ते न तु प्रधानत्वेनेति, अग्रे श्रीभागवते पञ्चमाध्याये ज्ञानशक्त्याश्रयनिरूपणे "स्वप्ने यथा शिरश्छेद"मितिश्लोके स्वप्नदृष्टान्तेनात्मनोजरामरत्वं निरूप्य "घटेभिन्न" इति (अ० ५) श्लोके आकाशदृष्टान्तेन स्थूलसूक्ष्मदेहद्वयविनाशे पुनर्ब्रह्मतापत्तिं निरूप्य जीवस्य संसारोद्भवप्रकारमाह "मनः सृजति वै देहा"निति श्लोकेन । तत्रेयं वस्तुस्थितिः सृष्टेः पूर्वकाले एक एव भगवान् यदा रमणेच्छां कृतवान् तदा स्वसामर्थ्यरूपया

तत्राऽऽश्रयस्य स्वरूपं हि स्पष्टमत्र निरूप्यते ॥६॥

यस्य लीला नव प्रोक्ताः स शुद्धः पुरुषोत्तमः।

आश्रयः सर्वभूतानामधिको द्वादशात्मकः ॥७॥

त्रयोदशस्ततः प्रोक्तः स्कन्धार्थोऽयं विबुध्यताम्।

अध्यायत्रितयेनापि स एवाऽर्थोऽनुवर्णितः ॥८॥

वचोविभूतीरित्युक्त्या भिन्नाश्रयविनाशकः।

अ. १ पञ्चप्रकारान् व्युत्पादयन्तः प्रथमस्याध्यायसङ्ख्यायाऽवगतिरित्याहुः–तत्रेत्यादिद्वाभ्याम्। आश्रयस्येति नवलक्षणलक्ष्यस्य। अत्रेति स्कन्धे। द्वादशात्मन इति। शब्दरसरूपात्पुराणादर्थरसरूपादक्षराच्च। विबुध्यतामिति सङ्ख्यया ज्ञायताम्। शब्देनाबोधने संख्यामात्रमप्रयोजकमित्यतः प्रकरणेन तमर्थं स्फुटीकुर्वन्त आहुः–अध्यायेत्यादि। कथमित्याकाङ्क्षायां तन्निर्द्धाराथमाहुः–वच-इत्यादि। *'कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्। विज्ञानवैराग्यविवक्षया विभोर्वचोविभूतीर्न तु पारमार्थ्यम्' इति श्लोके लोकेषु यशोविताय

---

जगत्कारणभूतया मायया स्वात्मन एव सर्वं जडजीवन्तर्याम्यात्मकं जगत् सृष्टवान् जडे चिदानन्दयोर्जीवे स्वानन्दस्य च तिरोभावं कृतवान्, अन्तर्यामिणि तु सच्चिदानन्दान् प्रकटानेव स्थापितवान्, इति प्रकारेण त्रिधा स्वांशा उत्पादितास्तथापि सर्वेषां ब्रह्मरूपत्वाद् वैचित्र्याभावे तु न रमणं सम्पन्नम्, तदा पूर्वोक्तमायांशभूता मोहिका माया जीवे स्वरूपाज्ञानं सम्पाद्य भोगाभिनिवेशात्मकं पुनः सृष्टवती, तदुक्तं चतुर्थस्कन्धे पुरञ्जनोपाख्याने "नानुरूपं यदाविन्ददभूत् स विमना इवे'त्यनेन ततो मनोदेहान् देवतिर्यगादीन् गुणान् सत्त्वादीन् कर्माणि च विहितनिषिद्धान्युच्चावचानि च सृजति येन जीवस्याहम्ममाभिमानरूपः संसारः, तदा वैचित्र्ये जाते भगवतो रमणं सम्पन्नमिति, ननु भगवत्सृष्टे देहादिप्रपञ्चे मनसः स्रष्टृत्वं कथमिति चेत् तत्राह 'रमन' इति जीवसम्बन्धित्वेन तद्भोगार्थं सृजतीत्यर्थः, यथा ब्रह्माण्डे भगवता सामान्येनोत्पादितेप्यवान्तरो कर्पुकः स्वादृष्टानुसारेण पुनः स्वकर्मणोत्पादयन्ति तद्वत्।

* स्कं० १२–अ० ३–श्लो० १४॥

आश्रयो लौकिकानां तु लोको धर्मोऽथवा पुनः ॥९॥
उभयं नष्टमधुना द्वाभ्यां तत्तु निरूपितम्।
शूद्रपर्यवसानेन लोकनाशो निरूपितः ॥१०॥
अधर्मस्य च सम्पूर्त्या धर्मनाशोऽपि बुध्यताम्।
एवं पूर्वाश्रये नष्टे कृष्ण एवाश्रयो मतः ॥११॥

परेषुपां परं भगवन्तं शाश्वतां महीयसाम् इमाः कथा विभोर्विज्ञानवैराग्यविवक्षया एकादशस्कन्धे भगवतोक्तं यत्कार्यस्य कारणाभिन्नत्वेन करणात्मकतारूपं विशिष्टज्ञानं भेदस्य काल्पनिकत्वेन लौकिकानामवस्तुत्वात्तेभ्यो वैराग्यं च तदुभयविवक्षया ते तुभ्यं कथिताः। अत इमा इशानुकथान्ताः कथा वचोविभूतीः विभूतिविषयत्वेन भगवदनुवर्णनशेषभूता इत्युक्त्येति कथनेन भिन्नाश्रयविनाशको भिन्नः स्वातिरिक्तो य आधार उपजीव्यश्च लोके प्रतीयते तस्य नाशकः कालाख्यचेष्टया निवर्त्तकः। तेन निरङ्कुशतया सर्वाधारः सर्वोपजीव्योत्र सिद्ध इत्यर्थः। तथा चास्मिन् श्लोके विभोरेवमाश्रयत्वे सिद्धेः को विभुरित्याकाङ्क्षायां'यस्तूत्तमे'त्यग्रिमे 'कृष्णेऽमलां भक्तिमभीप्समान' इत्यनेन तस्य कृष्णत्वनिश्चायनादुत्तमश्लोकगुणानुवाद इत्यनेन तस्य सधर्मकत्वनिश्चायनाच्च स एवाश्रय इति निर्द्धारितम्। गीतायामपि 'अक्षरादपि चोत्तम'इति। श्रुतावपि 'अक्षरात्परतः पर' इतिकथनादिदमेव निर्द्धारितम्, अतः स एवाश्रय इति भावः। एवं वाक्येनेममर्थं दृढीकृत्याध्यायत्रये यथा स आश्रयोऽनुवर्णितस्तं प्रकारं वक्तुं पूर्वं द्वयोरर्थमाहुः–आश्रय इत्यादिद्वाभ्याम्। लौकिकाः प्राकृतास्तेषां लोकः प्रवाहरूप आश्रय उपजीव्यः पुनः किञ्चित्तत उत्तमानां धर्मस्तथा, द्वाभ्यामध्यायाभ्यां तदूद्वयं नष्टं निरूपितम्। ननु प्रवाहधर्मस्य नेदानीमपि दर्शनात् कथं निरूपितमित्याकाङ्क्षायामाहुः–शूद्रेत्यादि। शूद्रपदं शुचा द्रवतीति यौगिकार्थस्यात्र सङ्ग्राहकम्। असुरवर्णत्वेन दुष्टानां दुःखाद्यर्थानामप्युपलक्षकं वा। अतस्तत्पर्यवसानेन तस्योपजीव्यतानाशो निरूपितः। एवं दम्भादिबाहुल्येन धर्मनाशोऽपीति यथा'कथा इमा'इतिश्लोके कथाविषयाणां विभूतित्वबोधनेन तेषां निरङ्कुशाधारत्वरूपमाश्रयत्वं निवारितमित्यर्थः। तथाऽध्यायद्वये कालस्य लोकधर्मनाशकत्वकथनेन तयोरुपजीव्यत्वरूपमाश्रयत्वं निवारितमित्यर्थः ॥३॥१०३॥

(अ. ३) तावता कृष्णस्य भगवतः कथमाश्रयत्वमत्र सिद्धमित्यतस्तृतीयस्यार्थमाहुः–एवमित्यादि। तथा च तृतीयाध्याये राज्ञा कलिदोषनाशोपाये पृष्टे 'पुंसां कलिकृतान् दोषा' नित्यादिभिस्तत्तरं वदता श्रीशुकेन भगवानेवोपजीव्यतयाऽऽश्रयो विचारित इत्यतः

पूजादिनाऽनुरूपेण नाम्नां श्रवणकीर्त्तनैः।
त्रिष्वर्धे दोषराहित्यं गुणाश्चापि तथाऽपरे ॥१२॥
आश्रयो भगवान् कालं तावन्तं चेत्प्रतीक्षते।
कल्किर्भविष्यति तदा सर्वसाधारणो मतः ॥१३॥
उपलक्षणमेतद्धि नामपूजादिना हरिः।
यदा तुष्टः प्रसन्नः स्यादात्मानं च प्रदर्शयेत् ॥१४॥
तदाऽश्रयः पूर्णरूपो भविष्यति न संशयः।
विलम्बे कारणं गर्वस्तदर्थं दोषवर्णनम् ॥१५॥
तन्निवृत्तिश्च भवतीत्यग्रे कीर्त्तनमीरितम्।
एवं त्रिभिर्मुख्यरूपो नवानां शुद्धिलक्षणः ॥१६॥
हरिराश्रय इत्युक्तो मुक्तानामिति वर्णितम्।

सिद्धमित्यर्थः। तस्याश्रयणे प्रकारद्वयमाहुः-पूजादिनेत्यादि। कालावधिमाहुः-त्रिष्वत्यादि। त्रिषु पूजादिषु कृतेषु अर्द्धे कलिपूर्वार्द्धं दोषराहित्यं गुणश्चापि भगवत्प्राप्त्यायामाभावरूपो गुणश्चापिशब्दात्परप्राप्तिः। यथा पूर्वार्द्धे एतत्त्रयं तथा परे कल्युत्तरार्द्धं भगवान् साक्षादेवाश्रयः। तत्र विशेषः। कालं तावन्तं चेत्प्रतीक्षते तावत्पर्यन्तं चेद्दयां न करोति तदा कल्किरूपेणावतीर्य तथेत्यर्थः। मत इति आश्रयो मतः ॥११॥१३॥ नन्वासुरसम्पत्तेर्निबन्धार्थं तान्न तस्यां दया। दैव्यां सम्पत्तौ किल तदपेक्षा। तस्यामपि चेत्कालप्रतीक्षा तदा कलिदोषविगमनं मुधैवेत्यत आहुः-उपलक्षणमित्यादि। एतत्कालप्रतीक्षणं दयाभावस्योपलक्षणं यदि न दययति तदा कल्क्यन्तमिति। किं तर्हि पूर्वमपि दययति तत्र हेतुः--हीत्यादि। ननु यद्येवं तदा प्रसादे विलम्बः कुत इत्याकाङ्क्षायामाहुः--विलम्बे इत्यादि। दोषवर्णनमिति अहन्तादिरूपराजादिदोषवर्णनम्। तथा चोक्तोर्थः। सर्वोऽपि दोषवर्णनतन्निवृत्तिप्रश्नतदुत्तरैः स्फुटतीति नात्र शङ्कालेश इत्यर्थः। एवमवान्तरतात्पर्यमुक्त्वाध्यायत्रयसिद्धमर्थमाहुः-एवमित्यादि। मुख्यं सर्गादिनवकनियामकं रूपं यस्य नवानां सर्गादिमुक्त्यन्तानां शुद्धिर्निष्कृष्टं स्वरूपं लक्षणं यस्य यदि हि यथोक्तरूपा नवापि ज्ञाताः स्युस्तदा सर्वान् विहाय हरिमेव सर्वात्मनाऽऽश्रयेत। अतो नवानां निष्कृष्टस्वरूपं तन्नियामकस्य मुख्यरूपस्यैव लक्षणम्, अतः स तथा तादृशः स मुक्तानामाश्रय इति त्रिभिः सिद्धमित्येवं शब्देन बोधनात्स्कन्धाध्यायसङ्ख्यया तस्य तथा बोधनं युक्तमेवेत्यर्थः ॥१४॥१६॥ एवं नवभिः प्रथमं प्रकरणं विचारितम् ॥

अतः परं द्वितीयस्तु जगदाश्रय उच्यते ॥१७॥
यतः सर्वं समुत्पन्नं यस्मिंश्चैव प्रलीयते।
पृथिवीव घटाद्यादेः स बहिर्ज्ञायते न हि ॥१८॥
अन्तश्चाऽपि स विज्ञेयस्तदैव सफलो भवेत्।
इति प्रलयकथनं चतुर्धा सृष्टिरत्र हि ॥१९॥
पूर्वोक्तैवाऽतिदिष्टा हि क्रियाशक्तिर्निरूपिता।

अ. ४ द्वितीयं विचारयन्ति–अतः परमित्यादि। पृथिवीव घटाद्यादेरिति। घटस्यादिरुपादानं मृत्पिण्डः कर्तृक्रियाव्याप्तस्तस्याप्यादिः पूर्वरूपं मृत् तस्याप्याश्रयः पृथिवी, तद्वत्। तथा च जगदुपादानं प्रकृतिः कालो वा तस्यादि बृहत् तस्याप्याश्रयः परतरः पर इत्यर्थः। स बहिर्ज्ञायते न हीति। 'यं न निभालयस एषोऽणिमे'ति श्रुत्युक्तः। अन्तश्चापीति। मायिकानामप्यन्तरित्यर्थः। तदैवेति। तेन वैराग्योत्पत्तौ सफलो भवेत्। 'आश्रयः स्वफलं दद्या'दिति बोधयितुं चतुर्धा प्रलयकथनम्। प्रलयश्च सृष्टेरेवेति हि निश्चयेन पूर्वोक्ता द्वितीयाद्युक्ता एकादशे निर्णीतैवात्र 'बुद्धीन्द्रियार्थरूपेणे'त्यादिश्लोकेषु भगवद्रूपा मायिकी चेति द्विविधाप्यतिदिष्टा, हि यतो हेतोरस्मिन्नध्याये आभासश्चेति श्लोकोक्तलक्षणकाश्रयबोधनार्थं क्रियाशक्तिर्निरूपिता।

अत्रायमर्थः। पूर्वाध्याये 'युगानि युगमानञ्चे'ति यत्पृष्टं तदुत्तरमत्र वक्तव्यम्। तत्र युगस्वरूपं पूर्वाध्याये दर्शितम्। कालगतिर्युगमानञ्च तृतीयस्कन्धे दर्शितमिति तदुद्वय कल्पप्रलययोः स्वरूपं मानञ्च चतुर्युगेत्यादिभिस्त्रिभिराह–तेनोत्तरं पूरितम्। तदनन्तरं 'द्विपरार्द्धे त्वतिक्रान्ते'इत्यादिना प्राकृतिकात्यन्तिकनित्याः प्रलया यदुच्यन्ते तद्भगवतः क्रियाशक्तेरेव बोधनार्थम्। क्रियाशक्तिश्च सृष्ट्यादिभेदेन त्रिधा। सा पूर्वस्कन्धेषूक्तापि प्रलयांशे सम्यङ् नोक्ता। यत एकादशेऽन्तरिक्षवाक्ये महत्तत्त्वान्त एव प्रलय उक्तः। भगवद्वाक्येऽपि 'कालो मायामये जीव' इति श्लोके 'विकल्पापायलक्षण' इतिकथनाद्भेदप्रतीत्यभावमात्रमेवोक्तमिति। तदत्र 'द्विपरार्द्धे त्वतिक्रान्ते' इत्यादिना तत्कालकथनपूर्वकमनुद्याव्याकृतस्य शिष्टत्वात्तत्स्वरूपं चोक्त्वाऽग्रे पुरुषाव्यक्तशक्तिप्रलयमात्रकथनेन पुरुषाव्यक्तसत्ताबोधने केवलस्य ब्रह्मणो नाश्रयत्वसिद्धिरिति तदर्थमात्यन्तिकलयादिना तां क्रियाशक्तिं सम्यग्बोधयितुं पूर्वमात्यन्तिकलयस्वरूपं द्वादशभिः प्रपञ्चयति। तत्र प्रपञ्चस्य ब्रह्मात्मकत्वमविदुषः साङ्ख्यान्दूषयितुं प्रथमप्रहन्तया ममतया च प्रतीयमानानां बुद्ध्यादीनामवस्तुत्वमाह–बुद्धीत्यादि(श्लो०२३)। अत्र बुद्धीन्द्रियार्थाः प्रतीयमानरूपेणावस्तुभूता आद्यन्तवत्त्वाद्

दृश्यत्वाच्च, शुक्तिरजतवदिति साधने,वस्तुभूता घटादिवदिति दृष्टान्तेन हेत्वोः साधारणसमतस्तद्विहायैवं प्रयोक्तव्यम्। आत्मरूपं ज्ञानं अहम्ममत्वेन प्रतीयमानं बुद्धीन्द्रियार्थाश्रयं बुद्धीन्द्रियार्थवृत्तिकत्वात् शुक्तिरजतवृत्तिकतदाश्रयज्ञानवत्, यन्नैवं तन्नैवं घटज्ञानवदिति। आश्रयत्वं तत्र विर्पयितया बोध्यम्। ननु शुक्तिरजतस्य स्वतोऽवस्तुत्वाज्ज्ञानवृत्तित्वेनात्मरूपस्य ज्ञानस्य तदाश्रयत्वसिद्धिः,प्रकृते तु बुद्ध्यादीनामर्थक्रियाकारितया घटादिवद्वस्तुत्वेन ज्ञानवृत्तित्वाभावात्कथं विवक्षितज्ञानस्य तद्विषयित्वरूपमाश्रयत्वमिति शङ्कायां तेषामवस्तुत्वं साधयति दृश्यत्वेत्यादि। बुद्धीन्द्रियार्थाः स्वेन रूपेणावस्तुभूता आत्मरूपज्ञानदृश्यत्वे तदव्यतिरिक्तत्वे च सत्याद्यन्तवत्त्वात्, यद्यद्दृश्यत्वे यदव्यतिरिक्तत्वे च सत्याद्यन्तवत्तत्तदपृथक्त्वेनैव वस्तुभूतं न स्वतः। ज्योतिर्दृश्यज्योतिरव्यतिरिक्तदीपचक्षू रूपवदिति। एतदेव निगमयति एवमित्यादि। न स्युरिति। अत्रापि पृथगित्यनुषज्जते। ऋतादिति आत्मरूपाज्ज्ञानात्। एवमाध्यात्मिकादीनां बुद्ध्यादीनां पृथगसत्त्वं द्रष्टृज्ञानरूपत्वं च साधयित्वा यदा बुद्धेः पृथगसत्त्वं तदा तदवस्थानां सुतरां तथात्वमित्याह बुद्धेरित्यादि। इदमिति बुद्ध्यवस्थाभेदकृतम्। यतो बुद्धिरेव जागर्ति स्वपिति सुस्वपिति च, न त्वात्मा, वृत्तित्रयसाक्षित्वात्। अतो बुद्धौ विद्यमानमिदं नानात्वम्। अहं जागर्मीत्याद्यभिमानरूपत्वात्मत्यगात्मनि मायामात्रमित्यर्थः। नन्वध्यासस्य क्वचित्प्रास्तवदर्शनानन्तरभावित्वाद् बुद्ध्यादीनां क्वाप्यसत्त्वे तत्प्रतीतेरप्यभावेन तदध्यासोऽपि कथं स्यादित्याकाङ्क्षायां बुद्ध्यादीनामन्यत्र सत्त्वं साधयितुं विश्वस्य ब्रह्मण्युत्पत्तिमाह–यथेत्यादि। ननु विश्वोत्पत्तिनाशौ न दृश्यावतस्तस्य कथं कादाचित्कत्वमित्यत आह–अवयव्युदयाप्ययादिति। अवयवोऽशांशः, न तु कारणम्। तथा च विश्वं कादाचित्कमाद्यन्तवत्त्वात्, आद्यन्तवत् सावयवत्वाद् व्योम्नि जलधरवदिति सावयत्वानित्यत्वयोर्व्याप्तेरांशिकनाशस्य दर्शनाच्च विश्वमप्यनित्यमित्यर्थः। एतेन प्राकृतिकप्रलयेऽपि युक्तिरुक्ता। तेन जलधरवदनित्यत्वेऽपि विश्वस्य सत्यत्वेन ब्रह्मणि सत्त्वाद् बुद्ध्यादीनां प्रथमं तत्रानुभवे पश्चादात्मनि तदध्यास इत्यहन्तया ममतया चाध्यस्तास्ते मायामात्रा एवेत्यर्थः। ननु व्योमजलधरदृष्टान्तेन विश्वं ब्रह्माधिकरणकं पृथगेव सिद्धमिति बुद्ध्यादीनामनित्यत्वं नित्यादात्मनो भिन्नत्वं च सिद्धमिति सांख्यमतात्को विशेष इत्याकाङ्क्षायामाह–सत्यमित्यादि। अत्रावयवशब्दः कारणवाची। सत्यं सत्यपदवाच्यं ब्रह्म सर्वावयविनामवयवः कारणं प्रोक्तः वाचारम्भणवाक्ये उक्तः। अतः प्रकृत्यादेरप्यवयवित्वात्तस्यापि ब्रह्मैवावयवः। तथा च श्रुतौ ब्रह्मण एव कारणत्वकथनात्प्रतीतः। पृथगपि

१ 'विपयतया' पाठभेदः।

तद्भिन्नं न ब्रह्मणः पृथगित्येष विशेष इत्यर्थः । ननु श्रुतिर्वदति तथापि ब्रह्मणो विश्वोपादानत्वं कथं बुद्ध्यारोहतीत्यतस्तर्कमाह–विनेत्यादि । विना विशेषण । तथा च यदि प्रकृत्यादयो मूलकारणरूपाः स्युस्तदार्थेन विश्वेन सह ज्ञानिभिः प्रतीयेरन्, लौकिकद्रष्टृभिर्यथा पटाङ्गभूतास्तन्तवः प्रतीयन्ते तद्वत् । तथा च यतो ज्ञानिनां ते न प्रतीयन्तेऽतो न तेऽवयवाः, सत्यं तु प्रतीयत इति तदेवावयव इतिप्रामाणिकप्रत्यक्षसिद्धात्तर्कात्तस्य बुद्ध्यावारोहः । इदानीमपि सदन्वयव्यतिरेकयोर्विश्वस्मिन्नुपलम्भादिति भावः । तथा च सत् सर्वावयवः सर्वस्मिन् प्रतीयमानत्वात्, सर्वाभावेऽपि प्रतीयमानत्वाच्च, यदेवं तदेवम्, पटदशायां तत्प्रागभावध्वंसदशायां च प्रतीयमानपटाङ्गतन्तुवत्, यन्नैवं तन्नैवम्, तथा अप्रतीयमानकपालत्वदिति तर्कमूलमनुमानमपि तथा बुद्धिजनकम् । सत्पदेन सत्यं ब्रह्मैवोच्यते न प्रधानमिति त्वीक्षत्यादिसूत्रैरेव विचारितम्, अतः सत्यमेव सर्वकारणत्वात्सर्वाश्रय इति साधितम् । ननु ब्रह्मवादिनामेषा प्रतीतिर्न साङ्ख्यानाम् । अतः श्रुतिरपि प्रायपाठबलादन्यथा नेयेत्याकाङ्क्षायां साङ्ख्यप्रतीतेर्भ्रमत्वमुपपादयति–यत्सामान्येत्यादि । यत्प्रधानं सामान्यविशेषाभ्यां कारणकार्यस्वरूपाभ्यामुपलभ्येत सः पदार्थो भ्रमः अभिमानमात्रो न वस्तुतस्तत्र हेतुः–**अन्योऽन्यापाश्रयादिति । अयमर्थः ।** साङ्ख्यमते हि प्रधानस्य कारणत्वं स्वरूपं च केवलं कार्यलिङ्गकानुमानसिद्धं न तु प्रत्यक्षशब्दाभ्यां गम्यते, स्थूलात्पञ्चतन्मात्रस्य बाह्याभ्यन्तराभ्यां तैरहङ्कारस्य, तेनान्तःकरणस्य, ततः प्रकृते'रितितत्सूत्रात् । तन्मते च त्रीण्येव प्रमाणानि 'प्रत्यक्षानुमानशब्दाः प्रमाणानी'तितत्सूत्रात् । एवं सति अप्रत्यक्षेणाशाब्देन महत्तत्त्वेन कार्येण तादृशस्य प्रधानस्य स्वरूपं कारणता च सिद्ध्यति । तेनाप्रत्यक्षेणाशाब्देन प्रधानेन महत्तत्त्वस्वरूपं तत्कार्यत्वं च सिद्ध्यतीति प्रत्यक्षशब्दाभ्यामनुजीवितमन्योन्याश्रयग्रस्तं तदनुमानप्रयोजकमतः प्रधानप्रतीतिर्भ्रम इत्यर्थः । एवञ्च **श्रीधरेण मायावादिमतमनुसृत्य ब्रह्मणः कारणत्वं नातीव सत्यमित्युक्त्वाऽवधित्वव्यापकत्वगुणगुणिभावविशेषणविशेष्यभावानामप्यन्योन्याश्रयग्रासादवास्तवत्वमुक्तं तदसङ्गतमिति बोध्यम् ।**

ननु कारणस्वरूपस्य न कार्यस्वरूपसापेक्षतेति कारणस्वरूपं निर्बाधमेव, एवं कार्यस्वरूपस्य कारणस्वरूपसापेक्षत्वेऽपि तस्य पाश्चात्यत्वेनोत्पत्तावन्योन्याश्रयाभावात्तत्स्वरूपमपि निर्बाधम् । एवमुभयोः स्वरूपे सिद्धे कालविशेषं स्वरूपद्वयं चावलम्ब्य जाय-

माना कार्यकारणभावप्रतीतिरपि न भ्रमरूपा, न च कालविशेषविचारे पूर्वपश्चाद्भावप्रतीते-रन्योन्याश्रयग्रस्तत्वादसिद्धिरितिवाच्यम्। तस्या अपि तत्रितयस्वरूपसापेक्षत्वेन तद-भावादिति शङ्कायामाह–सर्वमाद्यन्तवदवस्तु यदिति। अयमर्थः। दिक्कालावाका-शादिभ्य' इति तत्सूत्राचन्मते सूर्यादिपरिस्पन्दोपाधिरूपो जन्य एव काल इति गुण-क्षोभकस्याभावान्महत्तत्वोत्पत्तिरेव दुर्घटेति यत्तत्रैमङ्कुरभूतं महत्तत्त्वं तदप्याद्यन्तवत्त्वेन रूपेणावस्तु, तथा च तदभावे ततश्च कालस्याप्यभावेन कारणकार्यरूपसामान्यविशेष-भावाभावात्ताभ्यामुपलभ्य उपलभ्यमानं प्रधानमपि भ्रम एवेत्यर्थः। ननु मास्त्वेवं प्रधानसिद्धिस्तथापि स्वभावादेव परिणममानं प्रधानं पुरुषः पश्यतीत्यङ्गीकारे प्रत्यक्षादेव सिद्धावनुमानमप्युपोद्बलकमस्त्विति चेत्तत्राह–विकार इत्यादि। विकारो महान् सः ख्यायमानः प्रत्यगात्मना प्रत्यक्षीक्रियमाणोऽपि प्रत्यगात्मानं विना न निरूप्यो-ऽस्ति। अयमर्थः। स्वभावादेव परिणामे तत्तस्य नित्यत्वात्सदा परिणामः स्यात्। ततश्च महत्तत्त्वप्रधानयोः कार्यकारणभावो न स्यात्। प्रधानस्य सर्वांशपरिणामे प्रकृतित्वं चापेयाद् अत आंशिकोऽनित्यश्च परिणामो वाच्यस्तथा सति न केवलस्व-भावसाध्यः। अत इतराभावात्प्रधानस्य प्रत्यगात्मन ईक्षणेनैव वाच्यः। अतः प्रत्यगात्मनैव स निरूप्यः। एवं सति स्वातिरिक्तं प्रधानं स पश्यतीत्यत्र मानाभावा-त्स्वमेव तथा पश्यतीति मन्तव्यम्। तथा सति विकारः स्वेन रूपेणावस्तुभूतः प्रत्यगात्मदृश्यत्वे तद्व्यतिरिक्तत्वे च सत्याद्यन्तवत्त्वाद्दीपादिवदिति पूर्वोक्तानुमानेन तस्याऽवस्तुत्वाद्भ्रमत्वमित्यर्थः। ननूक्तं ख्यातिरपि यथार्थानुभवं विनाऽनुपपन्नेति तत्राह–अणुरपीत्यादि। 'अणुरपि स्याच्चेचित्सम'श्चित्सर्वः मूलचिदात्मकः श्रुत्युक्तरीत्या स्यात्र तु जडः। समः सर्वपर्यायः। तथा च मूलचिद्रूपे ब्रह्मणि तस्य सिद्धत्वान्न ख्यात्यनुपपत्तिरित्यर्थः। तत्र दृष्टान्तः आत्म-वदिति। तथा च यथा 'बहु स्यामि'तीच्छयाऽग्निविस्फुलिङ्गवद्विभागेनात्मनानात्वं तथा 'प्रजायेये'तीच्छयोर्णनाभितन्तुवद्विकारोऽपीत्यर्थः। ननु सिद्धं तर्हि ब्रह्मण एवं विभागान्नानात्वमित्यत आह–न हीत्यादि। एवं द्रूरूप्येऽपि सत्यस्य ब्रह्मणो हि निश्चयेन नानात्वं न। अविद्वान् शुद्धब्रह्मज्ञानरहितः साङ्ख्यवादी यदि ब्रह्मणो नानात्वं मन्येत तदा छिद्रयोर्व्योमवद्वस्तु यथा घटाद्युपाधिना विभज्यमानस्याका-शस्य निरवयवस्य नानात्वं भासते न तु भवति, तद्वदिच्छया विभज्यमानं ब्रह्माविदुषां नाना भासते, न तु भवति, विभाजकक्रियाया अभावात्। तदभावे च स्वरूपनानात्वा-भावादिति। यदि च व्युच्चरणादेर्द्विधापातादेश्च श्रवणादुपाधिपूर्वकालीनां विभाजक-

क्रियामाकलय्य तथा ब्रह्मस्वरूपनानात्वं मन्यते तदा ज्योतिषोर्वातयोरिवास्तु। यथा हि विभाजकस्वक्रियाभेदाद्दीपचक्षुर्भेदेन भिद्यमानमपि ज्योतिर्न भिद्यते। यथा च वायुर्नानादेशेषु यानपि न स्वरूपतो भिद्यते, तथा ब्रह्मापि स्वक्रियया विभज्यमानं न भिद्यत इत्येवं तावन्मात्रे दृष्टान्तौ। नन्वत्रापि दृष्टान्तद्वयेंऽशभेदात् स्वरूपभेद एव पर्यवस्यतीत्यरुच्या दृष्टान्तान्तरमाहुः-यथेत्यादि। सुवर्णं यथा नाना कालेषु नानाऽऽकृतिभिर्विभज्यमानमपि न नाना तथा ब्रह्मापीत्यर्थः। एतवान् परं विशेषः। दृष्टान्ते परक्रियया विभागो दार्ष्टान्तिके तु स्वक्रियेति। वस्तुनानात्वाभावस्तूभयत्रापि तुल्यः। एतदेवैकादशे भगवता 'यथा सुवर्णं सुकृतं पुरस्ता'दिति श्लोकेनोपदिष्टम्। एवं सति पूर्वश्लोकोक्तदृष्टान्ता यथाक्रमेणोपाधिवादभेदवादविशिष्टाद्वैतवादानामेकदेशसबोधनार्था इति पर्यवस्यति। अत एव ते भगवता नोक्ता इति। एवमाश्रयत्वनिर्द्धाराय ब्रह्मवादं निर्णीयात्यन्तिकलयस्वरूपबोधनाय ब्रह्मवादेनैव बन्धमोक्षप्रकारं द्वाभ्यामाह यथेति। घन इति च। तावुक्त्वाऽऽत्यन्तिकस्वरूपमाह-यदैवमित्यादि। एवमिति उक्तरीत्या। एतेनेति ब्रह्मवादसिद्धेन। तथा च साङ्ख्योक्तनित्यानित्यविवेकजन्यो बन्धच्छेदो ब्रह्मवादपर्यवसानाभावान्नात्यन्तिकशब्दवाच्य इति बोधितम्। अग्रे नित्यः प्रलयस्तु कालिकावस्थाभेदकृतः स्फुट एव। एवञ्च नैमित्तिकप्राकृतियोः प्रतिसङ्क्रमरूपा, आत्यन्तिके तु सुवर्णदृष्टान्तेन नानात्वनिवारिकाऽच्युतात्मानुभवोऽवतिष्ठत इति कथनाद्रूपान्तरापत्तिजनिका च नित्ये च कालस्य चेष्टारूपत्वात्स्थितिकीत्येवं चतुर्विधा क्रियाशक्तिः क्रियाश्रयत्वबोधनायैतदध्यायसमाप्तौ 'कालस्य गतिरीदृशी'ति 'लीलाकथास्ते कथिता' इतिवदद्भिः श्रीशुकैर्निरूपितेति कारिकार्थः सम्पन्नः। अत्र प्राकृतिके पुरुषाव्यक्तयोः स्थितिमुक्त्वा यदात्यन्तिके नानात्वं निवारितं तेन सुबालोपनिषत्प्रकाशिताः प्रलयप्रक्रिया उपबृंहिता। तत्र हि पृथिव्याद्यव्यक्तान्तं लयमुक्त्वाऽ'व्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देवे एकीभवति दिव्यो देव एको नारायण' इति कथनेनाक्षरान्तं लयस्तमसस्तु परे एकीभाव इति प्रव्यान्तरेण लयैकीभावयोर्विभागाभावैकीभावात्मा स्वरूपभेद इति तेनाऽपि ब्रह्मवादस्यैव सिद्धेरिति। एतेनात्यन्तिकस्य सृष्ट्यादित्रितयक्रियाविलक्षणतत्रितयक्रियात्मकत्वं बोधितमिति ब्रह्मलक्षणेऽपि न न्यूनता। इदं चाश्रयान्तःपातीत्याश्रयस्यापि ज्ञापनमिति न क्वापि शङ्कालेशः ॥१६।२९३॥ एवं त्रिभिश्चतुर्थाध्यायो विचारितः॥

१ भाव।

**ज्ञानशक्तिर्द्वितीयेन वैदिकस्त्वयमाश्रयः ॥२०॥**
**पूर्वोक्तस्तान्त्रिकश्चैव बाह्याभ्यन्तरभेदतः।**
**द्वाभ्यां प्रतिष्ठितो राजा वाक् पूर्वत्र नियोजिता ॥२१॥**
**आत्मानमभये चैव स्थापयित्वाऽभवत्फली।**

(अ. ५) पञ्चमं विचारयन्ति-ज्ञानशक्तिरित्यादि। श्रीशुकः स्वयं ब्रह्मभूतः पुराणोक्तं भगवन्तमत्रानुवर्ण्यतेऽभीक्ष्णमित्यनेन स्मारयित्वाऽग्रेऽभेदबोधकं ज्ञानमुपदिष्टवान्। अतः प्रकरणस्य द्वितीयेनाध्यायेन ज्ञानशक्तिर्भगवदीया निरूपिता। नन्वत्राश्रये निरूपणीये ज्ञानशक्तिकथनस्य किं प्रयोजनमत आहुः-वैदिक इत्यादि। वेदे हि ज्ञानादेव हि कैवल्यं 'ब्रह्म वेद ब्रह्मैव भवती'त्यादौ ज्ञानमेव तत्प्राप्तिसाधनतया श्रावितम्। तच्च भगवद्दत्तमेव भवति ज्ञानं स्यात् इति जायन्तेय'वाक्यात्। अत आत्यन्तिकप्राप्त्यर्थं सोक्तेत्यर्थः। तर्ह्यनेनैव कार्यसिद्धेः पूर्वोक्ताश्रयकथनस्य किं प्रयोजनमत आहुः-पूर्वोक्त इत्यादि। चः पुनरर्थे। एकादशे पूजाप्रकरणे भगवता 'उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धय' इति द्विधा स्वप्राप्तिकथनेनोभयथापि तस्या अभिप्रेतत्वाद् द्वाभ्यां बाह्याभ्यन्तरभेदत आश्रये प्रतिष्ठितो राजा उक्तरीत्या फली अभवदिति सम्बन्धः। अत एव फलार्थमुभयकथनमित्यर्थः। उभयोर्मध्ये पूर्वोक्त एव शुकस्य मुख्यत्वेनाभिप्रेत इत्याशयेनाहुः-वाक् पूर्वत्र नियोजितेति। अन्यथा समाप्तौ 'एतत्तेऽभिहित'मिति श्लोकेन राजप्रश्नानुवादपूर्वकं चेष्टाकथनं नोपसंहरेत्, अतः क्रियाश्रयविचारेऽपि पूर्वोक्तरीत्यैव ज्ञानं मुख्यमित्यर्थः॥२०॥२१३॥

---

नि० क० विवेचनम्। का. २१. निबन्धेमे चतुर्थपञ्चमाध्यायात्मकद्वितीयप्रकरणसमाप्तौ षष्ठाध्यायस्य पूर्वार्धतात्पर्यकथनार्थं राज्ञः परीक्षितः फलबोधककारिकायां द्वाभ्यां प्रतिष्ठित इत्यादिद्वाभ्यां तान्त्रिकवैदिकद्वयाश्रयजगदाश्रयाभ्यां राजा प्रतिष्ठितः तच्छ्रवणेन पूर्णसाधनो जात इत्यर्थः,। तदेव स्फुटं कथयन्ति वाक् पूर्वत्र नियोजितेति, पूर्वत्र दशलीलाविशिष्टे हरौ वाङ् नियोजिता, तस्मै फलत्वेन कीर्तनकर्त्ता जातः, तदुक्तं "वाचं यच्छाम्यधोक्षज" इत्यनेनात्मानं शुद्धजीवं अभये प्रलयावशेषरूपे जीवस्य प्रवेशस्थानेऽक्षरे ब्रह्मणि स्थापयित्वा तदविभक्तमात्मानमनुभूय फली प्राप्तफलोऽभवदिति, तथा च स्वयमक्षररूपो भूत्वा पुरुषोत्तमस्य कीर्त्तनेन तदानन्दमनुभूतवानित्यर्थः। क्रियाशक्तिरूपैः मर्त्यैर्जीवस्यान्यथारूपनिवृत्तिरान्तरब्रह्मबोधरूपनिवृत्तिः, आन्तरब्रह्मबोधरूपज्ञानशक्त्या स्वरूपप्राप्तिरितिद्विविधसाधनरूपाश्रयोऽक्षरः, पुरुषोत्तमस्तु फलरूपाश्रय इति तृतीयचतुर्थपञ्चमाध्यायेष्वर्थादुक्तं तात्पर्येण ज्ञापितमित्यर्थः।

आश्रयस्य द्विरूपत्वं साधनेन फलेन च ॥२२॥
साधनं द्विविधं चेति त्रयमर्थादिहोदितम्।
आश्रयस्त्रितयं चाऽग्रे सार्धसप्तभिरुच्यते ॥२३॥
त्रितयं तत्र यो वेद स साधनपरो भवेत्।

नन्वत्राश्रयनिरूपणे तत्प्राप्तिसाधनकथनस्य किं प्रयोजनमत आहुः-आश्रयस्येत्यादि। 'भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयै'रित्यादावाश्रयशब्दः साधने प्रयुज्यते, फले तत्र, अतस्तस्यैवं द्विरूपत्वम्। साधनं च ज्ञानात्मकं वैदिकतान्त्रिकभेदेन द्विविधम्। अत अर्थाल्ल्यब्लोपे पञ्चमी। तथा चाभिधेयस्य वस्तुनो वा विचारं कृत्वा इह प्रकरणद्वये त्रयमुक्तमित्यर्थः। एवं त्रिभिः पञ्चमो विचारितः॥

(अ. ६-७) अग्रिमं विचारयन्ति-आश्रय इत्यादि। अग्रे प्रकरणान्तरे आश्रयस्तृतीयलक्षणलक्षितो ज्ञानाश्रयः। त्रितयमाध्यात्मिकादिकं च सार्द्धसप्तभिरादित आरभ्य तावद्भिरुच्यत इत्यर्थः। कथमुच्यत इत्याकाङ्क्षायां तं प्रकारं सार्द्धेनाहुः-त्रितयमित्यादि।

---

का॰ २३ अग्रे षष्ठाध्यायार्थोक्ताश्रय इत्यादि, आश्रयोग्रे पञ्चमाध्यायादग्रे परीक्षितः फलनिरूपणेनोच्यते, अनेन षष्ठाध्यायस्था 'विबुधाः साधुवादिन' इत्यन्तानामष्टश्लोकानां तात्पर्यमुक्तम्, पूर्वोक्ताश्रयद्वयश्रवणेन राज्ञा भगवदाश्रयरूपं फलं प्राप्तमिति, अतः परं सार्धसप्तभिस्त्रितयमाध्यात्मिकादित्रितयमुच्यते, षष्ठाध्याये वेदत्रितयं सप्तमाध्याये-ष्टमादिषु त्रिषु त्रिविधा भक्तिः, दशमादिषु त्रिषु त्रिविधं भागवतमिति, एतत् सर्वमाध्यात्मिकादित्रितयज्ञापकं तथापि भक्तिभागवतयोर्वेदफलत्वान् न त्रितयज्ञापकत्वेन कथनं किन्तु प्रकरणभेदेन पृथगेवोच्यते। अथ त्रितयज्ञानस्य प्रयोजनं वदन्तो "जन्मेजयः स्वपितर"-(श्लो-१६) मित्यारभ्य "संहितामध्यगामिमा" (श्लो-३६) मित्यन्तस्य तात्पर्यमप्याहुस्त्रितयं तत्र यो वेद स साधनपरो भवेदिति, अत्र पितृमारणवैरेण सर्पदहनं मायाकार्यम्, स्वभावतो जन्मजयो न दुष्ट इति ज्ञापनार्थं बृहस्पतिवचनान् निवृत्तिस्तत्पूजनं च, तदुक्तं सूतेन "सैषा विष्णोर्महामाये"त्यनेन, ततो मायामनसश्च निवृत्त्यर्थमात्मवादिप्रवर्तितः श्रवणकीर्तनादिरूप आत्मवादः साधनमुक्तम्, ततोग्रिमेण "न यत्रे"त्यनेन मायामनःकार्यस्य सर्वस्य निवृत्तिपूर्वकमूर्मिराहित्येन क्रीडारूपमात्मवादिनां सुखमुक्तम्, तेनानिष्टनिवृत्तिपूर्वकं साधनदशायामेवेदं फलमिति ज्ञापितम्। ततः साधनस्य फलाव्यभिचारित्वज्ञापनार्थं "परं पदं वैष्णव"मित्यनेन प्राप्यं परमं फलमुक्तम्। ततोहन्ताममताभावरूपमेतस्यैवान्तरं साधनम्, "ततोतिवादा"नित्यनेन ज्ञापकम् ततोग्रे स्वगुरुनमस्कारस्तदुपकारश्चोक्त', तथा चैवं कारिकार्थः, तत्राश्रयप्रकारेषु यो जीवस्त्रितयमाध्यात्मिकादिकं वेद अन्तर्ज्ञानेनापरोक्षं वेदादिशब्दैः परोक्षं वा स साधनपरो भवेत्,

## अन्तर्ज्ञानप्रकारस्तु पूर्वमेव निरूपितः ॥२४॥

आध्यात्मिकादित्रितयं यो वेद स 'आत्माऽक्षरात्मकः आश्रय इति हि लक्षणः विकल्पापाये तल्लक्षणकत्रितयवेत्ताऽयं भवेत्तदा शुकादितुल्यः साधनपरो भवेत्। वाक्यान्वयाधिकरणोक्तरीतिकपरमात्मधर्मरूपभक्तिप्राकट्येन मुख्याधिकारी सन् गुणातीतानि यानि श्रवणादिसाधनानि तत्परो भवेत्, तथा चैतदर्थमेव विभूतिरूपाश्रयपक्षः। एवं भावश्च न सर्वेषां मुक्तानां किं 'त्वक्षरधिया'मिति सूत्रोक्तौपसदन्यायेन तादृशसदित्साविषयाणामेव, 'भगवान् भजता'मितिवाक्यात्। 'यो वेद निहितं गुहाया' मिति तु ज्ञानमार्गं' इति शास्त्रार्थप्रकरणे यदुक्तं तस्याप्य-मेवाशयः। एवमर्द्धेनतत्कथनप्रयोजनमुक्तं जीवशुद्धिस्वरूपज्ञापनायेदं लक्षणमिति। एतादृशस्वरूपज्ञाने किं साधनमित्याकाङ्क्षायामाहुः-अन्तरित्यादि। पूर्वमिति। आत्यन्तिकलयस्वरूपकथने ॥२२॥२४॥

---

स्वात्मानमाध्यात्मिकमाधिभौतिकात् पृथक्कृत्याधिदैविके योजनपरो भवेदिति साधनम्, तत्रास्म-दादिभिः प्रवर्तित आत्मवादः पूर्वोक्त एव वेदादिरूपः, तेनैव प्रथमं त्रितयज्ञानम्, ततः स्वस्याध्यात्मिकरूपस्य सकार्यमायामनसोर्निवृत्त्या भौतिकात् पृथक्करणम्, तत ऊर्मिराहित्येन सुखमवान्तरफलम्, ततो वैष्णवपरमपदप्राप्तिरूपं परमफलं तदेवाधिदैविके योजनमिति ज्ञेयम्, इदमेव प्रकरणे पञ्चमे स साधनपरो भवेत्, अग्रे च 'फलयुक्तां त्रयीं जगावि'ति षष्ठाध्या-यार्थत्वेन चोक्तम्, अपरोक्षमन्तस्त्रितयज्ञानप्रकारस्तु पूर्वं पञ्चमाध्याये ज्ञाननिरूपणेन, चतुर्था-ध्याय आत्यन्तिकप्रलयनिरूपणेन च निरूपितः। वेदैरेव नान्यशास्त्रैरखिलं त्रितयज्ञानमत्र प्रकरणे सार्धाध्यायेन निरूपितम्, अत्र पुराणादीनामपि वेदत्वाभिप्रायेण त्रयीशिष्टविभेदैने-त्यध्यायद्वयार्थकथनम्, एतदेवोपसंहारे "ब्रह्मन्निदं समाख्यातं शाखाप्रणयन"मित्यनेनोक्तम्, अन्यथा पुराणादीनां वेदत्वाभावे "शाखाप्रणयनमिति न वदेत्, एतन्न च षष्ठाध्यायपूर्वार्धोक्तं पूर्वप्रकरणस्यापि फलत्वेनोपयोगि, अस्यापि प्रकरणस्य फलत्वेनोपयोगि, अत उभयोर्मध्ये निरूपितं, तदेव 'देहलीन्यायसिद्ध्यर्थ'मित्यनेन तत्त्वदीपे विवृतमेवं तृतीयप्रकरणं विचारितम् ॥

का-२४. अथ स साधनपरो भवेदित्यस्यात्राभिमेतार्थान्तरमुच्यते त्रितयवेत्तान्येषां पूर्वोक्तफलसाधने तत्पर उद्युक्तो भवेत्, यद्वा कर्मयोगादिषु साधनेषु सत्स्वपि वेदादिभि-स्त्रितयवेत्ता साधनैर्जातसाक्षात्कारोऽन्येषामतादृशानां पूर्वोक्तफलप्राप्त्यर्थमुत्कृष्टं साधनं भवेत्, अतोऽत्र प्रकरणे वेदादिष्वेवाश्रयत्वं पर्यवसन्नम्, तत एवाग्रे वेदशाखाविभागमप्रश्नद्दुत्तरं चेति, अग्रे चतुर्थपञ्चमप्रकरणार्थनिरूपणे अत परं तु द्विविध इति पादोनद्वाभ्यां प्रकरणद्वयार्थस्त्रिविधा भक्तिस्त्रिविधं भागवतं चेतिक्रमेण प्रतिज्ञातम्, तथैव चाग्रे विविच्य निरूपितम्, स्कन्धारम्भे तु 'स पञ्चधात्र निर्णीत'इति प्रतिज्ञाय प्रकारत्रयं द्वितीयस्कन्धोक्तमत्र

## वेदैरेवाखिलं ज्ञानं तत्सार्द्धेन निरूपितम् ।

एवं चेदं कृष्णविषयस्य ज्ञानमार्गीयस्यैव साधनमिति ज्ञापनायाध्यायार्थमाहुः—वेदैरित्यादि । अत्रारम्भे राजवृत्तान्तबोधनं राज्ञो ब्रह्मभावबोधनार्थम् । ततःपद-निरूपणं फलबोधनार्थम् । ततः साधनबोधनं स्वस्य श्रवणाधिकारबोधनाय । एवमर्द्धोऽध्यायः पूर्वस्यैव शेषः । ततः शौनकप्रश्नमारभ्य सार्द्धेन वेदशाखाकथनम्, पुराणस्यापि वेदत्वात्समाप्तौ शाखाप्रणयनमुपसंहृतम् । पूर्वाध्याये ऋक्शाखोक्त्यनन्तरं 'श्रुत्वैवं छन्दसां व्यासं सर्वपापैः प्रमुच्यते' इति फलमुक्तम् । तद्यजुःसाम्नोरपि

---

स्मारयित्वा द्वितीयस्कन्धोक्तं 'स्वाश्रयाश्रय' इति पदं 'सर्वान्तरः पर' इतिपदेन तत्त्वदीपे विवृतम्, तेनैतदेव पदमाश्रयद्वयनिर्णयस्याधिकत्वमत्र सूचयतीति ज्ञापितम्, अत्र 'एवं रूढि'-मिति श्लोकेनाश्रयशब्दस्य रूढ्या वृत्त्याधिकरणरूपमर्थमादाय द्वितीयस्कन्धस्थानि शुकप्रोक्तानि लक्षणानि, अत्र स्कन्धे सूतप्रोक्ते द्वे लक्षणेधिके, ते त्वाश्रयशब्दस्य लोकप्रसिद्धं सहायत्वेन रक्षकत्वेन चोपजीव्यरूपमर्थमादायेत्युक्तम्, तदुदाहरणं तु 'शब्दार्थस्वरूपधृक् वेदो वा भगवान् वे'ति दर्शितम्, लोकस्य स्वेष्टफलसाधने वेदः सहायस्तत्तत्फलहेतुसाधननिरूपकत्वाद् विधिमन्त्रबलेन तत्प्रापकत्वाच्च च, भगवांस्तु रक्षकः साधने प्रवृत्तं पालयत्युपद्रवांश्च दूरीकरोतीत्येवं द्विधोपजीव्यत्वाश्रयशब्दस्य लोकप्रसिद्धोर्थ इत्युक्त्वा 'वेदमेवे'त्यादिना तद् विवृतश्च, तथा सत्युपक्रमानुसरणेन 'शब्दार्थस्वरूपधृक् वेदो वा भगवान् वा' यथायथं चतुर्थपञ्चमप्रकरणार्थौ वक्तव्यः, तत्रापि स्वाश्रयाश्रय इतिपदेन सर्वान्तरत्वं परत्वं च यदुक्तं तदपि योजनीयं तदैवोपक्रमेण सहैकवाक्यता भवति । अत्र तु त्रिविधा भक्तिस्त्रिविधं भागवतं च प्रकरणद्वयार्थं उक्त इति कथमेकवाक्यतेति चेदत्रेदं प्रतिभाति, दशमस्कन्धपूर्वार्धे सप्तदशाध्यायविवृतौ सुबोधिन्यामेकविंशात्मकस्य कालस्य निरूपणे 'ऋतवो धर्मे प्रतिष्ठिता मासा धर्मिण्वि'ति निरूपितम्, तेन ऋतुनिरूपणस्थले धर्मो निरूपितः, मासनिरूपणस्थले धर्मिणो निरूपितास्तद्वदत्राप्यर्थरसरूपो भगवान् भक्तौ प्रतिष्ठितः, शब्दरसरूपो वेदश्च भागवतेऽतो नोपक्रमविरोधः, भक्तौ सत्यामेव भगवद्रसानुभवाद् भागवतस्य च वेदसारत्वाद्, अथ स्वाश्रयाश्रयपदे नाक्षरपुरुषोत्तमभावे वार्थत्वेन विवक्षितौ किन्तु यावत् किञ्चित् स्वाश्रयाश्रयं तेन भक्त्याश्रितं भागवतं भक्तेराश्रयः, एकभक्त्या गृहीतस्यैव भागवतस्य परमभक्तिजनकत्वात्, भक्तेर्भगवतश्चैकत्वविवक्षया 'सर्वान्तरः पर' इत्यनेन स्वाश्रयाश्रय इतिपदं व्याख्यातम्, तेन भक्तिलभ्यो भगवान् सर्वान्तरस्तस्यापि परमं प्रापकं वेदसारं भागवतमिति ज्ञापनात् न क्वापि कोपि विरोधः, अतः सुखेनैवैकवाक्यतासम्भवात् सर्वं युक्तमेवेति ॥

त्रयीशिष्टविभेदेन फलयुक्तां त्रयीं जगौ ॥२५॥
देहलीन्यायसिद्ध्यर्थं शिष्टमेकेन रूपितम्।
एवं सप्तभिरध्यायैरुक्तस्त्रिविध आश्रयः ॥२६॥
अतः परं तु द्विविधस्त्रिभिस्त्रिभिरिहोच्यते।
भक्तिमार्गो भागवतं त्रिविधं त्रिविधं यतः ॥२७॥
आध्यात्मिकादिभेदेन मार्कण्डेये प्रतिष्ठिता।
त्रिविधापि हरेर्भक्तिः कर्ममार्गानुसारिणी ॥२८॥
अत्यन्तनिष्ठामापन्ना स्ववाक्यकरणाद्धरिः

तुल्यं छन्दस्तस्य सर्वत्र तौल्यादित्याशयेनाहुः–फलयुक्तां त्रयीमित्यादिपादद्वयम्। शिष्टमिति अथर्वादि॥२५॥२६॥ एवं सार्द्धस्त्रिभिस्तृतीयप्रकरणार्थ उक्तः॥

(अ. ८) अग्रिमं प्रकरणद्वयविभागमाहुः–अतः परमित्यादिसपादेन। आध्यात्मिकादिभेदेनेति पदमग्रेऽपि युज्यते। प्रथमप्रकरणीयाध्यायत्रयार्थमाहुः–मार्कण्डेयेत्यादिषड्भिः। प्रथमस्यार्थमाहुः-सपादाभ्याम्-कर्ममार्गानुसारिणीति। उपासनामार्गानुसारिणी। 'अभ्यर्कगुरुविप्रात्मस्वर्चयन्सन्ध्ययोर्हरि'मिति। 'आराधयन् हृषीकेश'मिति च तत्र वाक्यात्॥२७॥२८॥ अत्यन्तनिष्ठापन्नत्वे हेतुं गमकं चाहुः–स्ववाक्येत्यादिपादद्वयेन। स्ववाक्यकरणादिति तपोबोधकवाक्यकरणात्। एवं प्रथमाध्यायार्थ उक्तः।

---

का–२९. अग्रे नवमाध्यायार्थोक्तौ तादृशस्येत्यादिनिश्चय इत्यन्तं तादृशस्य पूर्वोक्तरूपस्य मार्कण्डेयस्य भगवद्दत्तो वरः परः द्वितीयनिष्ठारूपः तज्ज्ञापकमाहुरचिन्त्येत्यादि, तादृशो हरिर्यस्मिन् वरानुभवे मार्कण्डेयं तथा दृष्ट्वा मायादुःखनिवर्तककृपापाङ्गेन द्रक्ष्यति परं भक्त्या न प्राप्तः। किन्तु "सकृद् दर्शित'मित्यत्र नारदस्यैव कृपया प्राप्तोतोन्तर्दधे, अत्र क्लेशेन भगवन्दर्शनं ज्ञाननिष्ठात्वज्ञापकमित्यर्थः।

नमः श्रीवल्लभाचार्यपादाब्जनखरोचिषे।
यदीयस्मृतिरेवाशु हृदयान्ध्यविनाशिनी॥

इति श्रीमद्गुरुचरणप्रसादेन यथामतिभाताः प्रकीर्णस्थानेष्वर्थाः लिखिताः।

॥ इति निबन्धकठिनांशविवेचनं समाप्तम्॥

स्वयं तुष्टः समायातस्तादृशस्य वरः परः ॥२९॥
अचिन्त्यानन्तशक्तिर्हि यस्मिन् द्रष्टा हरिस्तथा।
भक्त्या न सिद्ध इति स तत्रैवान्तरधीयत॥३०॥
क्लेशेन भगवन्मार्गो द्वितीय इति निश्चयः।
योऽधिकारी भक्तिमार्गे तत्प्रसादमवाप्य हि ॥३१॥
भक्तश्चेत्सर्ववित्सुस्थस्तृतीयः स उदाहृतः।
भक्तियुक्तो महादेवस्तां दातुं शक्नुयात्तथा ॥३२॥
भक्तस्य यावान् सङ्क्लेशः स मायेत्यपि रूपितम्।

(अ. ९.) द्वितीयस्याहुः-तादृशस्येत्यादि। परः को वेत्याकाङ्क्षायां तल्लक्षणमाहुः-अचिन्त्येत्यादि।

हरिस्तथेति। हरिरेव पर इत्यर्थः। तर्हि तिरोधानं कुतः कृतवानित्याकाङ्क्षायामाहुः-भक्त्येत्यादि। तत्रैवेति मायायाम्। 'नाहं प्रकाश' इतिगीतावाक्यात्। द्वितीय इति आध्यात्मिको ज्ञानमार्गीयः। एवं द्वितीयाध्यायार्थ उक्तः॥

(अ. १०) तृतीयस्याहुः-य इत्यादि। एतेन 'नारायणपरः प्रशान्तात्मा तृतीय' इत्युक्तं भवति। नन्वत्र शिवदर्शनसम्वादाद्युपनिबन्धनस्य किं प्रयोजनमत आहुः-भक्तियुक्त इत्यादि। एतेन महादेवे गुरुत्वबोधनाय तदुपनिबन्धनमित्युक्तम्। ननु द्वितीयनिष्ठायां क्लेशनिरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः-तयेत्यादि। उपाख्यानारम्भे 'स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्नि'त्यादिना प्रलयाभावदशाबोधनात्, समाप्तौ च 'मायावैभवमि'त्युक्त्वा 'एतत्केचिदविद्वांसो मायासंसृतिमात्मनः। अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षत' इत्यनेन मार्कण्डेयानुभूतं मायावैभवम् एतत्केचिदविद्वांसो नृणामनाद्यावर्तितं कादाचित्कमात्मनो मायासंसृतिं प्रचक्षत इति सङ्गमय्यस्य मायासंसृतित्ववादिनामविद्वत्त्वकथनाद्भक्तस्य सङ्क्लेशो यः स मायेति निरूपितम्। तथा च तद्बोधनाय तदुपनिबन्धनमित्यर्थः। एतस्या निष्ठायाः स्वरूपमाहुः-भक्तेत्यादि, इयमिति। माहात्म्यज्ञानपूर्वकं भगवच्छरणगमनं सर्वापेक्षाराहित्यं भक्तमाहात्म्यपूर्वकं तेषु भक्तिः, एकान्तभक्त्या पर्यन्तमित्येवं रूपा। एवं चात्र कर्ममार्गानुसारिणी भक्तिरुभयवित्तनिष्ठा विभाजिकेति

भक्तिमार्गानुसारेण भक्तिर्निष्ठेयमीरिता ॥३३॥
चतुर्थस्त्वाश्रयोऽयं वै श्रीमद्भागवतमन्तिमम्।
पुरुषाराधनं तत्र सूर्यात्कालमपेक्ष्य हि ॥३४॥
श्रीभागवतवाक्येन कथां तत्र च योजयेत्।
आधिदैविकमाख्यातमेतद्भागवतं मतम् ॥३५॥
कथाः सर्वा इहोद्दिष्टा आधिभौतिकमुच्यते।
यथा लोकाः प्रवर्त्तन्ते कथयन्ति परस्परम् ॥३६॥

तत्पूर्वकत्वं निष्ठाद्वयस्य सिद्ध्यतीत्येवं त्रैविध्यम्। आश्रयरूपा भक्तिस्तु तिसृभ्योऽतिरिक्ता स्वतन्त्रभक्तिरूपा। तद्यत एवैतत्त्रितयभेदवेदनमिति हृदिकृत्य प्रकरणमुपसंहरन्ति-चतुर्थ इत्यादि। अयमिति एतादृशदशासाधनानुकूलो भगवान् ॥३३३॥ एवं तृतीयाध्यायो विचारितः।

(अ. ११-१२-१३.) अतः परं पादोनैः पञ्चभिः पञ्चमंप्रकरणं विचारयन्ति-श्रीभागवतमन्तिममिति। तस्य कथं त्रैविध्यं कथं चाश्रयत्वमित्याकाङ्क्षायामाहुः-पुरुषेत्यादि। तत्र तेषु त्रिषु त्रिषु रूपेषु श्रीभागवतवाक्येन सूर्यात्कालमपेक्ष्य पुरुषाराधनं तत्राराधने कथाश्च योजयेद् एतदाधिदैविकमाख्यातम्, सूर्योपाधिककालसापेक्षपुरुषाराधनपूर्वककथायोग आधिदैविकरूपमित्यर्थः। अत्राङ्गद्वयमाद्याध्यायोक्तम्, अङ्गी तु 'अथेममर्थं पृच्छाम' इति वाक्यात्प्राप्यते, सर्वश्रवणाङ्गं पृच्छाम इति तत्रार्थव्यक्तेः। यत्राराधनमुख्यतामभिप्रेयाद् इममध्यायं श्रीभागवतारम्भ एवोपनिबध्नीयादिति। द्वितीयं तद्रहितं केवलकथारूपम्, द्वितीयाध्याये तथैव सिद्धत्वात्। तृतीयं तु स्फुटमेव। तदपि तृतीयेऽध्याये दानदानमाहात्म्यपाठादिमाहात्म्यकथनेन फलेप्सुरूपजघन्याधिकारिबोधनात्। तेनैकमेव श्रीभागवतं कार्यद्वयकरणेन द्विविधम्, पुराणत्वादिकमुभयविच्छेदकमिति त्रिरूपता। आश्रयरूपं सर्ववेदान्तसारत्वेन ज्ञातरि परमानन्दजनकम्। तदेतद् 'सर्ववेदान्तसारं हि श्रीभागवतमिष्यते। तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचिद्'

श्रीभागवतमेवाऽत्र केवलं चेत्समाश्रितम् ।
गङ्गावद्धरिवच्चैव शम्भुवच्च फलिष्यति ॥३७॥
शुद्ध्या फलप्रदानेन भक्तिदानेन च स्वयम् ।
अत्र प्रतिष्ठितं सर्वं तेनाऽयं विवृतः क्वचित् ॥३८॥
श्रीमद्भागवतं समस्तनिगमन्यायैकतत्त्वात्मकं
नानाभ्रान्तितमःकपाटपिहितं सन्तुष्टये सर्वथा ।
नाऽभूदित्यवगत्य निश्चितपदैरुद्दीप्तदीपाकृतिं ।
श्रीमद्भागवतप्रदीपमधुना चक्रे मुदा वल्लभः ॥३९॥

इत्यनेनोक्तम् । एतादृशस्यैवाधिकारिणः पूर्वोक्तभेदत्रयस्यैतदति-रिक्तत्वेन वेदनादिति । चतुर्णां फलबोधनेन तुरीयस्याश्रयत्वं निगमयितुमाहुः–श्रीभागवतमित्यादि । अत्र गङ्गावच्छुद्ध्येति प्रथमस्य, हरिवत्सायुज्यदानेनेति द्वितीयस्य, शम्भुवद्भक्तिदानेनेति तृतीयस्य । इदं च 'निम्नगानामि'तिश्लोके दृष्टान्तमुखेन बोधितम् । स पुनः स्वयं फलिष्यति । तत्र हेतुः, अत्र प्रतिष्ठितं सर्वमिति । तदेतदुक्तं 'श्रीमद्भागवतं पुराणममल'मिति श्लोके । तेन हेतुनायं प्रकारः क्वचिद्विवृतः 'वर्हापीडे'त्यत्र 'गीतकीर्ति'पदेन तद्विमर्शश्लोकेन च विवृत इत्यर्थः ॥३८॥ एतादृशं च श्रीभागवतस्वरूपमात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुर्भा-वात् । श्रीमदाचार्यचरणैरेवावगतमि'ति बोधनायाहुः श्रीमद्भागवतमि-त्यादि । एतेना'त्रिश्वकारतत्त्वार्थदीपमि'ति टीकायां यदुक्तं तदेतन्मूल-कमिति ज्ञापितम् ॥३९॥ शेषमुत्तानार्थम् ।

॥ इतिश्रीद्वादशस्कन्धयोजना ॥

एवं हृदिस्थाच्युतनोदनेन
श्रीवल्लभाचार्यनखेन्दुकान्त्या ।
ध्वान्ते गते वर्त्मनि दत्तपथेऽभूद्
या योजना सा लिखिता मयाऽत्र ॥१॥

यथा भागवतस्याऽर्थो हृदिस्थाच्युतनोदनात् ।
तथा निरूपितः सद्भिः क्षमा कार्या ममोपरि ॥४०॥
युक्तं वा यदि वायुक्तं मया यद्यन्निरूपितम् ।
तत्सर्वं कृष्णचरणे वाक्पुष्पं विनिवेदितम् ॥४१॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपनिबन्धे
श्रीभागवतार्थप्रकरणे द्वादशस्कन्धविवरणं
सम्पूर्णम् ।

---

क्षमन्तु तद्यल्लिखितं मयाऽन्यथा
स्वकर्मदोषादधमेन मौढ्यात् ।
कृपालवोऽस्मत्प्रभवः सदा मां
स्वदासदास्ये च नियोजयन्तु ॥२॥

इति श्रीमत्प्रभुचरणैः श्रीपुरुषोत्तमस्य दर्शिता पञ्चमस्कन्धनिबन्ध-
शेषादारभ्य द्वादशस्कन्धनिबन्धान्तयोजना
समाप्ता ।

---

## द्वादशः स्कन्धः समाप्तः

---

# इति श्रीवल्लभदीक्षितविरचिते

## त त्त्वा र्थ दी प नि ब न्धे

श्रीभागवतार्थप्रकरणं

समाप्तम् ।

श्रीकृष्णः।

# परिशिष्टम्–१

## द्वितीयतृतीयचतुर्थस्कन्धानामवशिष्टं निबन्धकठिनांशविवेचनम्।

आविर्भूते प्रथमे भागे यावदधिगतमिदं विवेचनं तावत्तत्रैर्भावितम्।
परमवशिष्टं परिशिष्टे प्रकटीक्रियते।
अतोऽदं विवेचनं पूर्णतयाविष्कृतमिति मन्यामहे।

(स्कं. २) का. ३४. ७४तमे पृष्ठेनुसन्धेयम्।

अग्रे नवमाध्यायार्थोक्तौ ब्रह्मणोपि हरिर्मूलमितिकारिकाव्याख्याने एषा उपपत्तिः कथागता इति, ब्रह्मणा हि नारदं प्रति यत् निरूपितं तत् न स्वतः किन्तु वैकुण्ठे सर्वं भगवति दृष्ट्वा भगवदुपदेशं च प्राप्य निरूपितमिति ब्रह्मवाक्यानां स्वस्य ब्रह्मणश्च भगवद्वाक्यं भगवांश्च मूलमित्येवं कथयाऽस्मिन् प्रकरणे निरूपणादस्य प्रकरणस्योपपत्तिरित्यर्थः।

(स्कं. ३) का. ८२, ११०तमे पृष्ठेनुसन्धेयम्।

तृतीयस्कन्धे दशमाध्यायार्थोक्तौ यद्येक एव पद्मकल्प इत्यादि। नवमाध्याये सात्त्विकत्वप्रार्थनानिरूपकश्लोके 'यथाहं स्रक्ष्यामि पूर्ववदिदमि'तिवाक्यात् पूर्वमपि ब्रह्मणा चतुर्मुखेनैव सर्वं जगत् सृष्टमितिज्ञायते, तस्य पूर्वसृष्टस्य पुनः पद्मे लयः, अतो निरूप्यमाणादपि कल्पात् पूर्वं पद्मकल्प एव, अतः अनेन लोकात् प्राक् लीनान् अनेन पुनः कल्पितासीत्येवमर्थः पूर्वोक्तवाक्यैकवाक्यतयाऽवसीयते, अतः पद्मकल्पैकत्वे इदं वाक्यं नोपपद्यतेऽत एतद्वाक्यसमर्थनाय पद्मकल्पबहुत्वं निरूपितम्, पद्मकल्पबहुत्वसमर्थकेन तथाज्ञानकथनेन किं सिद्धमिति पुनः शङ्का, तस्या उत्तरं पद्मतः सर्वसम्भेदमुक्तवानिति पूर्वप्रलयोपि पश्चात्, अग्रे सर्वोत्पत्तिरपि ब्रह्मणस्तथा ज्ञानमपि पद्मं दृष्ट्वेतिपद्यावेव सर्वसम्भेदकथनार्थं द्वितीयपद्मकल्पकथोक्तेत्यर्थः।

(स्कं. ४) का.८५. १९३तमे पृष्ठेनुसन्धेयम्।

चतुर्थस्कन्धे अष्टमाध्यायार्थोक्तौ धर्मार्थमवतीर्णोपीति कारिकातात्पर्ये प्रकरणादावेवैतन्निरूपणेन पूर्वोक्तं निवृत्त्युपयोगित्वं समर्थितमिति, स्त्रिया जडीकृतेन पित्रा ध्रुवावमाननिरूपणेन ध्रुवस्य पित्रादिपु तद्राज्ये च न स्वीयत्वाग्रहः, किन्तु, स्वस्यालौकिकलौकिकार्थसाधके भगवति तद्भजने च स्वीयत्वाग्रहः, एवं निवृत्त्युपयोगित्वम्।

(स्कं. ४) का.११८. २०४ तमे पृष्ठेनुसन्धेयम्।

अग्रे त्रयोदशाध्यायार्थोक्तौ कल्पोत्कलौ तस्य पुत्रौ इतिकारिकाभासे–ननु ज्येष्ठयोर्वैराग्ये को हेतुरिति ध्रुवस्य प्रथमा स्त्री शिशुमारपुत्री भ्रमिस्तस्या ज्येष्ठपुत्रः कल्पः, द्वितीया स्त्री वायुपुत्री इला, तस्या ज्येष्ठपुत्र उत्कलः, एवमुभयोर्ज्येष्ठत्वं, न तु भ्रमिपुत्राद् वत्सराद् उत्कलस्यापूर्वजत्वेन ज्येष्ठत्वम्, तथा सति मध्ये राज्यदशाया'सुतस्तो वत्सर'इतिवाक्यं विरुद्ध्येत।

(स्कं. ४.) का.२२४. २५३तमे पृष्ठेनुसन्धेयम् ।

अग्रे एकोनत्रिंशाध्यायार्थोक्तौ मनसानुभवाच्चापि कर्मास्तित्वं विनिश्चितमिति कारिकाव्याख्याने एकेन मनोनिरूपणं त्रिभिरनुभवस्येति, श्रीभागवतस्थेन एकेन श्लोकेन 'मन एव मनुष्यस्ये'त्यनेन । अग्रे जन्म प्राप्स्यतः मोक्षं प्राप्स्यतश्च मनुष्यस्य पूर्वरूपप्रशंसकत्वेन मनोनिरूपणम्, तेन मनोनिरूपणेनापि कर्मास्तित्वस्यैव निश्चयः, संसारावेशभगवदावेशरूपकर्मणैव पूर्वरूपज्ञापकत्वं यतस्तस्य, न तु केवलस्येति । अग्रिमैस्त्रिभिः श्लोकैर्दृष्टमश्रुतं चे'त्यादिभिर्मनसोऽनुभवो निरूप्यते, तेनापि कर्मास्तित्वस्य निश्चयः, मानसानुभवस्यापि कर्मोपस्थापितत्वात् । तथा हि, ननु पूर्वजन्मसु इन्द्रियैरनुभूतानामेवार्थानां स्वप्ने कर्मणानुभवो मनसि भवतीतियदुक्तं तन्न सम्भवति, स्वप्नेऽत्यन्तासतामपि कर्मणां मनस्यनुभवसम्भवान् न तेनेन्द्रियैः पूर्वजन्मस्वनुभवः साधयितुं शक्यते, इदानीं कर्मणा भ्रान्तिमात्रेण मानसानुभवेपि अनुभवविषयाणामत्यन्तासत्त्वादित्याशङ्क्य इदानीन्तनमानसानुभवेन पूर्वजन्मीनानुभवं पूर्वोक्तं दृढीकर्तुं युक्त्याऽनुभवविषयपदार्थसत्तां साधयति नारदः—अदृष्टेत्यादि, अदृष्टाश्रुतवस्तुनः कस्यचित्केन मानसानुभवेन वस्तु यादृगनुभूतं तादृशमस्तीत्यनुमन्तव्यम् । ननु तादृशवस्तुनः अत्यन्तासत्त्वे कथमनुमानं स्यात् तत्राह 'देशकालक्रियाश्रय'मिति स्वदेशे एकपादानां मनुष्याणामभावेपि क्वचित् तादृशा अपि सन्ति, कालेषु अनुत्पद्यमाना अपि वर्षाकाले विचित्रजीवा उत्पद्यन्ते, मनुष्यैर्घटके निधाय साक्षात् हस्तितोलनासम्भवेपि कयाचित् क्रियया तदपि सम्भवति । यथा वा पीतश्यामयोर्हरिद्राकज्जलयोर्योगे हस्तिवर्णः । एवमेकेन श्लोकेन पूर्वानुभवविषयवस्तुनः सत्त्वे तदनुभवे च साधिते, इदानीं मानसोऽनुभवः कर्मणेति सिद्धम्, एवं पूर्वानुभूतानां मानसानुभव उक्तः । द्वितीयश्लोकेन 'सर्वे क्रमानुरोधेने'त्यनेन इदानीमनुभूतानां कर्मणां मानसोऽनुभव उक्तः । एवं द्वाभ्यां लौकिकं कर्म साधितम् । तृतीयश्लोकेन 'सत्त्वैकनिष्ठे' इत्यनेन युगपदखिलजगदनुभवो मानसः अलौकिककर्मणेत्युक्तम् । अत्र राहुचन्द्रदृष्टान्तेन दूरत एव सर्वं जगदनुभूयते न तु मनसि जगतः सङ्गः, तस्य सत्त्वैकनिष्ठत्वेन भगवत्पार्श्ववर्तित्वात् । एवं कर्मसाधनार्थं त्रिभिर्मानसोऽनुभवो निरूपितः ।

## इति श्रीभागवतार्थनिबन्धकठिनांशविवेचनम् ।

## ॥ इति प्रथमं परिशिष्टं समाप्तम् ॥

॥ श्रीवल्लभपादपद्मरेणुः शरणम् ॥

श्रीकृष्णाय नमः ।

# अध्यायत्रयप्रक्षिप्तत्वसमर्थनम् ।

## ॥ अथ श्रीमदाचार्यचरणाः ॥

कथामात्रं हरेर्वाच्यं सर्वत्रेत्यत्र केचन। कथां वक्तुं भागवतीं कांचित् सिद्धामलौकिकीम् ॥१॥
योजयित्वा त्वाधुनिका अध्यायत्रितयं जगुः। शब्दार्थसङ्गतीनां हि स्पष्टा तत्र विरुद्धता ॥२॥
लोकप्रसिद्धेस्तथापि कथञ्चिद् रूप्यते स्फुटम् ॥ २½ ॥

पूर्वाध्यायान्ते "कौमारं जहतुर्व्रजे" इत्युक्तं, "ततश्च पौगण्डवयः श्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ" वित्येव सन्दर्भस्तथापि भगवच्चरितमिव वत्सापहरणं पद्मपुराणे प्रसिद्धमिति तां कथामाश्रित्याघासुरवधं ब्रह्मस्तुतिं च पूर्वापरयोर्निवेश्य कौतुकलीला भगवतः प्रदर्शिता, लोका हि लौकिके कौतुकिनो भवन्ति, तत्र तु प्रथमेऽध्याये लीलामाह सुविस्तराम्। अघासुरस्य च वधं मुक्तिश्चापि स्वयुक्तितः ॥१॥

## ॥ अथ श्रीप्रभुचरणाः ॥

अग्रेऽध्यायत्रयं प्रक्षिप्तमित्युक्तम्। तत्र 'कौमारं जहतुः' 'ततश्च पौगण्डवयः श्रिता'विति युक्तः सन्दर्भ इति। मध्येऽन्यकथा 'एवं विहारै'रित्यस्य 'ततश्च पौगण्डवय' इत्यस्य च वक्त्रा नोक्तेति ज्ञायते। अन्यथैतदध्यायत्रयानन्तरमेव कौमारत्यागं वदेत्। किञ्च, 'पौगण्डे परिकीर्तित'मितिवाक्यात् पूर्वाध्याय एव तत्प्राप्तेस्ततश्च पौगण्डवयः श्रिता'विति वाक्यं विरुद्धं स्यात्, तदनर्थकं च। तृतीयाध्यायान्ते'ऽप्येवं विहारै'रिति श्लोकोऽधुना केषु-चित्पुस्तकेषु लिख्यते, तदप्रामाणिकमितीतोऽपि तथात्वं तेषां ज्ञेयम्। (१०-३०-१७) भगवत्प्रिया-कृतलीलानुकृतिष्वेतदनुकृत्यभावात्। तृतीयस्कन्धे (अ. २) श्रीमदुद्धवेद्वादशेस्कन्धे (अ. १२) सूतेन चैतत्कथाया अकथनाच्च। न भारतीमेऽङ्ग मृषोपलक्ष्यते, न वै क्वचिन्मे मनसो मृषा गतिः, न मे हृषीकाणि पतन्त्यसत्पथे' २-६-३३ इति ब्रह्मवाक्यविरोधश्च। ईश्वरे तस्येन ज्ञानवत-त्वपरीक्षाकृतमहानर्थरूपत्वात्, 'भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचि'दिति २-९-३६ भगवद्वाक्यविरोधश्च। 'तोकेन जीवहरण'मित्यादिनिरूपकस्य सन्देश्वरत्वेन ज्ञानवतस्ताद्दृग्घाष्टर्य-स्यासम्भवाच्च। आचार्यैः प्रसिद्धिमात्रेण विवृतमित्यस्माभिरुपेक्षितम्।

## ( अथ गो. श्रीपुरुषोत्तमचरणाः )

(को. १. १.) अथ प्रक्षिप्ताध्यायान् विवरिषवो मतान्तरमाहुः कथामात्रमित्यादि-सार्धेन, प्रक्षिप्तत्वं समर्थयितुमाहुः शब्दार्थेत्यर्धं, व्याख्याने हेतुमाहुर्लोकिकेत्यर्धेन, प्रक्षिप्तत्वं समर्थयन्ति पूर्वाध्यायेत्यादि, एतेषां मूलमाहुस्तथापीत्यादि, एतदेवोक्तं पाद्मोत्तरखण्डे,

'तत्पक्षमूलकृष्णेनाहिरूपोऽघासुरो हतः । भगिनीभ्रातृनिर्देशी तस्य सद्गतिः कृता ॥१॥
मोचिता वत्सतत्पालास्तद्वक्त्रादन्तकालयात्। तस्मिन्नहनि मध्याह्ने सवत्सान् वत्सपालकान् ॥२॥
विधिर्जहार सम्पश्यन् प्रभावं गोपरूपिणम्। पश्चाद्दापूरिते वर्षे वत्सान् पालन् प्रजापतिः ॥३॥
सर्वानाचष्ट वैकुण्ठं तुष्टाव नवमीदिने। कृष्णमायाहताः सर्वे क्षणार्धं मेनिरेऽर्भकाः ॥४॥
तैर्ज्ञातश्चाघ निहतोऽघासुरः सखिना हि न । गत्वा नजं ततो बाला इति सर्वे व्रजे जगुः' ॥५॥

इति, अत्राचार्यैः सन्दर्भविरोधरूपमेकमेव दूषणमुक्तम्, टिप्पण्यां त्वन्यान्यपि दूषणानि प्रक्षिप्तत्व-साधकान्युक्तानि तानि ततोऽवगन्तव्यानि, किञ्चात्रैव प्रथमाध्याये भगवतोऽघासुरमुखप्रवेशत-

द्दर्शनेन "तदा घनच्छदादेव मयाद्धाहेति चुक्रुशुः, जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवा" इत्यनेन कंसादीनां हर्षं उक्तस्तदुत्तरं तदैव तन्नाशेन तद्दर्शनमप्यर्थादेव सिद्धम्, एवं सति यदघेरिष्टवधोत्तरं नारदेन कंसायोक्तं "याभ्यां ते पुरुषा हता" इति तद् विरुध्यते, अघस्य बकीबकानुजस्य यो वधस्तस्य स्वयमेव दर्शनात्, किञ्च -द्वितीयाध्याये 'स्नेहस्नुतस्तन्यपयः-सुधासवं मत्वा परं ब्रह्म सुतानपाययन्नि'युक्तं तदप्यग्रिमया- रसलीलया विरुध्यते, किञ्च तदानीं वयस्यानां पञ्चवार्षिकत्वेन तत्तुल्ये भगवद्रूपेपि स्तनपानासङ्गतिश्च, श्रीगोपेश्वरास्तु न चाशेषदेशेष्वप्यध्यायत्रयस्य भागवतीयत्वप्रसिद्धेरस्य प्रक्षिप्तत्वमसम्भवी'तिशङ्कायां तदुक्तं विकल्प्य दूषयन्ति 'तथा हि सा प्रसिद्धिः किं पामराणां पण्डितानां वा सर्वेषां वा? नाद्यः, तत्प्रसिद्धिमात्रेणेष्टसिद्धेरभावात्, अन्यथा देहात्मबुद्धेरपि प्रामाण्यापत्तेः, न च यावद्व्यवहारं तस्या अपि प्रामाण्ये दोषाभाव इति वाच्यं, किं तावता? शास्त्रेण देहात्मनो भेदेवधारिते तस्या असङ्गतत्ववदेतेषामपि पूर्वोक्तदूषणेनाभागवतीयत्वेवधारिते प्रसिद्धेरप्रयोजकत्वस्यैव निश्चयात्, न द्वितीयः, सर्वेषां पण्डितानां तथा प्रसिद्धौ मानाभावात्, अन्यथा तद्विषयकविवादोपशमप्रसङ्गात्, सर्वलोकप्रसिद्धस्यार्थस्य विवादकवलितत्वादर्शनात्, कतिपयेषां तथा प्रसिद्ध्या भागवतीयत्वाङ्गीकारेन्येषां तदभावेन तद्वैपरीत्यस्यापि वक्तुं शक्यत्वात्, न च बहूनां प्रसिद्ध्या तथात्वाङ्गीकार एव युक्त इति वाच्यं, 'शतमप्यन्धानां न पश्यती'-तिन्यायेन तेषां सर्वेषामप्यनभिज्ञत्वात्, दूषणाभाव एव 'बहूनामनुग्रहस्य न्याय्यत्वादन्यथा देहात्मवादन्यायापत्ति', एतेनैव तृतीयोपि निरस्तो ज्ञेयः। न च पाद्मप्रसिद्ध्या तेषां भागवतीयत्वं शक्यशङ्कं, तत्र लीलामात्रकथनदर्शनात्, यदि हि 'गीतासारं प्रवक्ष्यामि सर्वगीतोत्तमोत्तमं कृष्णो यमर्जुनाया'हेत्यग्निपुराणे गीतासारस्य भगवदुक्तत्वं लिङ्गमुक्तम्, तथा चेदत्र किञ्चिद्भागवतीयत्वलिङ्गदर्शनं स्यात् तदाङ्गीकर्तुं शक्येतापि, अतो भागवतीयत्वबोधकस्य लिङ्गवाक्यादेरभावात् तथात्वाङ्गीकारो न युक्त एव। न च दूषणोद्धारे सति कथमयुक्तो न च तेषामनुद्धार्यत्वम्, तथा हि कौमारत्यागोत्तरं पुनः कौमारलीलाकथनस्य चमत्कारविशेषाधानार्थत्वेन सन्दर्भविरोधस्य परिहारात्, लीलानुकरणस्य च भावानुरोधित्वेनैतद्भावाभावेनैतदनुकरणाभावस्यापि शक्यवचनत्वादेवमन्येषामपि परिहृतप्रायत्वाच्चेति वाच्यं, तथा सति कौमारलीलाकथनस्य चमत्कारविशेषाधानार्थत्वे हरिवंशविष्णुपुराणब्रह्मवैवर्तोक्तानां लीलानां तथात्वस्य तौल्येन तासामपि कथनप्रसङ्गात् तासु न तथात्वमत्रैव तथात्वमित्यत्र विनिगमकाभावादनुकरणाभावहेतुभूततादृग्भावाभावस्य यो हेतुस्तस्याप्यशक्यवचनत्वेन तत्रापि समाधानाभावात्, भावाभावरूपेण हेतुना तत्कल्पे एतल्लीलाभावस्यैव निश्चयाच्च, न च श्रीधरेण तद्व्याख्यानादेतेषां भागवतीयत्वेनाङ्गीकार उचित इति वाच्यं, प्रथमस्कन्धे' द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः' इति कथयतैतेषां बहिर्भावस्य सूचितत्वात्, एवं 'मज्जतः-फेनावलम्बने 'त्युद्धवोक्तिसूतोक्त्योरेतदभावसमाधानस्य कर्तुमशक्यत्वाच्च, तस्माच्छद्धाजाड्येनैवैतदङ्गीकरणम्, यत्तु बोपदेवो 'वधश्च वत्सबकयोस्तथाधासुरभोगिनः, वत्सचोरो ब्रह्ममोहो ब्रह्मणः भुवनं हरे'रित्युक्तवांस्तत्रापि पादत्रयमनवधानविजृम्भितमेवोपदर्शितानां दोषाणामनपायादित्याहुः, अत आधुनिकानां वृन्दावनीयप्रभृतीनां यस्तत्र भागवतीयाग्रहः स श्रद्धाजाड्यमूलक एवेति सुधीभिरवधेयम् ॥

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः

# अध्यायत्रयप्रक्षिप्तत्वसमर्थनम्।

## गो. श्रीमत्कल्याणरायतनयश्रीगोपेश्वरजीविरचितम्।

( दशमस्य नवत्यध्यायेषु अ. १२-१३-१४ अध्यायानां प्रक्षिप्तत्वम् )

प्रतिक्षणोद्भवद्भावपीयूषोर्मिभिराप्लुतः।
व्रजस्त्रीरसपाथोधिः स जयत्यस्मदीश्वरः॥१॥

अत्र तावदघासुरवधब्रह्ममोहनतत्कृतस्तवादिनिरूपकदशमस्कन्धगताध्यायत्रितयं पूर्वापराध्यायकथितकथासङ्गत्यनुपपत्त्या कथमपि श्रीशुकोक्तमिति वक्तुं न युक्तमतः प्रक्षिप्तमेवेदं न श्रीभागवतीयमितिश्रीरहस्यविदो वदन्त्यस्मत्प्रभुचरणाः। यदिह गदितं केनचित्, केचिदध्यायत्रयं न मन्यन्ते तत्र कारणं न पश्यामः सर्वत्रापि देशेष्वैतिह्यप्राप्तत्वादिति। तत् तस्यैव मतस्य शोभते पूर्वोत्तराध्यायकथासङ्गत्यनुपपत्तेरेव तत्र कारणत्वात्, तथा हि पूर्वमेवं विहारैः कौमारैः कौमारं जहतुर्व्रजं' इत्यनेन कौमारविहारपरिसमाप्तिनिरूपणादग्रे क्रमप्राप्तं पौगण्डलीलानामेव निरूपणं न्याय्यं न पुनरध्यायत्रयेण कौमारलीलानामेव, तस्मादसङ्गतिरस्यादण्डवारितेव। तथा च दुःप्रतिक्षेपं प्रक्षिप्तत्वम्। किञ्च, न वयमध्यायत्रयं न मन्यामहे अत एवैतद्विवरणमस्मन्मते विद्योतते; तर्हि यत्कुत्र्यां प्रभातमङ्गीकृतत्वात् तस्येति चेन्, न, उदीरितरीत्या भागवतीयत्वायोगेन प्रसिद्धिमात्रानुरोधेन विवृतस्यापि तस्य प्रक्षिप्तत्वाक्षतेस्तदभिमताभावात्, न चाशेषदेशेष्वपि भागवतीयत्वप्रसिद्धेरस्य प्रक्षिप्तत्वमसम्प्रतीतिवाच्यं, विकल्पाक्षमत्वात्, तथा हि, तथा प्रसिद्धिः किं पामराणामभिधित्सता पण्डितानां वा, आहोस्वित् सर्वेषाम ? नाद्यः, तत्प्रसिद्धिमात्रेण समीहितसिद्धेरभावात्, अन्यथा देहात्मवादस्यापि दुष्परिहरत्वप्रसङ्गात्, पामराणामात्मस्वप्रसिद्धेस्तत्रापि प्रमाणयितुं शक्यत्वात्, न द्वितीयः, सर्वेषां तेषां तत्सत्त्वे मानाभावात्, अन्यथा तद्विषयकविवादोपशमप्रसङ्गात्, न हि सर्वलोकप्रसिद्धोर्थः क्वचिद् विवादास्पदीभवितुमवकल्पते, कतिपयानां तथा प्रसिद्ध्या भागवतीयत्वप्रसाधनेऽन्येषां तेषां तदभावेनैतद्वैपरीत्यप्रसङ्गस्याप्यशक्यभङ्गत्वात्, ननु तथाप्यस्य बहवो भागवतीयत्वं मेनिरेऽस्तो नैवमिति चेन्, न. शतमप्यन्धानां न पश्यतीतिन्यायात्। नन्वत्र विनिगमनाविरह इति चेत्

न, पूर्वोक्तवक्ष्यमाणयुक्तिभिः प्रक्षिप्तत्वस्यैवाभ्युपगमनीयत्वेन तदभावात्, न तृतीयः पक्षद्वयोक्तदूषणानतिवर्तित्वात्। ननु पाद्मोत्तरखण्डयेतल्लीलाप्रसिद्धि-सद्भावात् न कोपि दोष इति चेन् न, पुराणान्तरैतत्प्रसिद्धेर्भागवतीयत्वागमकत्वात्। अन्यथान्यपुराणप्रसिद्धकथान्तरस्याप्यत्र प्रक्षेपे तथात्वस्यावर्जनीयत्वापातात्, यच्च चोक्तं तदीयस्वसम्प्रदायानङ्गीकारप्रामाण्येन तस्याप्रामाण्यं चेदन्यसम्प्रदायाङ्गीकार-प्रामाण्येन विपरीतं कथं न स्यादिति, तदपि न, उक्तयुक्त्या भागवतीयत्वानुपपत्तौ तदीयस्वसम्प्रदायानङ्गीकारप्रामाण्येन तदप्रामाण्यस्यैव सुस्थिरत्वात्, यदपि पुरतः पुनः कौमारलीलावर्णनं चमत्कारविशेषस्मरणेनेति न पुनरुक्तिरितिसमाधानम्, तदप्य-नवधानविजृम्भितम्, सर्वलीलास्वपि चमत्कारस्मरणावत्तारस्य सुवचत्वेन सर्वासामेव तासां पुनरुपन्यासप्रसङ्गात्, भगवल्लीलामात्रस्यैवातिमात्रविचित्रत्वात्, अत्रैव चमत्कार-स्फुरणे नियामकाभावात्, न च रसावेश एव नियामक इतिवाच्यम्, तस्यापि सर्वलीलासाधारण्यात्, असङ्गतार्थकथने श्रीशुकस्य वक्तृदोषापाताच्च च। अपि च प्रभुप्रियाणां तत्तत्प्रियलीलानुकरणवद् यदेतदनुकरणाभावः, सोपि प्रक्षिप्तत्वमेव प्रत्याययति। न च यावल्लीलानुकरणनियमाभावः, भावभरेणाविर्भवतस्तत्तदनु-करणस्यानिराकरणीयत्वात् तस्य चात्रापि भावात्, अन्यथान्यत्रापि क्वचित् तद-भावापत्तेः। अन्यच्च च 'पौगण्डे परिकीर्तितमि'तिवचनात् पूर्वाध्याय एवाधिगतत्वात् पौगण्डवयसः पुन'स्ततश्च पौगण्डवयःश्रिता'वित्यनेन तच्छ्रवणोक्तेरयुक्तत्वादेत-द्वचनव्याहृतिवचनवैयर्थ्यापत्तिः। ब्रह्मणो भगवद्भुजिष्यत्वेन तत्परीक्षणासामञ्ज-स्यापरिहारात्। भगवत्प्रसादप्राप्तमोहाभावानुपपत्तेश्च 'द्वितीयस्कन्धे' (अ. ७-२७) ब्रह्मणा 'तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोपवृत्तः। यद्रिङ्गतान्त-रगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथार्जुनयोर्न भाव्य'मितिपूर्णप्रभुमाहात्म्योपवर्णनेन विदङ्कृतस्य तस्य भगवति धाष्ट्र्यकरणानौचित्यं कथं निरसनीयम्, न च लीलायां स्वाम्यभिप्रायानुसारिकार्यकरणेन(न)किञ्चिदनुचितमितिवाच्यम्, अपराधजनके कर्मणि प्रभोः सेवकप्रवर्तनाभिप्रायासम्भवात्। ननु नापराधजनकत्वमस्य प्रभ्वभिप्रायस्यैवापराध-बाधकत्वादतो युक्तमेव धाष्ट्र्यमिति चेत्, सत्यम्, अभिप्रायपूर्वकधाष्ट्र्ये नापराधोपि, प्रकृते धाष्ट्र्यस्याभिप्रायपूर्वकत्वाबोधकाभावेन तदनौचित्यस्य वज्रलेपत्वात्, तत्कल्प-नायाश्च विपरीतकल्पनाभिया अनुत्थानात्, किञ्च तृतीयस्कन्धे श्रीमदुद्धवैर्लीला-न्तराणि वदद्भिर्द्वादशस्कन्धे सूतेन चोक्तसर्वलीलाः कथयतैतदनभिधानाच्च च, 'द्वात्रिंशत् त्रिशतं च यस्य विलसच्छाखा' इत्यध्यायसङ्ख्यानिरूपकोक्त्यैतद-

ध्यायत्रयप्रक्षिप्ततायाः श्रीधराभिप्रायविषयत्वात् च। तथा च तदुक्तिमात्रश्रद्धालो-रनालोचितपूर्वापरग्रन्थस्यानुचितमेतत्प्रक्षिप्तत्वसाधनमुपेक्षणीयं प्रेक्षावद्भिरिति कोविदा एव विदाङ्कुर्वन्त्वित्येषा दिक् ।

श्रीगोपेश्वरस्य स्वाचार्यचरणाब्जकचेतसः ।
कृतिरेषा कृतधियामस्तु जायतां मुदे ॥१॥

## इति श्रीमत्कल्याणरायतनयश्रीगोपेश्वरकृत-मध्यायत्रयप्रक्षिप्तत्वसमर्थनम् ॥

---

श्रीमुकुन्दरायो जयति ।
श्रीमदाचार्यश्रीमत्प्रभुचरणौ जयतः ।

## श्रीमद्गोस्वामिश्रीगिरिधरविरचिताध्यायत्रयप्रक्षिप्तत्वसमर्थनम् ।

भवति भवमहाब्धिर्गोष्पदं वै मुमुक्षो-
रभिभवति कवीशान् यत्प्रसादाद् विमूकः ।
प्रभवति निजलीलाप्रेमभावः स्वकानां
द्रुतमतिजयति प्राक् रायशब्दान् मुकुन्दः ॥ १ ॥

वन्दे राधारसाम्भोधिसमुज्ज्वलकलानिधिम् ।
श्रीमद्गोपाललालं तं गोपीकैरवहर्षकम् ॥ २ ॥

यत्प्रसादाद् विमूकोपि वादिकुम्भीन्द्रगर्वनुत् ।
प्रभवेच्छ्रीमदाचार्यचरणान् नौमि तान् सदा ॥ ३ ॥

येषां कृपाकटाक्षेण स्वमार्गज्ञो भवेन्नरः ।
भक्त्या श्रीमद्विठ्ठलेशान् प्रभूंस्तान् नौमि सर्वदा ॥ ४ ॥

यत्पादाब्जरसास्वादमवाप्य विगतैषणः ।
भवन्ति भक्तास्तान् श्रीमद्यदुनाथान् नमाम्यहम् ॥ ५ ॥

श्रीमद्गोस्वामिगोपालसुतो गिरिधरः सुधीः ।
करोति त्रितयाध्यायप्रक्षेपे युक्तिसञ्चयम् ॥ ६ ॥

टिप्पणीस्थप्रकाशस्थनिजबुद्धिस्थयुक्तयः ।
सङ्ग्राह्मि यथाबुद्धि ग्रन्थानालोड्य सर्वशः ॥ ७ ॥

अर्वाचां तु मत सम्यगनुवाद्य यथामति ।
दूष्यते युक्तिनिचयैर्बालबोधाय तद्ध्रुवम् ॥ ८ ॥

अथ श्रीमदाचार्यमतानभिज्ञानां कलिकालजनितकालिमाकलिलान्तःकरणानां मतमादावनूद्यते। तथा हि। यदेतदध्यायत्रयं 'पूतना लोकबालघ्नी'त्यादिश्लोकषट्कं च 'य एतत्पूतनामोक्ष'मित्यादिश्लोकं च केचिद् वैष्णवा न मन्यन्ते। तत्र कारणं न पश्यामः, सर्वत्रापि देशे ऐतिह्यप्राप्तत्वात्। वासनाभाष्यसम्बन्धोक्तिविद्वत्कामधेनुशुकमनोहरापरमहंसप्रियादिषु प्राचीनाधुनिकटीकासुव्याख्यातत्वात्। तदीयस्वसम्प्रदायानङ्गीकारप्रामाण्यं चेदन्यसम्प्रदायाङ्गीकारे तद्विपरीतं कथं न स्यात्। न च मुरभिदादिशब्दवदघभिदादिशब्दः क्वचिन् न प्रयुज्यत इतिवाच्यं 'यन् न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येन्यविषयाः कुकथा मतिघ्नी'रितितृतीयस्कन्धवचनात्। न च तत्र तत्र लीलानुवादे सा लीला नास्ति श्रीधरस्वामिभिस्तत्र तस्या अपि दर्शितत्वात्। अत एव 'द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखा' इतिपद्ये खण्डितमध्यायत्रितयं यदिदमेवेति न तन्मतम्। न च तत् त्रयमन्यत्र क्वापि खण्डयितव्यम्। सर्वत्राध्यायसङ्ख्याश्लोकसहितटीकासद्भावात्। ततो द्वात्रिंशच्च त्रयश्च शतानि चेति द्वन्द्वैक्यमेव तद्विवक्षितमनिर्णीतबहुलस्यानवस्थाभिया त्रिस एव पर्यवसानात्। कपिञ्जलानालभन्त इतिन्यायेन।। अन्यथा त्रिशतीत्येव स्यात्। न चासुरमुक्तेः सिद्धान्तविरुद्धत्वात् तदीर्घ्यम्। श्रीकृष्णमारितेषु सर्वेषु तेषु दृष्टत्वात्। 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि, मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गति'मित्यादिष्वपि मां श्रीकृष्णलक्षणमप्राप्यैव न तु प्राप्येत्याद्यङ्गीकारात्। न च पुराणान्तराप्रसिद्धत्वेन सा लीला न सम्भावनीया, पाद्मोत्तरखण्डे स्पष्टत्वात्। श्रीवृन्दावने तत्तल्लीलास्थानानि च प्रसिद्धानि। न च भक्तगतिसादृश्येन तेषां तत्प्राप्तिरसमञ्जसा शुद्धभक्तैस्तादृशप्राप्तेरनुपादेयत्वात्, 'नात्यन्तिकं विगणयन्त्यपि ते प्रसादमि'त्यादिवचनशतेभ्यः। न च पूतनाया जननीसाम्यं जननीमाहात्म्यविच्छित्तिदृष्ट्यम्, 'सद्वेषादिव पूतनापी'तिवाक्येन जननीवेषमात्रतस्तत्प्राप्त्या तस्या एव महिमाधिक्यव्यञ्जनात्। तत्र तत्रैतैरपि व्यञ्जितः सिद्धान्तेन दोषः परिह्रियते। न च गोपीशब्दमात्रभ्रान्त्या सर्वासामेव तासां स्तन्यपाने रासाद्यनुपपत्तिर्मन्तव्या, तासां श्रीयशोदासमवयस्कत्वात् तत्प्रेयसीनां तु तत्समवयस्कत्वात्, तस्मान् न कश्चिद् विरोधः। तद्भक्तानामेव परममाहात्म्यमेवात्र सेत्स्यति। अतस्तदनुभवः श्रीभगवदनुग्रहेणैव सम्पद्यत इति तत्सुगोप्यत्वमेवेत्येवं तादृशवचनमुपपद्यत इत्यलमितिविस्तरेणेति कतिचिद् वैष्णवाभासाः प्रलपेयुः। तदनुसारिवैष्णवतोषणीसारकारोपि प्रललाप।

तत्र पूर्वं'मेतदनङ्गीकारे कारणं न पश्याम' इति यदुक्तं तत्र श्रीमदाचार्यचरणैः

सुबोधिन्यां तत्रैव "योजयित्वा त्वाधुनिका अध्यायत्रितयं जगुः। शब्दार्थसङ्गतीनां हि स्पष्टा तत्र विरुद्धता। लोकप्रसिद्धेस्तच्चापि कथञ्चिद् रूप्यते स्फुटम्। पूर्वाध्यायान्ते 'कौमारं जहतुर्व्रजे' इत्युक्तम्, 'ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मता' वित्येव सन्दर्भः" इत्युक्तम्। तत्र 'कौमारं जहतु" स्ततश्च पौगण्डवयःश्रितौ' वितिसङ्गतौ, मध्ये 'क्वचिद् वनाशाये'त्यादिकथा 'त्वेवं विहारै'रित्यस्य 'ततश्च पौगण्डवय'इत्यस्य च मध्ये वक्त्रा नोक्तेति ज्ञायते। अन्यथैतदध्यायत्रयानन्तरमेव कौमारत्यागं वदेत्। पूर्वाध्यायान्ते न वदेत्। यच्चाधुनिकैरत्रै'वंविहारै'रित्यादिपद्यमपि पठ्यते तत्र पुरतः पुनः कौमारलीला वर्णनस्मृतिविशेषचमत्काराभिनयेनाग्रेपि पुनरुक्तिरितिज्ञेय'मितिजल्पितम्, तत्रोच्यते, तत्र त्र्याध्यायप्राक्कालीनत्वे'वं विहारै'तिपद्यस्य सर्वसम्मता। एवं च तदुदय-सम्बन्धिनीलीलात्यागकथने पुनस्तत्कथने न वक्तुः प्रमादापत्तिः। न हि पूर्णानां तेषां पूर्वापरभावविस्मरणम्, न वा चमत्काराभिधायिलीलाविस्मरणम्, येन 'पूर्वं तत्प्रकरणे न वदेयुः पश्चाच्च वदेयुः। न चैवमपीयं लीला न वक्तव्या पश्चाच्च चमत्कारातिशयविशिष्टत्वस्मृत्या कथनं सम्भवति, ऋषित्वात्। अध्यायत्रयान्तेपि पुनरुक्तिर्न सम्भवति 'यत् कौमारे हरिकृतं पौगण्डे परिकीर्तित'मिति (अ. १२ श्लो. ४१) पौगण्डीयलीलाकथनेन कौमारत्यागकथनस्य प्रमादप्रसितत्वात्। अत एव तृतीया-ध्यायान्ते'प्येवं विहारै'रिति श्लोकोधुना कैचित् पुस्तकेषु लिख्यते तदप्रामाणिकमितीतोपि तेषां तथात्वं ज्ञेय'मितिश्रीमत्प्रभुचरणैरुक्तम्। किञ्च 'पौगण्डे परिकीर्तितमि'ति-वाक्यात् पूर्वाध्याय एव तत्प्राप्ते'स्ततश्च पौगण्डवयःश्रितौ'वितिवाक्यं विरुद्धं स्यादनर्थकं च। किञ्च भगवत्प्रियाकृतलीलानुकृतिषु एतल्लीलानुकरणाभावात् तृतीयस्कन्धे श्रीमदुद्-वैर्द्वादशस्कन्धे श्रीसूतेन च श्रीमद्भागवतानुक्रमणिकायां तत्कथाया अकथनाच्च। यत् तु चैतन्यमतचन्द्रिकायां द्वादशस्कन्धेनुक्रमणिकाव्याख्याने लक्ष्मीनाथपण्डितेन स्कं. १२-१२-२९ 'तृणावर्तस्य निष्पेषस्तथैव बकवत्सयो'रित्यादेरनन्तरमघासुरमोक्षो न लिखित इति केचिदत्र विस्मयन्ते, तदसत्, यमलार्जुनभङ्गस्य पुराणान्तरे लिखितस्य कथमलिखनमत्राकरोत्, तेन किं तत्र भवति, सहस्रशः श्रुतत्वात् भवत्येव तद्वदत्रापि, 'अपि गुह्यं वदामि ते' 'ब्रूयुः स्निग्धस्य शिष्यस्ये'त्यादौ पूर्वमेव व्याख्यातं चेत्युक्तम्, तत् तु रभसंवलितमेव। द्वितीयस्कन्धे 'यद् रिङ्गतान्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथा-र्जुनयोर्न भाव्य'मितिब्रह्मवाक्ये, दशमे 'क्वचिदुर्दैयबद्धस्तन्वे माता बद्ध उलूखले, गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातय'दिति गोवर्धनोद्धरणानन्तरं गोपवाक्ये, 'बद्धान्यया स्रजा काचित् तन्वी तत्र उलूखले' इति भगवत्प्रियालीलानुकृतौ च

यमलार्जुनलीलासत्त्वेन न केवलं द्वादशेनुक्रमणिकायामभावेन नासत्त्वं प्रतीयते, अघासुरलीलायास्तु सर्वत्राननुवादेनाभागवतीयत्वमेवेति बुद्धयस्व। तृतीये 'कौमारीं दर्शयन् चेष्टां प्रेक्षणीयां व्रजौकसाम्, रुदन्निव हसन् मुग्धबालसिंहावलोकन' इतिकौमारलीलासामान्यत एवोक्तेति न ततो यमलार्जुनभञ्जनादिवर्णनमिति। किञ्च सूतपौराणिकैस्तु श्रुतमात्रं श्रीगोपैः श्रीव्रजरमणीभिः साक्षादनुभूततया तदुक्तौ तदनुकरणे च भगवद्वरविशिष्टब्रह्मवाक्येपि सत्त्वेन तस्या असत्त्वेन च श्रीभागवतीयत्वमूलुखललीलायास्तस्याश्चाभागवतीयमिति दिक्। 'न भारती मेङ्ग मृपोपलक्ष्यते न वै क्वचिन् मे मनसो मृषा गतिः, न मे हृषीकाणि पतन्त्यसत्पथे' इतिब्रह्मवाक्यविरोधश्च, ईश्वरे तत्त्वेन ज्ञानवतस्तत्परीक्षाकृतेर्महानर्थरूपत्वात्। 'भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचि'दिति भगवद्वाक्यविरोधश्च। न चास्मिन् कल्पविकल्पेष्वेव मोहाभावरूपवरस्य भगवता दत्तत्वादितिवाच्यम्, तथा सति तावतैव सिद्धौ कदाचित्पदोपादानवैयर्थ्यात्। 'ज्ञानं परमगुह्यं मे यद् विज्ञानसमन्वितम्, सरहस्यं तदङ्गं च गृहाण गदितं मया, यावानहं यथाभावो यद्रूपगुणकर्मकः, तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहाद्' इति वाक्यानुरोधात् तस्यार्थस्याप्रमाणिकत्वात्। न हि भगवदनुग्रहेण यावद्भगवद्विषयज्ञानवतो ब्रह्मणो मोहः सम्भवति। अन्यथा परमाप्तस्य पुरुषोत्तमस्यानाप्तत्वं स्यादितिबुद्धयस्व। 'तोकेन जीवहरण'मित्यादिनिरूपकस्य सर्वेश्वरत्वेन ज्ञानवतस्तादृग्धार्ष्ट्यस्यासम्भवाच्च। किञ्च, श्रीरामानुजाचार्यशिष्यपुत्रैः शुकपक्षिण्यामध्यायत्रयं प्रक्षिप्तमित्युक्त्वा न व्याख्याताः। तदीयसम्प्रदायधुर्यैर्वीरराघवैरपि स्वकृतभागवतचन्द्रिकाभिधानायां श्रीभागवतदीपिकायां 'इत आरभ्याध्यायत्रयं प्रक्षिप्तमिति व्यासार्यैरुपेक्षितम्, अथापि प्रायशो व्यवह्रियमाणत्वात् कैश्चिद् व्याख्यातत्वाच्च व्याख्यायते, तत्राघेनाघासुरलधात्मकं चरित्रमनुवर्ण्यते कचिदि'त्यादिनोक्तम्। तत्र 'व्यासार्यै'रित्यत्र व्यासभट्टाः शुकपक्षिणीटीकाकर्तारो रामानुजाचार्यशिष्यकुरुनाथपुत्रास्तत्प्रभृतिभिरित्यर्थः। किञ्च तदीयसम्प्रदायाचार्यैर्मध्वैः प्राचीनपुस्तकेषु 'नैषां पाठ' इत्युक्त्वा त्यक्ता इति। तदनुसारिभिर्विजयध्वजैरप्यध्यायत्रयस्याव्याख्यातत्वेन त्यागकारणज्ञानार्थं त एव पर्यनुयोगार्हा इत्याचार्यमतद्रुहां चर्चयाऽलम्। किञ्चैवमध्यायत्रयप्रक्षेपकारणत्वे स्थिते यदज्ञानं तत् स्वाचार्यमाध्वाचार्यमतमजानतः पृथङ्मतप्रसारणेनैवेति, माध्वाचार्याणां स्वाचार्यत्वेनाविष्करणं तु तदीयसम्प्रदायजीवनामकृतनत्त्वसन्दर्भे माध्वाचार्यप्रकटितभागवतव्याख्यानकारणनिरूपणे श्रीमाध्वाचार्यचरणैरित्युक्तौ तदीयविद्याभूषणरचितटिप्पण्यां श्रीमाध्वाचार्यचरणैरित्यादरसूचकबहुत्वनिर्देशः स्वपूर्वाचार्यत्वादितिबोध्यमित्युक्तम्। यच्च सर्वदेशप्रसि-

द्धयाऽध्यायत्रयाङ्गीकारस्तत्र सा सर्वदेशप्रसिद्धिः पामराणां वा पण्डितानां वा सर्वेषां वा, नादिमः, तत्प्रसिद्धिमात्रेणेष्टसिद्धेरभावात्, अन्यथा देहात्मबुद्धेरपि प्रामाण्यं स्यात्। न च यावद्व्यवहारं तादृशबुद्धेरपि प्रामाण्ये दोषाभाव इतिवाच्यं, किमेतावता शास्त्रेण देहात्मनो भेदेऽवधारिते तस्या असङ्गतत्वदेतेषामपि पूर्वोक्तैर्वैश्यमाणैश्चाभागवतीयत्वे प्रसिद्धेरप्रयोजकत्वस्यैव निश्चयात्। न द्वितीयः, सर्वेषां पण्डितानां तथाप्रसिद्धौ मानाभावात्। सर्वप्रमाभूतस्यार्थस्य विवादविषयत्वादर्शनात्, वासनाभाष्यसम्बन्धोक्तिविद्वत्कामधेनुशुकमनोहरा परमहंसप्रियादिकर्तॄणां तथाप्रसिद्ध्या श्रीभागवतीयत्वाङ्गीकारे रामानुजाचार्यानुयायिभिर्व्यासैरप्यव्याख्यातत्वेन वीररायवैरपि प्रक्षिप्तत्वकथनेन माध्वाचार्यविजयध्वजादिभिरेतदध्यायत्रयाव्याख्यानेनान्येषां तदभावेन तद्वैपरीत्यस्यापि वक्तुं शक्यत्वात्। न चाल्पप्रसिद्ध्यपेक्षया बहुप्रसिद्धेर्ज्यायस्त्वात् तथाङ्गीकार एव युक्तमितिवाच्यम्। 'शतमप्यन्धा न पश्यन्ती'तिन्यायेन तेषां सर्वेषामप्यनभिज्ञत्वात्। किञ्चोदाहृतग्रन्थव्याख्यानत्वेन श्रद्धाजाड्याग्रहः तर्हि तत्प्रतिपादितं निर्विशेषं ब्रह्म भवद्भिरप्यङ्गीकार्यं स्यात्। तथा सति वैष्णवत्वमतभङ्गः, दूषणाभाव एव बहूनामनुग्रहस्य न्याय्यत्वात्। एतेन तृतीयोपि निरस्तः। अन्यथा देहात्मवादन्यायापत्तिः। यद्यपि सम्प्रदायग्रहणाग्रहणरूपसमावेरुक्षावनं तत्स्वगोष्ठीसामयिकम्। श्रीभागवतप्रवर्तकानां श्रीवेदव्यासश्रीशुकचरणानामेव सम्प्रदायित्वम्। तेषामुक्तौ पूर्वापरविरोधादुपेक्ष्यम्। तन्मुखतः श्रुतस्य तत्सम्प्रदायविदः सूतस्यानुक्रमणीरूपोक्तौ चानुवादित्वाच्च। श्रीगोवर्धनोद्धरणानन्तरं श्रीनन्दरायान् प्रति सर्वेषां गोपवृद्धानां लीलानुवादोक्ताभावाच्च। किञ्चास्मत्सम्प्रदायाचार्याणां व्रजरत्नाना लीलानुकरणे एतल्लीलानुकृतेरभावाच्च। न हि मामकीनपौष्याकीर्णसम्प्रदायश्रद्धावाँस्तार्तीयो भवितुमर्हति किन्तूपपादितानामनुरोधिन एव सर्वे। किञ्च 'श्रीब्रह्मरुद्रसनका वैष्णवा क्षितिपावनाः, चत्वारस्ते कलौ भाव्या सम्प्रदायप्रवर्तका' इति पाद्मवचसा सम्प्रदायप्रवर्तकत्वेनोदिता रामानुजमाध्वविष्णुस्वामिनिम्बार्काः यथाक्रमशः श्र्यादिमतस्थाः। तात्स्थ्यात्ताच्छब्द्यमितिन्यायेन श्र्यादित्वेन व्यपदेशः। एते वैष्णवाः सम्प्रदायप्रवर्तका भाव्या, एतैः सम्प्रदायप्रवर्त्तकैरेतदनुरोधिभिश्च प्रक्षिप्तत्वकथनेन न तवेष्टसिद्धिः। न हि कश्चनैतत्सम्प्रदायातिरिक्तो वैष्णवः सम्प्रदायवान् भवतीतिसम्प्रदायविद एव वदन्ति। किञ्च त्वत्सम्प्रदायप्रवर्तकैर्माध्वाचार्यैरेतदध्यायत्रयस्पर्शोपि नाङ्गीकृत इति प्रक्षिप्तत्वं त्वयाप्युररीकार्यं सर्वथा, अन्यथा तवानाप्तत्वं स्यात्। एवं सति यत् 'मामकीनसम्प्रदायेऽध्यायत्रय श्रीभागवतस्थमित्यङ्गीकरणं' तच्च देवाना प्रियत्वेनैवेति दिक्।

यदपि मुरभिदादिशब्दवदघभिदादिशब्दप्रयोगाभाव इति शङ्कामुपपाद्य 'यन् न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येन्यविषयाः कुकथा मतिघ्नी'रितितृतीयस्कन्धपद्येऽघासुरहन्त्रर्थकाघभिच्छब्दप्रयोग इति समाधेरुद्भावनं तदपि विद्वदमनोरमम् । अत्र भगवत्कथातिरिक्तपापजनककुकथाश्रवणशीलानां वैकुण्ठगमनाभावप्रतिपादनं भगवत्कथापराणां तु वैकुण्ठगमनोपपादनार्थानुगुणकं भगवतः पापनाशकार्थाघभिच्छब्दस्य विशेषणत्वोपादनं सम्यगिति न भवदर्थसिद्धिः। किञ्च सर्वत्राघशब्दस्य पापवाचकत्वमेव । तथा च श्रीभागवतषष्ठस्कन्धे 'एतेनैव ह्यघो नोऽस्य कृतं स्यादघनिष्कृतम्, यदा नारायणायेति जगाद चतुरक्षरम्, सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्, नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः, न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः, यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम्, अथैनं मापनयत कृताशेषाघनिष्कृतम्, यदसौ भगवन्नाम म्रियमाणः समग्रहीत्' 'चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम्, यन् नो भयं ग्रहेभ्योभूत् केतुभ्यो नृभ्य एव च, सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योघेभ्य एव चे'त्यादिषु । नवमस्कन्धे च 'किन्त्वहं न भुवं यास्ये नरा मय्यामृजन्त्यघ'मितिश्रीगङ्गोक्तौ भगीरथ आह 'साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः, हरन्त्यघं तेङ्गसङ्गात् तेष्वास्ते ह्यघभिद्धरि'रित्यत्राघभिच्छब्दस्य पापभेदकार्थस्य हरौ विशेषणतासम्बन्धेनान्वयस्य सर्वेषामिष्टत्वेन श्रीभागवते न कुत्रापि भवदीप्सिततादृशशब्दसम्भव इतिदिक् । एतेनैतद्विषयकपापभेदकवाचकशब्दाभावादितितोपणीसारोक्तमपास्तम्। यच्च चापि न च तत्र तत्रानुवादे सा लीला नास्तीत्याशङ्क्य श्रीधरैस्तत्र तत्र तस्या अपि दर्शितत्वादित्युक्तम्, तत्रोच्यते, किं लीलादिसत्त्वे श्रीधरव्याख्यानानुरोधेन प्रामाण्यमुत श्रीभागवते तत्तत्प्रसङ्गानुवादेन। आद्ये श्रीधराव्याख्यातश्लोकादेरप्रामाण्यं स्यात्। द्वितीये तु द्वितीयस्कन्धे ब्रह्मणा, तृतीये श्रीमदुद्धवेदशमे गोवर्द्धनोद्धरणोत्तरं गोपैर्द्वादशे सूतेन च तदनुवादे सा नास्तीति निश्चीयते। एवं च श्रीभागवत एवाभावेन श्रीधरस्वामिनः कुत आनीय दर्शयेयुः येन त्वदभिमतेष्टसिद्धिः। किञ्च यद्यपि श्रीधरै'रक्तास्तन्मातरो यथा' 'किमु गावो नु मातर' 'इत्यत्र तन्मातर' इति वत्साहरणलीलाभिप्रायेण बहुवचनं 'गोगोपिकास्तन्मातरोऽभव'न्निति व्याख्यातम्, तथापि वत्साहरणलीलायां गोगोपिकास्तन्मातरोऽभवन्नित्येतावन्मात्रबोधेभिप्रायविशिष्टोपादानेनावास्तविकं द्योतितम्। अत्र व्याख्याने तु ताभिः सह रासाद्यनुपपत्तिरितिनश्यते। इतोप्यध्याय-

त्रयाणां प्रक्षिप्तत्वं बोध्यम्। (अ- ६. श्लो० ३६) केचित् तु तन्मातरो वसुदेवपत्न्य इत्याहुः। तदपि दोषकवलितम्, तन्मातृपदस्य वसुदेवस्त्रीव्याख्याने बीजाभावः। तत्प्रसङ्गस्यात्राभावात्। अग्रिमश्लोके 'किमु गावो नु मातर' इतिगोसमभिव्याहारेण वसुदेवस्त्रीणां ग्रहीतुमशक्यत्वादिति। एवं-चोभयविधस्य व्याख्यानस्य दुष्टत्वेन 'पूतना लोकबालघ्नी'त्यादिश्लोकषट्कमपि प्रक्षिप्तं ज्ञेयम्, पूर्वापरसङ्गतिविरोधाच्च, तत्र 'दह्यमानस्य देहस्य धूमश्चागुरुसौरभः, उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः। 'कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः, किमिदं कुत एवेति वदन्तो व्रजमाययु'रितिसन्दर्भः। एवं च 'दह्यमान'इत्यादिश्लोकस्य 'कटधूमस्य सौरभ्य'मित्यस्य च शब्दार्थौ सङ्गतौ, मध्ये (अ-६-३५) 'पूतना लोकबालघ्नी'त्यादिश्लोका नोक्ता इतिज्ञायते, यद्येते वक्तुरभीष्टाः स्युस्तर्हि 'नन्दः स्वपुत्रमादाय पोप्यागतमुदारधीः, मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वहे'त्यनन्तरं पठेयुः। अत एव श्रीमदाचार्यचरणै"रत्र षट् श्लोका विगीताः सर्वत्र दृश्यन्ते तेप्यध्यायत्रयवद् व्याख्येयाः स्पष्टत्वाच्चोपेक्ष्यन्त" इत्युक्तम्। एतेन पूर्वापरसङ्गत्यभावो यथाध्यायत्रये तथात्रापि बोध्यमितिध्वनितम्। किञ्च 'य एतत् पूतनामोक्ष'मितिषष्ठाध्यायचरमश्लोकं व्याख्याय "इदमपि विगीतमिति केचि'दित्युक्तं श्रीमदाचार्यचरणैः। तत्र 'केचि'त्पदोपादानेन स्वमते विगीतत्वाभावो बोधितः। विगीते बीजानुपलम्भात्। तस्माच्छ्रीधरेण सर्वसाधारणतया प्राप्ताध्यायत्रयव्याख्यानं कृतम्। एतदनुरोधेनैव 'विषजलाप्ययाद्'दितिपद्ये व्यालराक्षसाद्घासुरा'दितिव्याख्यातम्। राद्धान्तस्तु 'व्यालाः सर्पाः कालीयसुदर्शनादयः राक्षसाः तृणावर्तादयः तेषामेकवद्भावः तस्मादपि रक्षिता' इतिश्रीमदाचार्यचरणैर्व्याख्यातम्। इह आदिशब्देन कालीयपरिकरभूताः सर्पा ग्राह्याः कालीयनिःसारणे तेषामपि निःसारणात्। 'नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम्, स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी'तिभगवद्वाक्यात्। 'सकलप्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम हे'तिश्रीशुकवाक्याच्च। सामान्यत एव 'कृता नवतिरध्याया दशमे कृष्णकीर्तये' इत्यप्युक्तम्। अत एव प्रथमस्कन्धे 'द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखा'इत्युक्तम्। किञ्च प्रथमस्कन्धप्रारम्भटीकायां 'सम्प्रदायानुरोधेन पौर्वापर्यानुसारतः, श्रीभागवतभावार्थदीपिकेयं प्रतन्यत' इतिश्रीधरपद्ये कोटिद्वयं सम्प्रदायानुरोधः पूर्वापरविरोधाभावश्च। तत्र सम्प्रदायो बोपदेवादीनां तदनुरोधेन 'कृता नवतिरध्याया' इतिप्रत्यध्यायश्लोककथनम्। 'विषजलाप्यया'दितिपद्ये 'व्यालराक्षसाद्घासुरा'दिति व्याख्यानं च। पूर्वापरविरोधाभावेन तु 'द्वात्रिंशत्त्रिशतं चे'तिकथनमितिदिक्। अत एव 'तन्मातर' इत्यत्र 'वत्सा-

हरणलीलाभिप्रायेणे'त्यत्राभिप्रायपदोपादानमितिप्रागुपपादितम्। यत् तु "द्वात्रिंशच् च त्रयश्च शतानि चेति द्वन्द्वैक्यमेव विवक्षितम्, अनिर्णीतबहुत्वस्यानवस्थाभिया त्रित्व एव पर्यसानात् कपिञ्जलालभनन्यायेन, अन्यथा त्रिशती स्यात्। न च पात्रादित्वं कल्प्यम्, लोकप्रसिद्धत्रिशतीतिप्रयोगविरोधात्। न च त्रीणि च तानि शतानि त्रिशतानीति विशेषण विशेष्यसमास इतिवाच्य,' दिक्सङ्ख्ये सञ्ज्ञायाम्' (तत्पुरुषे सञ्ज्ञायामेव दिक्संख्ये समस्येते इति) नियमेन तदभावा"दितिवल्गितं तद्भ्रमात्। द्वात्रिंशच् च त्रयश्च शतानि चेतिद्वन्द्वे 'अल्पाच्तर'मितिसूत्रेण'द्वन्द्वेधी' तिसूत्रेण च तत्र भाष्यकारैः पठितेन सङ्ख्याया अल्पी यस्या'इतिवार्तिकेन त्रिशब्दपूर्वनिपातापत्ति', त्रिशतीति दोषापादनं तु मुधैव त्रिसङ्ख्यानि शतानि त्रिशतानीति मध्यपदलोपिसमासे तदभावात्। न च कैय्यटकृते मत्याख्याने दोषः शाकप्रिय पार्थिव इत्यादिवारणाय तद्वचनस्यावश्यकत्वमितिशब्दरत्ने उक्तम्। अत एव 'द्विगोर्लुगनपत्ये' इति सूत्रे, भाष्ये 'त्रैविद्य' इत्यत्र "त्रयवयवां विद्यामधीत' इत्युक्तम्। ततो द्वात्रिंशच् च त्रिशत च द्वात्रिंशत्त्रिशतम् 'सङ्ख्याया अल्पीस्या' इत्यनेन द्वात्रिंशच्छब्दपूर्वनिपातः। कपिञ्जलाधिकरणेन त्रित्वे पर्यवसानमित्युक्तिस्तु वैयाकरणसिद्धान्तापर्यालोचनमूलिकैव। वृत्तौ उपसर्जनपदार्थेषु सङ्ख्यासामान्याभावास्यैव तत्सिद्धान्तसिद्धत्वान् न शतपदेन त्रित्वबोधः। कपिञ्जलालभनन्याये तु वृत्त्यभावाद्धिंसाबाहुल्यभयाच् च न बहुत्वस्य त्रित्वे पर्यवसानम्। किञ्च सरूपसूत्रे भाष्ये एकश्च एकश्च द्वौ च द्वौ चेत्येवरीत्यैवशेषप्रसङ्गस्य सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच् च नैकशेष इति समाहितम्। एव चात्र द्वन्द्वोपि नेति तद्व्याख्यातारस्तद्वीत्येतन्मप्यसाधु। द्वात्रिंशत्रीतिपदेन तु न लोके व्यवहारः, पञ्चत्रिंशदितितद्व्याख्यातारस्तद्वीत्येदमप्यसाधु, द्वासप्तान्यपदार्थेतेतिदिक्। यदपि प्रसिद्धत्वनैव कल्प्यते तत्र प्रसिद्धिवशादेव पञ्चत्रिंशच्छतत्रयत्वाभसिद्धो सङ्ख्याकरणवैयर्थ्यापातात्। सङ्ख्याकरणं हि शिष्यबोधाय, तत्र शिष्याणां शतत्रयसङ्ख्याज्ञाने प्रसिद्धिपरतन्त्रत्व चेत् तदा गणना मुधैव स्यात्। अपरश्च गणनाकरणं हि बोधसौकर्याय। तत् तु द्वात्रिंशञ्च त्रिशत चेतिविग्रह एवेति। भवदुक्तेस्तु विष्टत्वेन न श्रीधराभिमतत्वात्तादृशो विग्रह इति दिक्। केचित् तु नेदं श्रीधरपद्य किन्तु प्राचां श्रीधरेणोपन्यस्तं पूर्वापरविरोधादित्याहु, तत्रापि श्रीधरैरभीष्टत्वादेवोपन्यस्तम्, नो चेत् कथमुपन्यसेत्। एतेन श्रीधरमतेपि प्रक्षिप्तत्व सिद्धम्। किञ्च न वयं श्रीधराभिमततया प्रक्षिप्तत्वमङ्गीकुर्म', किन्त्वनेकदोषदूषितत्वेन तत्समङ्गीकुर्मः। यच्चापि न चासुरमुक्त' सिद्धान्तविरुद्धत्वात् तदीयत्वमितिशङ्कामुद्भाव्य श्रीकृष्णभाक्तिषु सर्वेषु दृष्टत्वात्

'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनी'त्यादिगीतावाक्यमुपन्यस्य मां श्रीकृष्णलक्षणमप्राप्यैव न तु प्राप्येत्यङ्गीकारादित्युक्तम्, तत्र भवदीयाचार्यमतानुयायिभिर्विजयध्वजैः 'यातुधान्यपि सा स्वर्गमवाप जननीगति'मित्यादिश्लोके अपि स्वर्गं गर्हितं स्वर्गं नरकमित्यर्थः। 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चये'ष्विति पाणिनिः। (१-४-९६) जने ये नीचास्तैर्गम्यत इतिजननीगतिः स्पष्टोऽन्योर्थः। यद्वा जनन्या इ गतिं विचित्रगतिं योग्यतानुसृतमित्यर्थः। 'इ विचित्रे स्मरे क्षुमा'निति यादवः। अनेनापि पूतनाया नरकगतिः उपेक्ष्याः, स्वर्गगतिरितिसूचितम्। नु सविकल्पां गतिं योग्यत्वयेतिदोषः। यत्राऽस्तु योग्यतासदृशीं 'नु पृच्छायां विकल्पे च पश्चात् सादृश्ययोर'न्वित्यमर इति व्याख्यातम्, कंसवधोत्तरमपि 'स नित्यदोद्विग्नधिया तमीश्वरं पिबन् वदन् वा विचरन् स्वपन् श्वसन्, ददर्श चक्रायुधमच्युतं यस्तदेव रूपं दुरवापमाप' (१०-४४-३९) इत्यस्मिन् श्लोके अच्युतं चक्रं छद्मैवायुधं यस्यास्तमोदेवतायास्तच् चक्रायुधमन्यथाज्ञानसाध्यं यद् ददर्श तदेव तमोदेवताया रूपं नित्यलक्षणमाप दुरवापमित्युभयत्र सम 'चक्रं सैन्ये जलावर्ते रथाङ्गे च नरोष्ट्र्योः, सञ्चारे मण्डले वृत्तछद्मभेदार्थभेदयो'रिति चेत्युक्तम्, एवं च श्रीकृष्णमारितानामसुराणां न मोक्ष इति तेषां मतमिति त एव प्रष्टव्याः। एतेन न च पूतनाया जननीसाम्यं जननीमाहात्म्यविरुद्धिमेव्यम्, 'सद्वेषादिव पूतनापी'त्यादिवाक्येन जननीवेषमात्रतस्तत्प्राप्त्येत्यादिकमपि प्रत्युक्तम्। 'सद्वेषाद्यी'तिवाक्यं प्रक्षिप्ताध्यायस्थमितिबोध्यम्। मम श्रीमदाचार्यचरणैस्तत्र तत्र तेषां मुक्तेरुपपादितत्वात्। परन्तु न तस्याः भक्तिमुक्तिसाम्यम्, तेषां तत्र लय एव पुष्टिमार्गवर्तिनां साक्षात् पुष्टिपुरुषोत्तमलीलानुभव एवेति। अत एव तत्रापि—न च भक्तमाहात्म्येन तेषां तत्प्राप्तिरसमञ्जसा शुद्धभक्तेस्ताहशप्राप्तेरनुपादेयत्वात्, 'नात्यन्तिकं विगणयन्त्यपि ते प्रसाद'मित्यादिवचनशतेभ्य इत्युक्तम्, यत्तु चापि न च पुराणान्तराप्रसिद्धत्वेन सा लीला न सम्भावनीया पाद्मोत्तरखण्डे स्पष्टत्वाद्—इति जल्पितम्, तन् न रोचते विदुषाम्, 'तत्पक्षभूतमत्पूर्वेऽहिरूपोघासुरो हतः, भगिनी भ्रातृनिर्वेशी तस्य ब्रह्मगतिः कृता ॥१॥ मोचिता वत्सतत्पालास्तद्वक्त्रादन्तकालयात्, तस्मिन्नहनि मध्याह्ने मवत्सान् वत्सपालकान् ॥२॥ विधिर्जहार सम्पश्यन् प्रभावं गोपरूपिणः, पश्चाद्धापूरिते वर्षे वत्सपालान् प्रजापतिः ॥३॥ सर्वानाचष्ट वैकुण्ठं तुष्टाव नवमीदिने, कृष्णमायाहताः सर्वे क्षणार्धं मेनिरेऽर्भकाः ॥४॥ तैर्ज्ञातश्चाघ निहतोऽघासुरस्सखिना हि नः, गत्वा व्रजे ततो बाला इति सर्वे व्रजं जगु'रिति पद्मपुराणवाक्येषु लीलाप्रमानकथनात्। यथा हि 'गीतासारं प्रवक्ष्यामि सर्वगीतोत्तरोत्तरम्, कृष्णो यमर्जुनायाहे'त्यग्निपुराणे

गीतासारस्य भगवदुक्तत्वलिङ्गमुक्तम्, तथा चेदत्र किञ्चिद्भागवतीयत्वलिङ्गदर्शनं स्यात्, तदाङ्गीकर्त्तुं शक्येतापि। अतः श्रीभागवतीयत्वबोधकलिङ्गवाक्यादेरसत्त्वादङ्गीकारो न युक्तः। न च दूषणोद्धारे सति कथमयुक्तः, न च तेषामनुद्धार्यत्वम्, तथा हि तत्त्यागोक्तं पुनः कौमारलीलाकथनस्य चमत्कारविशेषाधानार्थत्वेन सन्दर्भविरोधस्य परिहारात् लीलानुकरणस्य च भावानुरोधित्वेनैतद्भावाभावेनैतदकरणाभावस्यापि शक्यवचनत्वात्। एवमन्येषामपि परिहृतप्रायत्वाच्च चेतिवाच्यम्। तथा सति कौमारलीलाकथनस्य चमत्कारविशेषाधानार्थत्वे हरिवंशविष्णुपुराणब्रह्मवैवर्तेषूक्ताना लीलानां तथात्वस्य तौल्येन तासामपि कथनप्रसङ्गात्। तासु न तथात्वमत्रैव तथात्वमित्यत्र विनिगमकाभावात्, अनुकरणाभावहेतुभूततादृग्भावस्य यो हेतुस्तस्याप्यशक्यवचनत्वेन तत्रापि समाधानाभावात्। भावाभावरूपेण हेतुना तत्कल्प्यैतल्लीलाभावस्यैव निश्चयाच्च चेत्यलम्। यच्च चापि श्रीवृन्दावने तत्तल्लीला-स्थानानि च प्रसिद्धानीत्युक्तम्, तत्रापि न हि लीलास्थानप्रसिद्ध्या श्रीभागवतस्थत्वं सम्भवति, बहूनां श्रीराधाकुण्डश्रीकृष्णकुण्डगुलालकुण्डाख्यदानगढाख्यमानगढाख्य-साकरीखोराख्यकदमखण्डीसङ्केतवटदोलास्थानखिसलनीशिलास्थानलुकलुककन्दरा--ख्येत्यादीनां तत्रानुदितानां प्रसिद्धत्वात् तत्रोदितानामप्रसिद्धत्वाच्च च। किञ्च श्रीमथुरामाहात्म्ये एतल्लीलास्थानस्याकथनाच्च च। यच्च चाप्युदितम्, न च गोपी-शब्दमात्रभ्रान्तैस्तासां 'स्नेहस्नुतस्तन्यपयःसुधासवं मत्वा परं ब्रह्म सुतानपाययन्'निति-द्वितीयाध्यायप्रतिपादिते स्तनपाने ताभिः सह रासाद्यनुपपत्तिरिति दूषणमुद्भाव्य तासां श्रीयशोदासमवयस्कत्वात् तत्प्रेयसीनां तु तत्समवयस्क-त्वाद्-इतिसमाधानं कृतं तन् न मोदते विदुषाम्। न हि श्रीयशोदावयस्यानामेव पुत्रवतीत्वं नियमाभावात्। किञ्च वयसा तुल्या इत्यर्थे 'नौवयोधर्मविषमूलमूलसीतातुला-भ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेष्वि'त्यनुशासनेन यत्प्रत्यस्य जायमान-त्वेन यथा (१०-५-२३) 'दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते, प्रजाशाया निवृत्तस्य प्रजा यत् समपद्यते'तिवाक्येनाशानिवर्तनकार्धिक्काले श्रीयशोदायाः पुत्रोद्भवस्तथा तासामेव सर्वासां तादृशकाल एव पुत्रोद्भव इति तु ब्रह्मणापि न वक्तुं शक्यम्, अनियतत्वात्। न च पूर्वमेव तदुद्भवेन पुत्रवतीत्वेनोत्तर वार्धत्वेन समवयस्कत्वमिति-वाच्यम्, तथा समवयस्कैस्सह श्रीकृष्णस्य 'कदाचिद् यमुनातीरे वत्सान् चारयतः स्वकैः, वयस्यैः कृष्णबलयोः' तेनैव साकं पृथुकाः सहस्रशः' इत्यादिवाक्यैः क्रीडादिवर्णनेन तत्पु-त्राणां तु तादृशलीलासाधकत्वाभावेनाग्रहणात्, तस्मादग्रिमरासलीलया निरूप्यत'इत्युक्तिः श्रीमत्पुरुषोत्तमानां दुष्परिहरैव। किञ्च तदानीं वयस्यानां पञ्चवार्षिकत्वेन तत्तल्लघेभ्यो

१ धर्मुषा तद्विनेषु प्राग्दिनीयप्रकरणे इदं यद्विधानार्थकं सूत्रम् ॥४-४-९१॥

भगवद्रूपेपि स्तनदानासङ्गतिश्च । यच्च चापि तत्प्रेयसीनां तु तत्समवयस्कत्वादित्युक्तिस्तदपि रभससंवलितैव, तथाङ्गीकारे 'यदा कदाचिद् गोप्यो मां मन्यन्ते च किशोरकम्, यशोदाबालरूपेण निश्चिनोति निरन्तरम्. बालभावगतं गोप्यो दृष्ट्वा मद्वचनोत्सुकाः, किशोरवयसा बाले रन्तुमिच्छन् मयानिशम्, तत् ते मृषावचादं मा मातुरग्रेऽनुवंस्तु ताः, दर्शनार्थं मन्मुखस्य समा जग्मुश्च पृथक्' इत्यादिपुराणवचनविरोधात् 'यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबला प्रगृहीतपुच्छै'रिति(१०-८-२४)श्रीभागवतवचनविरोधश्च । अत्र ह्यङ्गनाशब्दस्य विशेषा'स्त्वङ्गना भीरुकामिनी वामलोचने'त्यमरकोशेन तरुणीस्त्रीषु शक्तिबोधनात् । 'अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरं नाङ्गना' इत्यभाकल्पिते मण्डले मध्यगः सञ्जगौ वेणुना देवकीनन्दन' इति बिल्वमङ्गलोक्तौ तथा दृष्टत्वाच्च च । 'अन्तर्हिते भगवति सहसैव व्रजाङ्गना' इतिश्रीभागवते तथा दृष्टचरत्वाच्च च । किञ्चाङ्गनाशब्देनैव श्रीयशोदासमवयस्कत्वनिरासः त्वयापि वैष्णवतोषिण्यां 'अथ किञ्चिद् वयोतिरेकेण बलवृद्धिमाकर्ण्यादितस्ततोखिले व्रजमध्ये सर्वासामपि स्त्रीणामत्यानन्दो जनित' इत्याह यर्हीति, अङ्गनादर्शनीयेत्यादिकं तत्कौतुकं तासामेव प्राधान्यादित्युक्तम्, तच्च च सङ्कोचे विरुध्येतेतिदिक् । यच्च चापि तस्मान् न कश्चिद् विरोधः प्रत्युत भगवद्भक्तानां परममाहात्म्यमेवात्र सेत्स्यति, अतस्तदनुभवः श्रीभगवदनुग्रहविशेषेणैव सम्पद्यत इति तत् सुगोप्यमेवेत्येव तादृशं वचनमुपपद्यते अलमतिविस्तरणेतिवलितम्, तत् तु स्वगोष्ठीसामयिकं न कश्चिद् विरोध इति कथनमात्रम् । अत्रैव प्रथमाध्याये भगवतोघासुरमुखप्रवेशने तद्दर्शनेन 'तदा घनच्छदा देवा भयाद्धाहेतिचुक्रुशुः, जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवा' इत्यनेन कंसादीनां हर्ष उक्तः, तदुत्तरं च तदैव तत्त्वाशेन तद्दर्शनमप्यर्थादेव सिद्धम् । एवं सति यद्गोरिष्टवधोत्तरं नारदेन कंसायोदितं'याभ्यां ते पुरुषा हता' इति तद्विरुध्येत । तत्कीर्तनकालतस्त्वथ हो भवतस्य स्वयमेव दर्शनात् । किञ्च 'स्मार्त निरोद्धुं भगवान् मनो दधे तावत् प्रविष्टास्त्वसुरोदरान्तरं' 'घूर्णार्दितो दिष्टकृतेन विस्मित' इत्यतिविरुद्धम्, नहि भगवतो मनसः प्रतिकूलं कथमपि भवितुमर्हति, सर्वेषां मनसां नियामकत्वं भगवन्मनस इतिश्रुतिसहस्रसिद्धत्वात् । किञ्चैवं सत्यसङ्कल्पताहानिः भगवत्त्वहानिश्च । किञ्च दिष्टकृतनिरूपणं चात्ययोग्यतमम् । भगवतोपि दिष्टकृतत्वेन विस्मये दिष्टस्य बलिष्ठतया 'सर्वस्य वशी सर्वस्येशानः' 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतिश्रुतिविरोधः । किञ्च तस्य बलिष्ठतया वा तस्यैवोपासनाकरणं स्यात्, न तु तन्नियम्यस्य भगवत इतिनास्तिकमतपातः । न च भगवद्विचारात् पूर्वमेव प्रविष्टाः याचतावसदोषादानादितिवाच्यम् । न हि जीववद् विचारकरणं भगवतः सम्भवति सर्वज्ञत्वात्, गोपादिभिरेवज्ञानस्य मध्याद् रोध एव

कुतः स्यादिति जानीहि । किञ्च भगवद्भक्तानां न भगवदिच्छातिरिक्तं भाग्यं प्रबलम्, तदीयसम्प्रदायस्थमाधुर्यकान्दिविन्यां भगवद्भक्तानां सुखादिकं न प्रारब्धादिजन्यं किन्तु भगवदिच्छकमिति प्रतिपादितं विरुध्येत । किञ्चोभावपि 'वने कृष्णो विचिकाये'त्यनेन 'काप्यदृष्ट्वे'त्यनेन च भगवतो मोहाज्ञानकथनं बहुदोषकवलितम्, 'यः सर्वज्ञः स सर्ववि'दित्यादिश्रुतिविरोधाच्च च । किञ्च पूर्वापरविरुद्धाद्यनेकदोषाणामुदितत्वाच्च । भगवदनुग्रहादिकथनमपि न सम्भवति, 'गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयम्' 'आचार्यं मां विजानीयान् नावमन्येत कर्हिचिद्' इत्यादिवाक्येनाचार्यानुग्रह एव भगवदनुग्रह इति । भवता तु स्वाचार्यमार्गस्त्यक्तत्रयाध्यायस्य श्रीभागवतस्थत्वसमर्थनादाचार्यमतद्रोहे भगवदनुग्रहस्य दूरापास्तत्वात् । किञ्च अवतारानवतारदशायां सर्वोपकारार्थमाचार्यग्रन्थरूपाज्ञा क्रियते । तादृशाज्ञायां श्रीभागवतव्याख्यानरूपायामध्यायत्रयानङ्गीकारे गुर्वाज्ञाभङ्गेना'ज्ञाच्छेदी मम द्रोही न च भक्तो न मे प्रिय' इति । 'आज्ञा गुरूणां न विचारणीये'त्यादिवाक्यैर्भगवद्द्रोहित्वे स्वस्मिन्ननुग्रहविशेषाविष्करणं देवानां प्रियत्वेन पण्डितंमन्यत्वेन चोपपद्यते । सुगोप्यत्वकथनमपि प्रक्षिप्तस्थमेवेत्येतादृशवचनोपपत्तिस्तादृशैवेति । किञ्च गोप्यत्वे किं कारणं ब्रह्मणो ज्ञानकल्पनं च श्रीपुरुषोत्तमे भगवति चाज्ञानाविष्करणमितिमहाननयः । किञ्चातिगोप्यत्वं श्रीमद्व्रजरमणीरससिततरासलीलायास्तदतिरिक्तस्य तस्याभावादिति । एतेनैव 'वधश्च वत्सवकयोस्तथाघासुरबोधिनः, वत्सचोरो ब्रह्ममोहो ब्रह्मणा स्तवनं हरे'रितिबोपदेवोक्तौ पादत्रयमनवधानविजृम्भितमेव उपदर्शितानां दोषाणामनपायात् । अत एव 'आधुनिकानां वृन्दावनीयमभृतीनां यस्तत्र भागवतीयाग्रहस्स श्रद्धाजाड्यमूलक एवेतिसुधिभिरवधेय'मिति श्रीपुरुषोत्तमैरुक्तमितिश्रीमदाचार्यवर्याणां निर्दुष्ट एव पन्था इतिश्रीमदाचार्यचरणानुग्रहेणैव तदीयोक्तिज्ञानमित्यलं बहुलेखनेन ।

> इतिश्रीवल्लभाचार्यश्रीविट्ठलपदाब्जयोः ।
> कृपाबलं समाश्रित्य प्रक्षेपोक्तिसमर्थनम् ॥१॥
> कृतं मया प्रसीदन्तु स्वामिनो मम सर्वदा ।
> छेत्तव्यः संशयोनेन साधुभिर्गतमत्सरैः ॥२॥

इतिश्रीसर्ववादतमोभरविघटनविरोचनश्रीमद्वल्लभाचार्यात्मजश्रीमत्प्रभुचरणात्मज-महाराजश्रीयदुनाथकुलोद्भवश्रीमद्गोस्वामिश्रीगोपालतनय-श्रीमद्गोस्वामिश्रीगिरिधरविरचिताध्यायत्रयप्रक्षिप्तत्वसमर्थनं समाप्तिमव्राजीत् ।

श्रीकृष्णाय नमः ।

# अध्यायत्रयप्रक्षिप्तत्वसमर्थने श्रीमद्गङ्गाधरभट्टकृता जपमाला ।

प्रणम्य श्रीमदाचार्यान् श्रीमत्प्रभुवरान् गुरून् ।
अध्यायत्रयवैगीत्यं किमितीति विचिन्त्यते ॥१॥

तत्र तावदितररीत्या धर्मिग्राहकमानेनैव द्वात्रिंशत्त्रिशतमध्यायाः सिध्यन्ति, प्रकम एव 'द्वात्रिंशत्त्रिशतं चे'तिश्रीधरस्वाम्युक्तेः ॥१॥ न च द्वात्रिंशच्च त्रयश्च शतानीतिविग्रहे समाहारैकवद्भावेन पञ्चत्रिंशदधिकशतत्रयमित्यर्थो भविष्यतीतिवाच्यं ''द्वन्द्वे घी'तिशब्दस्य पूर्वनिपातापत्तेः ॥२॥ 'सङ्ख्याया अल्पीयस्या' इतिवार्तिकाद्यात एव 'द्वात्रिंशदि'तिप्रयोगः ॥३॥ '''अल्पाच्तर'मितिसूत्राच्च च ॥४॥ न च 'समुद्राभ्राद्धः' 'लक्षणहेत्वो'रित्यादिनिर्देशात् पूर्वनिपातप्रकरणमनित्यमिति वाच्यं, तावताप्यौत्सर्गिकप्रवृत्त्यापत्तेः ॥५॥ लक्षणैकचक्षुष्काणामौत्सर्गिकप्रवृत्त्यैव लक्ष्यासिद्धेः सिद्धान्ताच्च ॥६॥ सौत्रपूर्वनिपातप्रकरणस्यानित्यत्वेपि वार्तिकस्यातथात्वाच्च, अन्यथा त्रिंशद्द्वीत्यादिप्रयोगापत्तेश्च ॥७॥ शतानीतिपदे त्रयाणामेव ग्रहणे मानाभावाच्च च ॥८॥ न च प्रथमातिक्रमे कारणाभाव एव मानमितिवाच्यं प्रत्यासत्तिवद्व्याप्तिन्यायेन परार्धे ग्रहणापत्तेर्विनिगमनाविरहात् ॥९॥ समासस्वभावेनोपसर्जने सङ्ख्याऽप्रत्ययस्य महाभाष्यादावुक्तेश्च ॥१०॥ न च 'कपिञ्जलालम्भन'न्यायेन बहुत्वसङ्ख्यायास्त्रित्व एव पर्यवसानमितिवाच्यं, तत्र 'न हिंस्यात् सर्वा भूतानी'तिश्रुतिविरोधभिया शास्त्राकरणे दोषभिया च कपिञ्जलानालभेतेतिश्रुतप्रामाण्यात् त्रित्वे पर्यवसानेपि प्रकृते तद्विरहात् ॥११॥ अत एव वा हिंसाद्यभावादुत्तरादोहनेन त्रित्वनियमः सान्नाय्यदोहं प्रकृत्य हि श्रूयतेवाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्तारभ्य तूष्णीमुत्तरा दोहयतीति तत्र यावद् यजमानस्य गोजातं तावद् दोग्धव्यमितिराद्धान्तितं तत्र समासभावेन बहुत्वदर्शनेपि प्रकृत एकत्वादीनामपि संशयात् च ॥१२॥ प्रत्युत हिंसाभयादल्पसङ्ख्यायां बहुत्वपर्यवसानवत् प्रकृते माहात्म्यविशेषादधिकसङ्ख्यासम्प्रत्ययापत्तेश्च ॥१३॥ न च त्रिपदे तन्त्रमितिवाच्यम्, अतिदुर्बोधत्वात् ॥१४॥ एकशेषसमकक्षेण तन्त्रेणात्र भवितुमयोग्यत्वात् ॥१५॥ वैयाकरणनव्यानां मतेऽसहविवक्षणे अपि तन्त्राभ्युपगमेन मानं प्रकृते दृढम् ॥१६॥ किञ्च स्पष्टार्थं पञ्चत्रिंशदित्येव त्वदभिमते उच्येत ॥१७॥ न च श्लोकस्तथा दुष्कर इतिवाच्यं तथात्वे हि देवानां

१-२ सि० कौमुद्यां द्वन्द्वसमासे सूत्रमिदम् ॥ २-२-३२

३ 'समुद्राभ्राद्' इत्युक्तिस्तु पूर्वनिपातप्रकरणानित्यत्वज्ञापनार्था इति सि० कौमुद्यां वैदिकप्रक्रियायाः सुबोधिन्यामुक्तम् । लक्षणहेत्वोः क्रियायाम् इति सूत्र कृदन्तप्रक्रियायाम् ॥

प्रियता त्वया स्वामिषु साधिता भविष्यति ॥१८॥ पञ्चत्रिंशदथो शतत्रयमिताः शाखा इत्यादिरीत्यापि सुपठत्वाच्च ॥१९॥ यत् त्वध्यायलीलाया गुप्ततया द्वात्रिंशदित्याद्युक्तिरिति, तत्रापि चिन्त्यते, किं ब्रह्मणोऽज्ञानकल्पनाया गुप्ततेति न, इतोपि विगीततया वक्ष्यमाणत्वात्, अथ वा लीलाया रहस्यत्वं तदपि न, रासलीलातोऽनतिरेकात् ॥२०॥ न च तत्र गोप्यत्वेनोक्तिरेव हेतुः अप्रयोजकत्वात् ॥२१॥ बहुत्र एकादशादौ गोप्यत्वेनोक्तेश्च ॥२२॥ न च स्वेच्छयैव भङ्ग्यन्तरेणोक्तिरिति साम्प्रतम् इतोपि प्रक्षिप्तत्वसिद्धेः ॥२३॥ नाप्यत्राध्यायबोधनेन तात्पर्यं प्रतिस्कन्धं प्रत्यध्यायं च तदुक्तेरित्यपि युक्तम्, उपक्रम एव द्रष्टुस्तद्बोधाभावात् ॥२४॥ अपि च सङ्ख्या हि बोधसौकर्यार्था तथा च स्पष्टमेव वाच्यमित्युक्तं प्रथमस्कन्धे प्रथमेध्याय एव तदनुक्तिश्च ॥२५॥ यत् तु प्रसिद्धत्वादेव शतपदेन शतत्रयं गृह्यत इति तदपि न, पञ्चत्रिंशतोपि तत एव लाभे स्कन्धानां च द्वादशत्वाद्युक्तिवैयर्थ्यात् ॥२६॥ किञ्च सरूपसूत्रस्य भाष्यविरोधः तत्र हि एकश्च द्वौ च द्वौ चेत्येवं चकारेण एकशेषमाशङ्क्य सङ्ख्याया अर्थासम्प्रत्ययादसत्पदार्थत्वाच्च नैकशेष इतिसमाहितम् तत्रान्यपदार्थत्वादित्यस्यान्यपदवाच्यत्वादित्यर्थः। द्वौ च द्वौ चेत्यस्य चत्वार इत्यर्थं इतिभाष्ये प्रदर्शनात्। एवं चात्र द्वन्द्वोपि नेतिभाष्याभिप्राय इतिव्याख्यातारः ॥२७॥ यत् [illegible] भाष्यस्य एकादिनवान्तानां द्वन्द्वैकशेषो नेत्याशयः न तु दशादिभिरपीति एकादशाविंशती इतिद्वन्द्वैकशेषयोर्भाष्ये एव प्रदर्शनादिति, तच्चिन्त्यं, उत्तरभाष्ये नेमौ पृथक्परिहारौ गार्ग्यश्च गार्ग्यायणश्च गार्ग्याविेत्यत्र प्रथमहेतुव्यभिचारात्। विंशतिश्च विंशतिश्च विंशती इत्यत्रान्त्यहेतुव्यभिचाराव् किन्तु एक एवायं परिहारः। न च प्रथमो व्यभिचारस्तत्रार्थसम्प्रत्ययोप्यन्यपदार्थत्वाभावात्। नापि द्वितीयः, अन्यपदार्थत्वेप्यर्थसम्प्रत्ययादित्युक्तेः। एवं च द्वात्रिंशत्रीतिपदे हेतुद्वयभावान् नैव भाव्यं द्वन्द्वेनेति युक्तम् ॥२८॥

न चास्यार्थसम्प्रत्यायकत्वमेव शिष्टप्रयोगादितिविप्रतिपत्तव्यं सम्प्रत्ययस्य लोकसाधारण्येनैयाह्वीकाराल् लोके सङ्ख्याया एवंप्रकारिकाया अदर्शनात् ॥२९॥ शिष्टतात्पर्यस्य यथाश्रुतत्वं एव मया प्रतिपादिते तत्रैवावाशिष्टत्वाच्च ॥३०॥ यत् तु द्वात्रिंशच्च त्रिशतं चैषां समाहारे रूपमुत्तरपदे तु त्रयश्च शतानीति तत् तुच्छं प्रागुक्तानेकदूषणाविनिर्मुक्तत्वात् ॥३१॥ यच्च त्रिंशत् पञ्च शतानीतिपाठादपि सिद्धे त्रिपदस्योभयत्रान्वयस्तन्त्रेण सूच्यत इति, तदपि तुच्छं, तथा सिद्धे तथैव सुपठत्वे द्रविडप्राणायामयोगात् ॥३२॥ यदि तथोक्तौ पञ्चपदस्य शतविशेषणता स्यादिति बिभेषि तदा द्वात्रिंशदित्युक्तौ तावन्मात्रप्रतीतेः किं न बिभियाः ॥३३॥ न चैवं स्कन्धाध्यायकल्पनायां पूर्वापरविरोध इतिशङ्कनीयं विगीतश्लोकव्याख्यानवदुपपत्तेः ॥३४॥ न चैवं विगीतत्वानुक्तिः किमितीतिवाच्यं, प्राचीनरीत्या व्याख्यानादत्र हेत्वन्तरस्य वक्ष्यमाणत्वाच्च ॥३५॥ एवं च सूत्रवार्तिकभाष्याणां

न्यायायां चापि सम्मतेः शतत्रयं च द्वात्रिंशदितिश्रीधरसम्मतिः । माध्वाचार्या अपि प्राहुः प्रायः प्राचीनपुस्तके, अध्यायत्रितयादृष्टेरिमे नादृष्टकारिणः ॥३६॥ श्रुतिकाशिकाकृद्भिरप्याचार्यसुदर्शनैः, 'उपेक्षिता इमेध्याया न वै ते आचचक्षिरे' ॥३७॥ इत आरभ्याध्यायत्रयं प्रक्षिप्तमिति व्यासार्यैरुपेक्षितमथापि प्रायशो व्यवह्रियमाणत्वात् कैश्चिद्व्याख्यातत्वाच्च व्याख्यायते इतिवीरराघवाचार्यादिटीकायामपि प्रायश इत्यादिपदेन कचिदध्यायानामलेख उक्तः ३८॥ अध्यायत्रयवैगीत्यमितिप्राहुश्चिरन्तनाः । श्रीमदाचार्यैतत्पुत्रैरुच्यते तस्य हेतवः । तथा हि 'कौमारं जहतुः' 'ततश्च पौगण्डवयःश्रिता'विति सन्दर्भयोग्यताध्यायत्रयस्य प्रक्षिप्ततां प्रतिपादयति ॥३९॥ न चैतदर्थमेव ब्रह्मस्तुत्यन्ते पुनरेव तच्छ्लोकपाठ इतिवाच्यं पुनः पाठादेव तस्य प्रक्षिप्तत्वात् ॥४०॥ टीकायां तदव्याख्यानाच्च ॥४१॥ न च स्पष्टत्वान् न व्याख्यातमिति युक्तं पुनः पाठेन पूर्वोक्तस्मारकतया तस्य व्याख्येयत्वात् ॥४२॥ सर्वपुस्तकेष्वनुपलम्भाच्च ॥४३॥ किञ्चैवमेकादशाध्यायसमाप्तौ तच्छ्लोकवैयर्थ्यं स्यात् ॥४४॥ अपि च 'पौगण्डे परिकीर्तितमि'तिवाक्यात् पूर्वाध्याय एव तत्प्राप्तौ 'ततश्च पौगण्डवयःश्रिता'-वितिवचोविरोधः ॥४५॥ तद्वैयर्थ्यं च ॥४६॥ अत एव गोपिकाभिरपि पञ्चाध्याय्यां विरहे सर्वलीलानुकरणेप्येतल्लीलाननुकृतिः प्रधानलीलात्वेप्येतस्याः । न च 'विषजलाप्ययाद् व्यालराक्षसादि'त्यत्र तागिर्गतित्वात् कथं न स्वीकरोतीतिवाच्यम्, 'वृषमयात्मजादि'त्यग्रिमपाठात् सुदर्शन एव ग्रहितुमुचितत्वात् ॥४७॥ श्रीनन्दस्य श्रीगोवर्धनोद्धरणानन्तरं गोपसंवादेपि नानुवादः ॥४८॥ कंसवधोद्यमे नारदेन नैतदनुवादः कृतः ॥४९॥ तृतीये श्रीमदुद्धवैरपि नैतदुक्तम् ॥५०॥ अनुक्रमणिकाध्याये द्वादशेप्येतदनुक्तिः ॥५१॥ 'न भारतीमेङ्ग मृषोपलक्ष्यत' इतिद्वितीयस्थब्रह्मवाक्यविरोधश्च ॥५२॥ 'भवान् कल्पविकल्पेषु न विमुह्यती'तिभगवत्प्रतिज्ञाविरोधश्च ॥५३॥ 'तोकेन जीवहरण'मित्यादिवदतः सदेश्वरत्वेन ज्ञानवतस्ताहग्धाष्टर्यस्यासम्भवश्च ॥५४॥ किञ्च द्वितीये ब्रह्मणा नारदं प्रति लीलान्तरकथनवत् स्वकृतकर्मकमोहनलीलाप्राधान्यावश्यकत्वाच्च वाच्यैव तदनुक्त्या सा नैव कृतेतिज्ञायते ॥५५॥ तृतीयेपि भगवद्ब्रह्मसंवादेन वरदानोत्तरं भगवत्स्वरूपज्ञातृत्वं ब्रह्मण इतिलक्ष्यते ॥५६॥ न चैव'मकामां चकमे क्षत्तः सकाम इति नः श्रुत'मितितृतीयवाक्यं 'न भारती मेङ्ग' इत्यादिना विरुध्यत 'इतिवक्तव्यम्, इति नः श्रुतमि'तिपरमतत्त्वादितिकेचित् ॥५७॥ वस्तुतस्तु वैदिकसृष्ट्यतिरेकेण लौकिकगद्यपद्यमयीं सृष्टिमपि इच्छतो ब्रह्मणोपि सनकाद्यनिर्गमे तनुत्यागे नीहारोत्पत्त्याः प्रयोजकत्वं सत्कर्मणो ब्रह्मण इतितृतीयविवरण एव स्थितत्वाददोषः ॥५८॥ किञ्च शब्दार्थरचना नवीनैवोपलभ्यते ॥५९॥ अक्रूरस्तवनादेश्च चौर्यमत्र कृतं महत् ॥६०॥ स्तुतिश्च मायावादेन नान्यत्र ब्रह्मणा कृता ॥६१॥ 'स्वानां निरोद्धुं भगवा'निति चात्र न युज्यते सत्यसङ्कल्पताहानेः ॥६२॥ न वा दृष्टं मयलं हरेः ॥६३॥ न चाद्ये'ऽस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद् बकवद् विनङ्क्ष्यती'ति(१०-१२-२४)

भक्तसङ्कल्पपरिपूरणाय स्वसङ्कल्पत्याग इतिचक्रवर्त्युक्तं युक्तं विकल्पाक्षमत्वात् । तथा हि किं भक्तसङ्कल्पं भगवान् जानाति न वेति, आद्ये ज्ञात्वा स्वसङ्कल्पे निःप्रयोजने मानाभावः ॥६४॥ द्वितीये सार्वज्ञ्यहानिः ॥६५॥ न चैवमेवेयं लीलेतिवाच्यं प्रयोजकविरहात् ॥६६॥ यच्च च दिष्टपदं कालवाचि 'कालो दिष्टो'पीतिकोशात्, कालश्च लौकिकी लीलासम्बन्धीति तदपि चिन्त्यं तथापि विस्मयानुपपादनात् ॥६७॥ 'जह्युर्ये च कंसाद्या ' इत्यपि चिन्त्यं तत्र कंसाभावात् ॥६८॥ न च चारद्वारा सद्य एव वार्ताज्ञानमित्यपि युक्तं 'हरिस्तुण्डमविशद्' देवाश्चुकुशु' 'गले तरसा ववृधे' इतिसमन्वयाद् हरिवेगापेक्षया चाराणामधिकवेगाभावात् ॥६९॥ किञ्च 'पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन् विनिष्पाट्य विनिर्गतो बहि'रित्यसङ्गतं, अन्तरङ्गे देहमध्ये पवननिरोधे गलद्वारे बकाशाभावेन मूर्धस्थानान्तरादेव पवननिर्गमस्य वक्तव्यत्वात् ॥७०॥ न च मुखप्रवेश एव तदितियुक्तं द्वारान्तरद्वारापि निर्गमनसम्भवात् ॥७१॥ 'तरसा ववृधे गले' इतिपूर्ववाक्यविरोधाच्च च ॥७२॥ द्वितीयेध्याये'पि 'गुह्यं वदामि ते' इत्यत्र गुह्यत्वे कारणं चिन्त्यं कारणान्तरं तु प्रागेव दूषितम् ॥७३॥ 'प्राप्तः परं विस्मयमि'त्यत्र पूतनादिमोक्षे कुतो न विस्मय इत्यपि चिन्त्यम् ॥७४॥ 'क्वाप्यदृष्ट्वे'त्यत्र दर्शनाभावोत्तरकालिकं ज्ञानं सार्वज्ञ्यं विहन्ति ॥७५॥ न च पूर्वश्लोकेऽदृष्ट्वा वन इत्यन्वयः ॥७६॥ दुर्बोधत्वात् ॥७७॥ शब्दास्वास्थ्याच ॥७८॥ पूर्वश्लोकेपि तत्पदस्य सत्त्वाच्च ॥७८ अपि च 'स्नेहवल्ल्यव्दमन्वहं शनैर्निःसीम ववृधे' इत्यत्र शनैर्वृद्धौ कारणं चिन्त्यम् ॥७९॥ क्लिष्टयोजनयार्थान्तरकरणं त्वनुपदमेव दूषितम् ॥८०॥ श्रीबलदेवस्याज्ञानकल्पनं चात्यन्तायुक्तं पूर्वोत्तरप्रकरणे तदद्दर्शनात् ॥८१॥ न च तस्य भगवत्त्वं नेतिशङ्क्यं 'अहो अमी देववरे'त्यग्रे भगवतैव तथास्तूयमानत्वात् ॥८२॥ किञ्च भगवताग्रजत्वेन स्वीकारात् तद्वञ्चनानौचित्यम् ८३॥ नापि श्रीदामादिवियोगदुःखाभावायेति युक्तं स्वस्य तत्तुतो नेति पर्यनुयोगार्हत्वात् ॥८४॥ बलदेवस्यापि भगवत्त्वेन विरक्तत्वाच्च च ॥८५॥ वर्षात्मकस्य कालस्य त्रुटित्वे कोषपत्तिरितिचिन्त्यम् ॥८६॥ किञ्चेन्द्रादीना भगवतापमाने कृतेऽपमानजन्येर्ष्यावेशकृतो भगवत्स्वरूपविषयको मोहो भवतु नाम तत्र भगवतो ब्रह्मणस्तदभावात् प्रत्युत तदपराधचिकीर्षा न घटते ॥८७॥ किञ्च पूर्वार्धे स्वतो लीलेतिसिद्धान्तादपि दोष इत्यप्याहुः ॥८८॥ अपि च गोपीना भगवति परमानन्दे सहजशृङ्गाररसाङ्गीकाराद् भगवतो गोपरूपत्वे तन्मातृणामवचनानर्हभावोदयापत्तिर्भवन्मते स्यात् ॥८९॥ अमान्मन्ते नु सुनरामेषां विभीनत्वं प्रकरणाद्यर्थविरोधाच्च च ॥९०॥ एष्वध्यायेषु प्रपञ्चविस्तारणपूर्वकभगवदासक्तिरूपस्य स्कन्धार्थस्याभावश्च ॥९१॥ ब्रह्मणो निरुद्धस्यानिरुद्धतां विधाय पुनर्निरोधकरणे पिष्टपेषणापत्तिश्च ॥९२॥ ब्रह्मणो राजसत्वेन तामसप्रकरणविरोधाच्च च ॥९३॥ अत एव वोपदेवपण्डितैरपि प्रथमेष्टादशाध्यायास्तत्र प्रकरणत्रयमित्यादिरित्या

गणितम्, तेषामपि पञ्चत्रिंशदित्युपलभ्यमानेऽरुचिरिति हि गम्यते। एवं च नान्यादृशतदुक्तप्रकारेभिनिविष्टव्यम्॥९४॥ न च तेनत्रयोध्यायाः प्रक्षिप्ता इति किं नोक्तमितिवाच्यं चिरन्तनप्रसिद्धया द्वात्रिंशज्ज्ञानेपि के प्रक्षिप्ता इति तैरविचक्षणात्॥९५॥ एवमेव श्रीधरस्वामिभिरपि सौन्दर्यादज्ञानाद्वा व्याख्याता अध्याया इत्यपि वक्तुं शक्यम्॥९६॥ अत एव द्वात्रिंशत् त्रिशतञ्चेतिपदद्वयस्वरसाच्च चकारसार्थक्यम्॥९७॥ न च चकारो भिन्नक्रमबोधनार्थं पूर्वार्धं सामानाधिकरण्येन च योन्यत्र वैय्यधिकरण्येनेतिवाच्यमप्रयोजकत्वात्॥९८॥ भिन्नविभक्तिनिर्देशेनैव तल्लाभाच्च च॥९९॥ अतिसुलभ इष्टद इतिविशेषणयोः पुनरपि सामानाधिकरण्याच्च॥१००॥ न चोपमानोपमेययोः सामान्यधर्मस्यैकवदेनोपादानमित्यपि नियमः, प्रकृत एव सहस्राण्यष्टादशेतिपदत्रयेण तन्निर्देशादत एवा'स्तनः संज्ञाया'मित्यत्वं नेत्यभियुक्ताः॥१०१॥ न च पूर्वोक्तमिथोविरोधवर्णने तत्र तत्राचार्यचरणोक्तिविरोधः। 'शब्दार्थसङ्गतीनां च स्पष्टा तत्र विरुद्धते'तिपूर्वं प्रतिज्ञायानास्थया तदुक्तेः॥१०२॥ न चानुक्रमणिकाध्यायेजामिलोपाख्यानानुक्तिविरोधः,नरकजेपत्यात्तत्प्रकरणस्य नरकवर्णनानुक्रमणेनैव तदनुक्रमणादविरोधात्॥१०३॥ अत्र तु सर्वत्रापि देशेष्वैतिह्यमात्स्यैव तेऽविगीता इति तदेव विगीतं माध्वाचार्यादिग्रन्थपर्यालोचनात्, तत्रो हि अलेख एवैषामुपलभ्यते॥१०४॥ यत्तु च प्राचीननवीनटीकासम्मत्या सिद्धेऽविगीतत्वे विगीतत्ववाद एव विगीत इति तदपि न, साम्प्रदायिकानामेकवाक्यतायामसम्प्रयिवाख्यानामेव विगीततासम्पत्तेः प्रतिवादे निग्रहस्थानत्वाच्च च॥१०५॥ यदपि श्रीवृन्दावने तल्लीलास्थानप्रसिद्धया स्वेष्टं साधयन्ति तन्नासाधीयः, इदानीं प्राचीनस्थानानां विशकलितत्वेनेदानीन्तनकल्पिततलीलानुसरणेन च पुराणान्तरप्रसिद्धकल्पान्तरीयलीलानुसारितया च स्थानानामदिष्टसिद्धिविघातकत्वाभावात्॥१०६॥ न च स्यात्त्रिशतीरूपं पात्रादिष्वस्य कल्पनात् त्रियुगं च त्रिभुवनं त्रिपूर्वं दृश्यते बहु॥१०७॥ न चेदेतच्छ्रीधरीयं पद्यं प्राचां भविष्यति प्रमितं श्रीधरैर्नो चेत् तै रूपं किं न संस्तुतं स्तुतिर्मूलेपि यत्रास्ति स्तुतं तदनुसारतः॥१०८॥ 'त्र्यक्षरं पूर्व'मितिवाक्यं चापि विरुध्यते॥१०९॥ अत एव पुराणान्तरे 'ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसम्मितः हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा, गायत्र्या यस्य प्रारम्भस्तद् वै भागवतं विदुः, स्कन्धा द्वादश एवात्र कृष्णेन विहिताः शुभाः, द्वात्रिंशत्त्रिशतं पूर्णमध्याः परिकीर्तिता' इति। अत्र पूर्णपदस्वारस्याद् यथोक्तमेवाभिमतम्। ननु तर्हि'पञ्चत्रिंशोत्तराध्यायास्त्रिशतीयुक्त ईश्वर' इति कथं कैश्चिदुच्यते, तत्रोच्यते, श्रीमद्भागवतस्याष्टादशपुराणगणनायां पञ्चमत्वस्य विजयवादे साधितत्वात् वृत्तौ सङ्ख्यावाचकानां पूर्णप्रत्ययार्थताया 'आचतुरं हि मे पशवो मिथुनायन्त'इत्यादौ दर्शनात् पञ्चशब्दस्य पञ्चमे भागवते त्रिंशोत्तरा नाम द्वात्रिंशत्त्रिशतीयुक्ता इतिव्याख्येयम्, परे तु कृत्यभावेपि पूर्णार्थतामिच्छन्ति, ज्योतिःशास्त्रे धर्मशास्त्रे

तथा दर्शनात्, 'षट् चतुर्भ्यश्च'तिसूत्रे चतुर्ग्रहणं सार्थकं पूरणार्थे मा भूदिति, अन्यथा पुराणान्तरीय'द्वात्रिंशत्त्रिशत पूर्णमध्याया. परिकीर्तिता' इत्यत्र पूर्णपदविरोधो दुरुद्धर', द्वात्रिंशत्त्रिशतमितिपाठवचनं दामोदरा उदाजहु । केचित् तु पक्ष इति पञ्चस्थाने पठन्ति, अन्ये तु यथा दोषदर्शनेन 'प्रथमेऽष्टादशाध्याया' इत्यादिना यथाध्यायद्वयस्थाने कुत्र कुत्रैक्य कृत्वा एकत्रिंशोत्तरत्रिशती उच्यते, विद्यमानपञ्चत्रिंशत्सङ्ख्या नाद्रियते, तथा श्रुवादिचरिते एकैकाध्यायस्य अध्यायद्वयतां विदधते, एतेन वचनद्वयस्यापि भागवतानुक्रमण्या विरोध उद्धृतः । केचित् तु नेमं हरगौरीतन्त्रस्थं वचनम् प्रमाणयन्तीति दिक् । स्यादेतत् ।'य एतत्पूतनामोक्ष'मितिपद्यं तु केचन विगीतमाहुस्तेषेवं प्रष्टव्या न वयम् । न तु 'पूतना लोकबालघ्नी'त्यादिपद्ये मानान्वितम् । पूर्वोत्तरग्रन्थयोर्हि सन्दर्भः सुन्दरोऽन्यथा तेऽन्यपि श्लोकेषु 'तन्मातर' इतिवसुदेवस्त्रिय इतिव्याचख्युरितिसुबोधिन्यां पद्यश्लोक-स्वरसाद् गोपीपरत्वं न युक्तमिति तदाशय',इतोऽप्यधिकं तत्र तत्राकरे द्रष्टव्यमिति दिक् ।

आन्ध्रो गङ्गाधरो भट्टः गिदागुरुकृपाबलः ।
अशुद्धबुद्धिशुद्ध्यर्थं जपमालां समाप्तवान् ॥१॥
अशुद्धबुद्धयोऽध्यायान विगीतान् ये न मन्वते ।
तद्धीः सम्पत्स्यते शुद्धा जपित्वा मालयासकृत् ॥२॥

इत्यान्ध्रदेशीयगिदोपाह्वश्रीमद्गङ्गाधरभट्टकृता जपमालेयं गुरुकृपाबलेन समाप्ता ।



## इतिश्रीमद्भागवतीयदशमस्कन्धस्य नवत्यध्यायेषु द्वादशत्रयोदश-चतुर्दशाध्यायानां प्रक्षिप्तत्वसमर्थनं

## समाप्तम्



( सं. १९९२ का. शु. ६ )

तथा दर्शनात्, 'षट् चतुर्म्यध्ये'तिसूत्रे चतुर्ग्रहणं सार्थकं पूरणार्थे मा भूदिति, अन्यथा पुराणान्तरीय'द्वात्रिंशत्त्रिशतं पूर्णमध्यायाः परिकीर्तिता' इत्यत्र पूर्णपदविरोधो दुरुद्धरः, द्वात्रिंशत्त्रिशतमितिपाद्मवचनं दामोदरा उदाजह्रुः । केचित् तु पक्ष इति पञ्चस्थाने पठन्ति, अन्ये तु यथा शोपदेवेन 'प्रथमेऽष्टादशाध्याया' इत्यादिना यथाध्यायद्वयस्थाने कुत्र कुत्रैक्यं कृत्वा एकत्रिंशोत्तरत्रिशती उच्यते, विद्यमानपञ्चत्रिंशत्सङ्ख्या नाद्रियते, तथा ध्रुवादिचरिते एकैकाध्यायस्य अध्यायद्वयतां विदधते, एतेन वचनद्वयस्यापि भागवतानुक्रमण्या विरोध उद्धृतः । केचित् तु नेमं हरगौरीतन्त्रस्थं वचनम् प्रमाणयन्तीति दिक् । स्यादेतत् ।'य एतत्पूतनामोक्ष'मितिपद्यं तु केचन विगीतमाहुस्तेऽवयं प्रष्टव्या न वयम् । न तु 'पूतना लोकबालघ्नी'त्यादिपद्के मानान्वितम् । पूर्वोत्तरग्रन्थयोर्हि सन्दर्भः सुन्दरोऽन्यथा तेष्वपि श्लोकेषु 'तन्मातर' इतिवसुदेवस्त्रिय इतिव्याचख्युरितिसुबोधिन्यां पद्यश्लोक-स्वरसाद् गोपीपरत्वं न युक्तमिति तदाशयः,इतोऽप्यधिकं तत्र तत्राकरे द्रष्टव्यमिति दिक् ।

आन्ध्रो गङ्गाधरो भट्टः गिदागुरुकृपाबलः ।
अशुद्धबुद्धिशुद्ध्यर्थं जपमालां समाप्तवान् ॥१॥
अशुद्धयुद्धयोऽध्यायान् विगीतान् ये न मन्वते ।
तद्धीः सम्पत्स्यते शुद्धा जपित्वा मालयासकृत् ॥२॥

इत्यान्ध्रदेशीयगिदोपाह्वश्रीमद्गङ्गाधरभट्टकृता जपमालेयं
गुरुकृपाबलेन समाप्ता ।



**इतिश्रीमद्भागवतीयदशमस्कन्धस्य नवत्यध्यायेषु द्वादशत्रयोदश-चतुर्दशाध्यायानां प्रक्षिप्तत्वसमर्थनं**

# समाप्तम्

( सं. १९९२ का. शु. ९ )

गणितम्, तेषामपि पञ्चत्रिंशदित्युपलभ्यमानेऽरुचिरिति हि गम्यते। एवं च नान्यादृशतदुक्तप्रकारैभिनिवेष्टव्यम्॥९४॥ न च तैस्त्रयोध्यायाः प्रक्षिप्ता इति किं नोक्तमितिवाच्यं चिरन्तनप्रसिद्ध्या द्वात्रिंशज्ज्ञानेपि के प्रक्षिप्ता इति तैरविचक्षणात्॥९५॥ एवमेव श्रीधरस्वामिभिरपि सौन्दर्यादज्ञानाद्वा व्याख्याता अध्याया इत्यपि वक्तुं शक्यम्॥९६॥ अत एव द्वात्रिंशत् त्रिशतश्चेतिपदद्वयस्वरसाच्च चकारसार्थक्यम्॥९७॥ न च चकारो भिन्नक्रमबोधनार्थं पूर्वार्धे सामानाधिकरण्येन च योन्यत्र वैय्यधिकरण्येनेतिवाच्यमप्रयोजकत्वात्॥९८॥ भिन्नविभक्तिनिर्देशेनैव तल्लाभाच्च च॥९९॥ अतिसुलभ इष्टद इतिविशेषणयोः पुनरपि सामानाधिकरण्याच्च॥१००॥ न चोपमानोपमेययोः सामान्यधर्मस्यैकपदेनोपादानमित्यपि नियमः, प्रकृत एव सहस्राण्यष्टादशेतिपदत्रयेण तन्निर्देशादत एवा'ष्टनः संज्ञाया'मित्यात्वं नेत्यभियुक्ताः॥१०१॥ न च पूर्वोक्तमिथोविरोधवर्णने तत्र तत्राचार्यचरणोक्तिविरोधः। 'शब्दार्थसङ्गतीनां च स्पष्टा तत्र विरुद्धते'तिपूर्वं प्रतिज्ञायानास्थया तदुक्तेः॥१०२॥ न चानुक्रमणिकाध्यायेजामिलोपाख्यानानुक्तिविरोधः, नरकशेषत्वात्तत्प्रकरणस्य नरकवर्णनानुक्रमणेनैव तदनुक्रमणादविरोधात्॥१०३॥ अत्र तु सर्वत्रापि देशेष्वैतिह्यप्राप्त्यैव तेऽविगीता इति तदेव विगीतं माध्वाचार्यादिग्रन्थपर्यालोचनात्, ततो हि अलेख एवैषामुपलभ्यते॥१०४॥ यच्च च प्राचीननवीनटीकासम्मत्या सिद्धेऽविगीतत्वे विगीतत्ववाद एव विगीत इति तदपि न, साम्प्रदायिकानामेकवाक्यतायामसम्प्रयिवाक्यानामेव.. विगीततासम्पत्तेः प्रतिवादे निग्रहस्थानत्वाच्च च॥१०५॥ यदपि श्रीवृन्दावने तल्लीलास्थानप्रसिद्ध्या स्वेष्टं साधयन्ति तच्चासाधीयः, इदानीं प्राचीनस्थानानां विप्रकलितत्वेनेदानीन्तनकल्पितलीलानुसरणेन च पुराणान्तरप्रसिद्धकल्पान्तरीयलीलानुसारितया च स्थानानामदिष्टसिद्धिविघातकत्वाभावात्॥१०६॥ न च स्यात्त्रिशतीरूपं पात्रादिष्वस्य कल्पनात् त्रियुगं च त्रिभुवनं त्रिपूर्वं दृश्यते बहु॥१०७॥ न चेदेतच्छ्रीधरीयं पद्यं प्राचां भविष्यति प्रमितं श्रीधरेणो चेत् ते रूपं किं न.सस्तुतं स्तुतिर्मूलेपि यस्यास्ति स्तुतं तदनुसारतः॥१०८॥ 'लघ्वक्षरं पूर्वं'मितिवाक्यं चापि विरुध्यते॥१०९॥ अत एव पुराणान्तरे 'ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसम्मितः हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा, गायत्र्या यस्य प्रारम्भस्तद् वै भागवतं विदुः, स्कन्धा द्वादश एवात्र कृष्णेन विहिताः शुभाः, द्वात्रिंशत्त्रिशतं पूर्णमध्याः परिकीर्तिता' इति। अत्र पूर्णपदस्वारस्याद् यथोक्तमेवाभिप्रेतम्। ननु तर्हि 'पञ्चत्रिंशोत्तराध्यायास्त्रिशतीयुक्त ईश्वर' इति कथं कैश्चिदुच्यते, तत्रोच्यते, श्रीमद्भागवतस्याष्टादशपुराणगणनायां पञ्चमत्वस्य विजयवादे साधितत्वात् वृत्तौ सङ्ख्यावाचकानां पूर्णप्रत्ययार्थतायाः 'आचतुरं हि मे पशवो मिथुनायन्त'इत्यादौ दर्शनात् पञ्चशब्दस्य पञ्चमे भागवते त्रिंशोत्तरा नाम द्वात्रिंशत्त्रिशतीयुक्ता इतिव्याख्येयम्, परे तु कृत्यभावेपि पूर्णार्थतामिच्छन्ति, ज्योतिःशास्त्रे धर्मशास्त्रे

भक्तसङ्कल्पपरिपूरणाय स्वसङ्कल्पत्याग इतिचक्रवर्त्युक्तं युक्तं विकल्पाक्षमत्वात्। तथा हि किं भक्तसङ्कल्पं भगवान् जानाति न वेति, आद्ये ज्ञात्वा स्वसङ्कल्पे निःप्रयोजने मानाभावः ॥६४॥ द्वितीये सार्वज्ञ्यहानिः ॥६५॥ न चैवमेवेयं लीलेतिवाच्यं प्रयोजकाविरहात् ॥६६॥ यत्तु च दिष्टपदं कालवाचि 'कालो दिष्टो'पीतिकोशात्, कालश्च लौकिको लीलासम्बन्धीति तदपि चिन्त्यं तथापि विस्मयानुपपादनात् ॥६७॥ 'जह्नुपुर्यं च कंसाद्या.' इत्यपि चिन्त्यं तत्र कंसाभावात् ॥६८॥ न च नारद्वारा सद्य एव वार्ताज्ञानमित्यपि युक्तं 'हरिस्तुण्डमविशद्' देवाश्चुक्रुशुः' 'गले तरसा ववृध' इतिसमन्वयाद् हरिवेगापेक्षया चाराणामधिकवेगाभावात ॥६९॥ किञ्च 'पूर्णोन्तरङ्गे पवनो निरुद्धो मूर्धन् विनिष्पाद्य विनिर्गतो बहि'रित्यसङ्गतं, अन्तरङ्गे देहमध्ये पवननिरोधे गलद्वारे ह्यवकाशाभावेन मूर्धस्थानान्तरादेव पवननिर्गमस्य वक्तव्यत्वात् ॥७०॥ न च मुखप्रवेश एव तदितियुक्तं द्वारान्तरद्वारापि निर्गमनसम्भवात् ॥७१॥ 'तरसा ववृधे गले' इतिपूर्ववाक्यविरोधाच्च च ॥७२॥ द्वितीयेध्याये'पि 'गुह्यं वदामि ते' इत्यत्र गुह्यत्वे कारणं चिन्त्यं कारणान्तरं तु प्रागेव दूषितम् ॥७३॥ 'प्राप्तः परं विस्मयमि'त्यत्र पूतनादिमोक्षे कुतो न विस्मय इत्यपि चिन्त्यम् ॥७४॥ 'काप्यदृष्ट्वे'त्यत्र दर्शनाभावोत्तरकालिकं ज्ञानं सार्वज्ञ्यं विहन्ति ॥७५॥ न च पूर्वश्लोकेऽदृष्ट्वा वत्स इत्यन्वयः ॥७६॥ दुर्बोधत्वात् ॥७७॥ शब्दास्वास्थ्याच्च ॥७८॥ पूर्वश्लोकेपि तत्पदस्य सत्त्वाच्च ॥७८ अपि च 'स्नेहवल्ल्यब्दमन्वहं शनैर्निःसीम ववृधे' इत्यत्र शनैर्वृद्धौ कारणं चिन्त्यम् ॥७९॥ क्लिष्टयोजनयार्थान्तरकरणं त्वनुपदमेव दूषितम् ॥८०॥ श्रीबलदेवस्याज्ञानकल्पनं चात्यन्तायुक्तं पूर्वोत्तरप्रकरणे तददर्शनात् ॥८१॥ न च तस्य भगवत्त्वं नेतिशङ्क्यं 'अहो अमी देववरे'त्यग्रे भगवतैव तथास्तूयमानत्वात् ॥८२॥ किञ्च भगवताग्रजत्वेन स्वीकारात् तद्वञ्चनानौचित्यम् ८३॥ नापि श्रीदामादिवियोगदुःखाभावायेति युक्तं स्वस्य तत्कृतो नेति पर्यनुयोगार्हत्वात् ॥८४॥ बलदेवस्यापि भगवत्त्वेन विरक्तत्वाच्च च ॥८५॥ वर्षात्मकस्य कालस्य त्रुटित्वे कोपपत्तिरितिचिन्त्यम् ॥८६॥ किञ्चेन्द्रादीनां भगवतापमाने कृतेऽपमानजन्येर्ष्यावेशकृतो भगवत्स्वरूपविषयको मोहो भवतु नाम तत्र भगवतो ब्रह्मणश्च तदभावात् प्रत्युत तदपराधचिकीर्षा न घटते ॥८७॥ किञ्च पूर्वार्धे स्वतो लीलेतिसिद्धान्तादपि दोष इत्यप्याहुः ॥८८॥ अपि च गोपीनां भगवति परमानन्दे सहजशृङ्गाररसाङ्गीकाराद् भगवतो गोपरूपत्वे तन्मातृणामवचनानर्हभावोदयापत्तिर्भेदन्मते स्यात् ॥८९॥ अलन्मते नु सुतरामेषां विगीततरं प्रकरणाद्यर्थविरोधाच्च च ॥९०॥ एष्वध्यायेषु प्रपञ्चविस्मरणपूर्वकभगवद्रामत्किरूपस्य स्कन्धार्थस्याभावश्च ॥९१॥ ब्रह्मणो निरुद्धस्यानिरुद्धतां विधाय पुनर्निरोधकरणे पिष्टपेषणापत्तेश्च ॥९२॥ ब्रह्मणो राजसत्वेन तामसप्रकरणविरोधाच्च च ॥९३॥ अत एव बोपदेवपण्डितैरपि प्रथमेऽष्टादशाध्यायास्तत्र प्रकरणत्रयमित्यादिरित्या

गणितम्, तेषामपि पञ्चत्रिंशादित्युपलभ्यमानेऽरुचिरिति हि गम्यते। एवं च नान्यादृशतदुक्तप्रकारेभिनिवेष्टव्यम्॥९४॥ न च तैस्त्रयोध्यायाः प्रक्षिप्ता इति किं नोक्तमितिवाच्यं चिरन्तनप्रसिद्ध्या द्वात्रिंशज्ज्ञानेपि के प्रक्षिप्ता इति तैरविचक्षणात्॥९५॥ एवमेव श्रीधरस्वामिभिरपि सौन्दर्यादिज्ञानाद्वा व्याख्याता अध्याया इत्यपि वक्तुं शक्यम्॥९६॥ अत एव द्वात्रिंशत् त्रिशतञ्चेतिपदद्वयस्वरसाच्च चकारसार्थक्यम्॥९७॥ न च चकारो भिन्नक्रमबोधनार्थं पूर्वार्धे सामानाधिकरण्येन च योन्यत्र वैयधिकरण्येनेतिवाच्यमप्रयोजकत्वात्॥९८॥ भिन्नविभक्तिनिर्देशेनैव तल्लाभाच्च॥९९॥ अतिसुलभ इष्टद इतिविशेषणयोः पुनरपि सामानाधिकरण्याच्च॥१००॥ न चोऽमानोपमेययोः सामान्यधर्मस्यैकपदेनोपादानमित्यपि नियमः, प्रकृत एव सहस्राण्यष्टादशेतिपदत्रयेण तन्निर्देशादत एवा'ष्टनः संज्ञाया'मित्यात्वं नेत्यभियुक्ताः॥१०१॥ न च पूर्वोक्तमिथोविरोधवर्णने तत्र तत्राचार्यचरणोक्तिविरोधः। 'शब्दार्थसङ्गतीनां च स्पष्टा तत्र विरुद्धते'तिपूर्वं प्रतिज्ञायानास्थया तदुक्तेः॥१०२॥ न चानुक्रमणिकाध्यायेजामिलोपाख्यानानुक्तिविरोधः, नरकशेषत्वात्तत्प्रकरणस्य नरकवर्णनानुक्रमणेनैव तदनुक्रमणादविरोधात्॥१०३॥ अत्र तु सर्वत्रापि देशेष्वैतिह्यप्राप्त्यैव तेऽविगीता इति तदेव विगीतं माध्वाचार्यादिग्रन्थपर्यालोचनात्, ततो हि अलेख एवैषामुपलभ्यते॥१०४॥ यत्तु च प्राचीननवीनटीकासम्मत्या सिद्धेऽविगीतत्वे विगीतत्ववाद एव विगीत इति तदपि न, साम्प्रदायिकानामेकवाक्यतायामसम्मयिवाक्यानामेव, विगीततासम्पत्तेः प्रतिवादे निग्रहस्थानत्वाच्च च॥१०५॥ यदपि श्रीवृन्दावने तल्लीलास्थानप्रसिद्ध्या स्वेष्टं साधयन्ति तच्चासाधीयः, इदानीं प्राचीनस्थानानां विशकलितत्वेनेदानीन्तनकल्पितलीलानुसरणेन च पुराणान्तरप्रसिद्धकल्पान्तरीयलीलानुसारितया च स्थानानामदिष्टसिद्धिविघातकत्वाभावात्॥१०६॥ न च स्यात्त्रिशतीरूपं पात्राद्दिष्वस्य कल्पनात् त्रियुगं च त्रिभुवनं त्रिपूर्वं दृश्यते बहु॥१०७॥ न चेदेतच्छ्रीधरीयं पद्य प्राचां भाविष्यति प्रमितं श्रीधरैर्नो चेत् ते रूपं किं न संस्तुतं स्तुतिर्मूलेपि यस्यास्ति स्तुतं तदनुसारतः॥१०८॥ 'लघ्वक्षरं पूर्व'मितिवाक्यं चापि विरुध्यते॥१०९॥ अत एव पुराणान्तरे 'ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसम्मितः हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा, गायत्र्या यस्य प्रारम्भस्तद् वै भागवतं विदुः, स्कन्धा द्वादश एवात्र कृष्णेन विहिताः शुभाः, द्वात्रिंशत्त्रिशतं पूर्णमध्याः परिकीर्तिता' इति। अत्र पूर्णपदस्वारस्याद् यथोक्तमेवाभिप्रेतम्। ननु तर्हि'पञ्चत्रिंशोत्तराध्यायात्रिशतीयुक्त ईश्वर' इति कथं कैश्चिदुच्यते, तत्रोच्यते, श्रीमद्भागवतस्याष्टादशपुराणगणनायां पञ्चमत्वस्य विजयवादे साधितत्वात् वृत्तौ सङ्ख्यावाचकानां पूर्णप्रत्ययार्थताया 'आचतुरं हि मे पशवो मिथुनायन्त'इत्यादौ दर्शनात् पञ्चशब्दस्य पञ्चमे भागवते त्रिंशोत्तरा नाम द्वात्रिंशत्त्रिशतीयुक्ता इतिव्याख्येयम्, परे तु कृत्यभावेपि पूर्णार्थतामिच्छन्ति, ज्योतिःशास्त्रे धर्मशास्त्रे

तथा दर्शनात्, 'षट् चतुर्थ्यर्थे'तिसूत्रे चतुर्ग्रहण सार्थक पूरणार्थे मा भूदिति, अन्यथा पुराणान्तरीय द्वात्रिंशात्त्रिशत पूर्णमध्याया परिकीर्तिता' इत्यत्र पूर्णपदविरोधो दुरुद्धर, द्वात्रिंशत्त्रिशतमितिपाठवचन दामोदरा उदाजहु । केचित् तु पक्ष इति पक्षस्थाने पठन्ति, अ ये तु यथा वोपदेवेन 'प्रथमेष्टादशाध्याया' इत्यादिना यथाध्यायद्वयस्थाने कुत्र कुत्रक्य कृत्वा एवत्रिशोत्तरत्रिशती उच्यते, विद्यमानपञ्चत्रिंशत्सङ्ख्या नाद्रियते, तथा ध्रुवादिचरिते एकैकाध्यायस्य अध्यायद्वयता विदधते, एतेन वचनद्वयस्यापि भागवतानुक्रमण्या विरोध उद्धृत । केचित् तु नेम हरगौरीतन्त्रस्थ वचनम् प्रमाणयन्तीति दिक । स्यादेतत् । 'य एतत्पूतनामोक्ष'मितिपद्य तु केचन विगीतमाहुस्तेषेवं प्रष्टव्या न वयम् । न तु पूतना लोकबालघ्नी'त्यादिपद्के मानान्वितम् । पूर्वोत्तरग्रन्थयोर्हि सन्दश सुन्दरोन्यथा तेष्वपि श्लोकेषु 'तन्मातर' इतिरसुदर्वाक्षय इतिव्याचख्युरितिसुरोभिन्यां पद्यश्लोक-स्वरसाद् गोपीपरत्व न युक्तमिति तदाशय, इतोप्यधिक तत्र तत्राकरे द्रष्टव्यामिति दिक् ।

आन्ध्रो गङ्गाधरो भट्टः गिदागुरुकृपाबलः ।
अशुद्धबुद्धिशुद्ध्यर्थं जपमालां समाप्तवान् ॥१॥
अशुद्धबुद्धयो यायान विगीतान् ये न मन्वते ।
तद्वा. सम्पत्स्यते शुद्धा जपित्वा मालयांसकृत् ॥२॥

इत्यान्ध्रदेशीयगिदोपाह्वश्रीमद्गङ्गाधरभट्टकृता जपमालेय गुरुकृपाबलेन समाप्ता ।

---

इतिश्रीमद्भागवतीयदशमस्कन्धस्य नवत्यध्यायेषु द्वादशत्रयोदश-चतुर्दशाध्यायाना प्रक्षिप्तत्वसमर्थन

समाप्तम्

---

(स १९९२ का शु ५)